*The Adyar Library Series—No. 65*

GENERAL EDITOR :

G. SRINIVASA MURTI, B.A., B.L., M.B. & C.M., VAIDYARATNA

*Director, Adyar Library*

# SAṀKALPASŪRYODAYA

OF

# S'RĪ VEṄKAṬANĀTHA

WITH TWO COMMENTARIES

*PRABHĀVILĀSA AND PRABHĀVALĪ*

**Part II: Acts 6—10**

# SAMKALPASURYODAYA

OF

# S'RĪ VEṄKAṬANĀTHA

WITH THE COMMENTARIES

*PRABHĀVILĀSA OF AHOBALA*
*AND*
*PRABHĀVALĪ OF NṚSIṀHARĀJA*

EDITED BY

PANDIT V. KRISHNAMACHARYA

**Part II: Acts 6—10**

THE ADYAR LIBRARY
ADYAR, MADRAS
1948

# संकल्पसूर्योदयः

श्रीवेंकटनाथप्रणीतः

अहोबलकृतया प्रभाविलासाख्यया, नृसिंहराजकृतया
प्रभावल्याख्यया च व्याख्यया समेतः

पण्डितेन वे. कृष्णमाचार्येण
संशोध्य परिष्कृतः

द्वितीयो भागः, अङ्काः ६—१०

अडयार्पुस्तकालयात् प्रकाशितः
मद्रपुरी
१९४८

## PRELIMINARY NOTE

THE present work—*Saṁkalpasūryodaya*—of S'rī Veṅkaṭanātha who lived about 1268-1369 A.D. is an allegorical drama, the forerunner of which is the ***Prabodhacandrodaya*** of Kṛṣṇa Mis'ra who lived about the end of the eleventh century. This work is to Vis'iṣṭādvaita vedānta of S'rī Rāmānuja what ***Prabodhacandrodaya*** is to Advaita vedānta of S'rī S'aṅkara. The latter work is a drama in six acts where Kṛṣṇa Mis'ra links up the Advaita vedānta to Viṣṇu-bhakti (Devotion to Viṣṇu) and depicts the attainment of enlightenment and liberation (*mukti*) on the rising (*udaya*) of the moon of true knowledge (***Prabodhacandra***). ***Saṁkalpasūryodaya*** is a similar drama in ten acts where Veṅkaṭanātha links up Vis'iṣṭādvaita vedānta to Devotion to the Lord (*bhakti*) and Divine Grace; and depicts the attainment of enlightenment and liberation (*mukti*) on the rising (*udaya*) of the sun (*Sūrya*) of *Saṁkalpa*—Divine Resolve to secure the bliss of liberation for the bhakta or devotee. As may be expected in an allegorical drama, the ***Dramatis Personae*** are the forces of the Good Law formed by Viveka (Wisdom), Sumati (Good Sense), Puruṣa (Jīva), Viṣṇu-bhakti (Devotion to Viṣṇu), Saṁkalpa (Divine

Will or Grace) etc., battling with and conquering the forces of evil formed by Mahāmoha (The Great Illusion), Durmati (Evil Sense), Rāga (Attachment), Dveṣa (Hatred), Lobha (Greed), Durvāsanā (Evil Propensity) etc.

The present edition of the *Saṁkalpasūryodaya* is published with two reputed commentaries one of which has not been published hitherto, and the other is only half-published. The commentary called ***Prabhāvilāsa*** by Ahobalācarya is now published for the first time.

The second commentary is by Nṛsiṁharāja. Only part of it—for acts 1 to 5 only—was printed in Telugu characters and published in 1901 as No. 4 of Conjeevaram O. L. Institution Series. In this edition, the commentary is attributed to Bhāradvāja S'rīnivāsācarya though it is identical with that of Nṛsiṁharāja as found in the Adyar Library Manuscript (39. A. 16). In the Conjeevaram edition, an anonymous commentary was included for the acts 6 to 10 while the present edition contains Nṛsiṁharāja's commentary for the whole (1 to 10 acts) so that the whole of Nṛsiṁharāja's commentary is now published here for the first time.

Further details on this will be found in the Preface and on other related topics in the Foreword to the first part already published.

*1st October 1948* G. SRINIVASA MURTI,
*Honorary Director*

# ERRATA

| PAGE | LINE | CORRECT READING |
|---|---|---|
| 538 | 9 | शीतान्तः |
| 596 | 13 | आनुकूल्य |
| 637 | 14 | " षूङ्प्राणिप्रसवे " |
| 752 | 9 | बहुधा |
| 856 | 12 | त्रिषष्टिशततमे |
| 857 | 9 | योगसिद्धाः |
| 860 | 5 | गम्भीरः |
| 920 | 1 | शीतान्तः |

# षष्ठोऽङ्कः

## शुद्धविष्कम्भः

(ततः प्रविशति कञ्चुकी)

**कञ्चुकी**—अहं हि देवस्य महामोहस्य दर्पसंभवः स्तम्भो नाम सदागमप्रतिरोधकः प्रतिहारी । मम च,

**वलिभिरविरलाभिर्वर्ष्म सोपानकल्पं**
**द्रुतपदमधिरूढा दुर्निवारा जरेयम् ।**
**तदपि नियतिभून्ना तादृशी वेत्रयष्टिः**
**सह चरति मयासौ शैशवे संगृहीता ॥ १ ॥**

### प्रभाविलासः

अथ मध्यमपात्रप्रयोजितं शुद्धविष्कम्भमारभते—तत इति । **सदागमप्रतिरोधकः**; सतामागमः, आगमनं शास्त्रं च । "आगमस्त्वागतौ शास्त्रे" इति रत्नमालायाम् । **वलिभिरिति** । वार्धकपरिपाकेन देहे वलयो भवन्ति । अत एवाविरलाभिरित्युक्तम् । **सोपानकल्पमि**त्यधिरोहणसाधनत्वं गम्यते । **जरेति** नायिकासाम्यं व्यज्यते । **तदपि**; तथापि । **सह चरतीति** अनुकूलनायिकात्वं गम्यते । **शैशवे संगृहीतेति** त्यागायोग्यता गम्यते ॥१॥

### प्रभावली

अस्मिन्नङ्के विवेकेन पुरुषस्य संयमस्थानविशेषनिर्धारणं क्रियते । तत्र तावत् तदुपोद्घातत्वेनादौ विष्कम्भे महामोहस्य कञ्चुकी स्वदुःखकथनपूर्वकं

किंच,

**निःशङ्कसंचरणविघ्नविधायिनीभ्यां**
**निष्पीडितोऽस्मि [1]जरसा च नृपाज्ञया च ।**
**मध्योपलक्षितमनोरथभङ्गदीना**
**वाञ्छा न शाम्यति वयः सकलं प्रशान्तम् ॥ २ ॥**

**प्रभाविलासः**

**निःशङ्केति** । मध्ये उपलक्षितेन मनोरथभङ्गेन भीता । **न शाम्यती-त्यनेन**

"जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
जीविताशा धनाशा च जीर्यतोऽपि न जीर्यति ॥"

इति स्मारितम् ॥ २ ॥

**प्रभावली**

स्वकृत्यं कथयति—**ततः प्रविशतीत्यादि** । कञ्चुकः अस्य सर्वदास्तीति कञ्चुकी; द्वाःस्थः । अयं दर्पस्य तनयः **स्तम्भः** जडीभावः निरुद्योगता नाम पुरुषधर्मः । स्वाधिकारादि वर्णयति—**अहं हीत्यादि** । महामोहस्य प्रतिहारी । प्रतिहारो द्वारम्; तदस्य पाल्यत्वेनास्तीति प्रतिहारी द्वारपालः । दर्पात् संभवः; दर्पतनय इत्यर्थः; स्तम्भ इति नाम । स्वकृत्यमाह—**सदागमेति** । **सदागमाः** सच्छास्त्राणि, तेषां निवारकः । यद्वा सतां महतामागमस्य निवारकः । स्वदुःखकथनव्याजेन राजसेविनां दुःखं वर्णयति—**मम चेत्यादि** । **अविरलाभिः**; निबिडाभिः । **वलिभिः**; रेखाभिः । **सोपानकल्पम्**; सोपानशब्दोऽत्र सोपानवद्वाचकः; सोपानवद्भूमिसदृशम् । **मम वर्ष्म**; शरीरं कर्म । **दुर्निवारा**; अपरिहार्या । **इयं जरा**; केशादिविस्रंसनं जीर्णभावः । **द्रुतपदं** यथा तथा **अधिरूढा** । तथापि **नियतिभूम्ना**; विधिमहिम्ना । **शैशवे**; अतिबाल्ये । **संगृहीता तादृशी** स्वोदरभरणसाधनी इयं **वेत्रयष्टिः मया सह चरति**; इदानीमपि न जहातीति भावः ॥ १ ॥

एवं जरया पीडितस्य वयः सर्वमतीतम्; वाञ्छा तु न शाम्यतीत्याह—

[1] जरया—ग.

आस्तां तावदशेषदेहसाधारणागतिर्जरा[1] । "न हि जानपदं दुःखमेकः शोचितुमर्हति" इति नीतिविदः[2] । नृपाज्ञा तु निष्ठुरतरा ;

**तरतु विवित्सयाब्धिमधिरोहतु शैलतटीं**
**धमतु च धातुवर्गमभिगच्छतु शस्त्रमुखम् ।**
**तदिदमरुंतुदं यदुत बह्ववधाय भिया**
**धनमदमेदुरक्षितिभृदङ्कणचङ्क्रमणम् ॥ ३ ॥**

**प्रभाविलासः**

धनार्जनोपायेषु राजसेवैव दुःशकेत्याह—**तरत्विति** । **विवित्सया ;** वित्तलाभेच्छया । **अरुंतुदम् ;** मर्मस्पृक् । **भिया ;** राजतदधिकारिभयेन । **धनमदेन मेदुराणां** क्षीबानां **क्षितिभृतां** राज्ञाम् **अङ्कणे** गृहबाह्यप्रदेशे **चङ्क्रमणं** संचारः । अन्तः प्रवेशः किमुतेति भावः ॥ ३ ॥

**प्रभावली**

**निःशङ्केति** । निःशङ्कं यत् संचरणं तस्य विघातकारिणीभ्याम् । राजपरतन्त्राणां निःशङ्कं यथेष्टं संचरितुं न शक्यते राजा कदा आह्वास्यतीति भिया । जराक्रान्तस्यापि अशक्त्या निःशङ्कगमनं न लभ्यते । **जरसा ;** जरया । **नृपाज्ञया च** नितरां पीडितोऽस्मि । अथापीति शेषः । **मध्येन** उपलक्षितः ऊहितः **मनोरथभङ्गः** । यथा वार्धके मध्यो भग्नः, एवं मनोरथोऽपि भङ्क्ष्यतीत्यूहितुं शक्य इत्यर्थः । यद्वा मध्ये कार्यसिद्धेः प्रागेव दृष्टो यो मनोरथस्य भङ्गः, तेन दीनापीति भावः । **वाञ्छा तु वर्धते** । **वयः सकलं** बाल्ययौवनवार्धकाख्यं सर्वं निःशेषं गतम् ॥ २ ॥

**आस्तामिति** । सर्वशरीरेषु साधारणागतिर्जरा तिष्ठतु । तच्चिन्तनं न कर्तव्यम् । तत्र संमतिं दर्शयति—**न हीति** । **जानपदम् ;** जनपदो देशः,

[1] देह omitted—ख ; देहसाधारणगतिर्जरा—ग. घ.

[2] नीतिवादः—ख.

आः कष्टम् ;

प्रत्यङ्गकम्पपरिनर्तितकञ्चुकेऽस्मिन्
[1]पर्याप्तरूढपलिते परतन्त्रपिण्डे ।
अक्षीणरागमजरामरजीविताशं
मामेव हन्त हसतीव ममान्तरात्मा ॥ ४ ॥

प्रभाविलासः

**प्रत्यङ्गेति । प्रत्यङ्गकम्पेन ;** प्रत्यवयवचलनेन परिनर्तितं कञ्चुकं यस्मिंस्तस्मिन् । **परतन्त्रपिण्डे ;** पराधीनदेहे ॥ ४ ॥

**प्रभावली**

तत्संबन्धि दुःखं तन्मध्यगतेनैकेन शोचितुं नार्हमिति न्यायविद आहुरिति शेषः । जरानृपाङ्गयोरतिशयेन नृपाङ्गैव निष्ठुरतरा । तदिदमुपपादयति—**तरत्विति । विवित्सया ;** लब्धुमिच्छया ; लोभेनेत्यर्थः । **अब्धिं तरतु ;** समुद्रं यानपात्रेण संतरतु । इदमप्यरुंतुदं दुःखकरं न भवति । सर्वत्राप्यनुज्ञायां लोट् । **शैलस्य तटीं** लोभेन **अधिरोहतु** । तदपि सह्यम् । **धातुवर्गं** लोहादिकं **धमतु ;** मूषया पुटपाकं करोतु । तदप्यनुमन्यते । **शस्त्रमुखम् ;** संग्रामम् । **अभिगच्छतु** लोभेन । तदप्यस्तु । **तदिदमेवारुंतुदम् ;** मर्मवेधि, दुःखकरम् । **भिया ;** कदा दण्ड आपतिष्यतीति भिया । **बह्ववधाय ;** अत्यन्तावधानेन सह । धनगर्वेण **मेदुराः** सान्द्रा ये **क्षितिभृतः**, तेषाम् **अङ्कणेषु** अवरोधस्थलीषु **यच्चङ्क्रमणं** संचरणं, तदिदमेव दुःसहमित्यर्थः ॥ ३ ॥

एवं दुःखकरेऽपि शरीरे स्थिरजीविताशया स्वं निन्दति—**आः कष्टमित्यादि । प्रत्यङ्गं कम्पेन** वार्धकप्रयुक्तेन **परिनर्तितं कञ्चुकं** यस्मिन् । **पर्याप्तं** यथा तथा **रूढं पलितं** जराशौक्ल्यं यस्मिंस्तस्मिन् । पराधीनशरीरे **अक्षीणः** परिपूर्णो **रागो** यस्य । **अजरामरा ;** जरामरणवर्जिता, नित्येत्यर्थः, जीविते जीवने आशा यस्य तम् । **मामेव ममान्तरात्मा** मम मनः, यद्वा अन्तर्यामी पुरुषः **हसतीव । हन्तेति** खेदे ॥ ४ ॥

[1] पर्यायरूढ—क.

(सनिश्वासं विचिन्त्य) निरधिकारतैव नूनं सुखस्याधिकारः। अथवा, किमनेन महामोहपरवशस्य मे मुधा निर्वेदेन? स्वतन्त्रस्य तीक्ष्णदण्डस्य स्वामिनः प्रेषणे[1] स्थातव्यम्। अतिनिपुणपरिजनोचितं च नित्यमाचरितव्यम्। अद्य खलु देवो महामोहश्चारचक्षुषा[2] विपक्षवृत्तान्तं[3] दिदृक्षमाणो विपक्षभूमिषु कल्मषप्रवर्तनाय सर्वधर्मनिर्मूलने कलौ प्रस्थापिते, प्रतिबलभेदनोपायकोविदं पाकशासनादिषु पशुपक्ष्यादिषु चाविशेषेण निरङ्कुशगतिं विघ्ननामान[4]मपसर्पमपसर्प्य सदसद्वायं किं वदिष्यतीति संदेहदोलाधिरोहतरलिताशयस्तत्प्रत्यागतिमावेदितुमावेदयितुं च मामादिक्षत्। स चायं विघ्नः सत्वरपरिक्रान्तयमनियमादिस्थानपञ्चकः, [5]तत्र तत्र संनिहितैः

**प्रभाविलासः**

**निरधिकारतेति;** अनेन "सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्" इति स्मारितम्। **अपसर्पम्;** चरम्। **अपसर्प्य;** प्रेष्य।

**प्रभावली**

**सनिश्वासम्;** निश्वस्येत्यर्थः। **निरधिकारतैव;** अधिकाराराहित्यम्, स्वेच्छया तूष्णीमवस्थानमित्यर्थः। **सुखस्याधिकारः;** हेतुः। **मुधा निर्वेदेन;** व्यर्थचिन्तया। तत्र हेतुः—**स्वतन्त्रस्येति**। क्रूरशासनस्य प्रेषणे; प्रेषितकृत्ये। **अतिनिपुणो** यः परिजनः, **तदुचितं** तद्योग्यम्। **दिदृक्षमाणः;** द्रष्टुमिच्छुः। शत्रुभूमिषु पुण्यक्षेत्रेषु दोषप्रवर्तनाय **प्रस्थापिते** प्रेषिते सति। **प्रतिबलं** प्रतिपक्षः, तस्य **भेदनोपाये** समर्थम्। देवासुरपशुपक्ष्यादिषु सर्वत्राविशेषं यथा तथा निर्विघातगतिम्। **अपसर्पम्;** चरमित्यर्थः। **अपसर्प्य;** प्रस्थाप्य। **अयम्;** विघ्ननामा चरः। **सत्;** शोभनम्। **असत्;** अशोभनं वा। किमागत्य वदिष्यतीति संदेहाधिरोहेण चञ्चलचित्तः। तस्य विघ्नचरस्य प्रत्यागमनं ज्ञातुं स्वस्मै निवेदयितुं **चादिक्षत्** आज्ञापितवान्। **सत्वरं** यथा तथा परिक्रान्तयमनियमासनप्राणा-

[1] प्रेक्षणे—ग. [2] चारेण चक्षुषा—क. ग. [3] विवेकवृत्तान्तं—क.
[4] अपसर्पम् omitted—क. [5] तत्र omitted—क.

कुशलाचारैः सर्वतः प्रतिहतगतिः संप्रति [1]संयमारम्भसंभृतसंरम्भं [2]देवं विवेकं स्यन्दने दवीयानेव दृष्ट्वा प्रत्यागतः स्वामिसंदर्शन-समयप्रतीक्षः समया शुद्धान्तमवतिष्ठते । यथादृष्टार्थवादी चासौ । तथा चेदानीं तदुक्तमध्यक्षेण [3]संवदते । यदुत—

**मनोरथरथारूढो विवेकस्तर्कसारथिः ।**
**दिदृक्षुः संयमस्थानमितः समभिवर्तते[4] ॥ ५ ॥**

तदहमपि यथादिष्टमाचरामि ।

**(इति निष्क्रान्तः)**

शुद्धविष्कम्भः



प्रभाविलासः

**कुशलाचारैरिति ;**

"मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् ।
जपतां जुह्वतां चैव विनिपातो न विद्यते ॥"

इति स्मारितम् । **मनोरथेति** । **तर्कः** ; व्याप्यारोपेण व्यापकारोपः ॥ ५ ॥

**शुद्धविष्कम्भ इति,** "प्राकृतामिश्रणाच्छुद्धः" इत्युक्तेः ।

शुद्धविष्कम्भः



**प्रभावली**

यामप्रत्याहाराख्यस्थानपञ्चकः तत्र तत्र स्थानेषु **संनिहितैः** प्राप्तः मङ्गलाचरणैः **सर्वत्र प्रतिहतगतिः**, अवकाशमलभ्यमान इत्यर्थः ; **संप्रति** अद्य पुरुषस्य

[1] समाधिसमारम्भ—क.
[2] स्यन्दनेन सह देवं विवेकं—क. ख.
[3] संवदति—घ ; संघटते इति प्रभावलीपाठः
[4] एवाभिवर्तते—ख.

(ततः प्रविशति यथानिर्दिष्टो विवेकः)

**विवेकः**—अये सूत, आहार्यहेतुमुखेनाप्यन्ततः सूनृत-

### प्रभाविलासः

सारथितर्कौ तन्त्रेण निदर्शयति—अये इत्यादिना । आहार्यहेतु-मुखेन कृत्यप्ररोचनार्थं युक्तिकल्पनेऽपि अन्ततः सूनृतवादिना सत्यपर्यव-सितेन ; अन्यत्र आहार्यहेतुः 'यदि धूमो न स्यात' इति विद्यमानस्यैव धूमस्याभावारोपः । **अन्ततः सूनृतवादिना ;** तत्त्वनिर्णयफलेनेत्यर्थः ।

### प्रभावली

**समाध्यारम्भे** संपन्नोद्योगम् **स्यन्दनेन** सह ; स्यन्दनारूढं दृष्ट्वेत्यर्थः । निराशतया प्रतिनिवृत्यागतः **स्वामिनो** महामोहस्य संदर्शनसमयं प्रतीक्षमाणः **समया शुद्धान्तं** शुद्धान्तस्यावरोधस्य समीपे **अवतिष्ठते** । **असौ** विप्रश्च **यथादृष्टार्थवादी** भवति । **इदानीं तदुक्तं विप्रोक्तं सर्वं तथाच** उक्तप्रकारेणैव **अध्यक्षेण** प्रत्यक्षेण **संघटते** संगच्छते । तदुक्तं मया प्रत्यक्षेणानुभूयत इत्यर्थः । यदुत ; यस्मात् । **मनोरथेति** । **तर्कः** विचाररूपः प्रमाणानुग्राहकत्वेनोक्तः सारथिर्यस्य स सन् पुरुषस्य **संयम-स्थानं** द्रष्टुकामः **इतः** अस्मदभिमुखमायाति ॥ ९ ॥

**यथादिष्टम् ;** यथाज्ञप्तम् । **शुद्धविष्कम्भः ;** प्राकृतभाषाया अमिश्रणात् ।

### शुद्धविष्कम्भः



**यथानिर्दिष्टः ;** मनोरथरथारूढः तर्कसारथिश्च सन् । **अये** इति परिजन-संबोधनम् । **असौ मे मनःपूर्वो रथः सुपथा संचरते ;** निःशङ्कं प्रवर्तत इत्यर्थः । "समस्तृतीयायुक्तात" इत्यात्मनेपदम् । केनेत्यत्राह—**त्वयेति** । कीदृशेनेत्यत्राह—**आहार्यहेतुमुखेनापीति** । **आहार्यं** आरोपितो **हेतुर्मुखं** यस्य तेन । तथाप्यन्ततः **सूनृतवादिना ;** निश्चयजनकेनेत्यर्थः । अपिर्विरोधे ।

वादिना निष्प्रतिघवृत्तिना नियमभूयिष्ठेन [1]परानुकूल्यं त्यजता तदनिष्टप्रसञ्जकेन तद्विपर्ययपर्यवसायिना त्वयासौ मे मनःपूर्वो रथः सुपथा संचरते ।

तर्कः—देव, अहमपि खलु त्वदायत्तप्रसरः । अपिच,

**स्वपक्षपरपक्षादीन् विविङ्क्ते यदि न त्वया ।**
**कृत्याकृत्यविवेकान्धः किं करिष्यति पूरुषः ॥ ६ ॥**

**प्रभाविलासः**

**निष्प्रतिघवृत्तिना;** अप्रतिहतव्यापारेण; अन्यत्र प्रतितर्काप्रतिहतेन । **नियमभूयिष्ठेन;** निम्नादिदेशेषु प्रग्रहसंकोचादिनियमबाहुल्यवता; अन्यत्रानुपाधिकव्याप्तिमता । **परानुकूल्यं त्यजता;** शल्यादिवत् सपत्नानुकूल्यमनाचरता; अन्यत्र प्रतिवाद्यननुकूलेन । **तदनिष्टप्रसञ्जकेन;** शत्रुप्रतिवाद्यनिष्टसंपादकेन । **तद्विपर्ययः;** शत्रुनाशः; 'तस्मादस्ति वह्निः' इति साध्यनिर्णयश्च, तत्र पर्यवसायिना । एवं तर्काङ्गपञ्चकोक्तिः । तदुक्तम्—

"व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये ।
अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम् ॥"

इति ॥ ६ ॥

**प्रभावली**

**निष्प्रतिघवृत्तिना;** प्रतिकूलतर्करहितेनेत्यर्थः । **नियमः;** साध्यसाधनयोर्व्याप्तिः, तत्सहितेन । भूयिष्ठशब्देनानौपाधिकत्वं सूचितम । **परानुकूल्यं त्यजता;** प्रतिवाद्यनिष्टप्रसञ्जकेन । **त्वदायत्तप्रसरः;** तर्कप्रवृत्तिरपि विवेकाधीनेत्यर्थः । अथ पुरुषस्य स्वपक्षपरपक्षादिविभागोऽपि त्वदधीन इत्याह—**अपिचेति** । आदिशब्देन साधनदूषणादयो गृह्यन्ते । **विविङ्क्ते;** विवेचयति ॥६॥

[1] परानुकूल्यत्यजा—ख.

**विवेकः**—वयं खलु सूत, इदानीं वशीकृतसर्वेन्द्रियस्य पुरुषस्य धारणादिसिद्धिसाधकं स्थानमन्वेषयन्तः सर्वलोकपरिक्रम-क्रमेण मध्यमलोकावलोकनाय मेरुशिखरमधिरूढाः ।

(समन्ततोऽवलोक्य)

**स्फुरदरपरिपाटीचारुशैले विशाले**
**गुरुणि धरणिचक्रे चक्रवालाद्रिनेमौ ।**
**दधति जलधयोऽमी सप्त संपूर्णवृत्ताः**
**प्रचितविविधपट्टस्पष्टसंख्यामभिख्याम् ॥ ७ ॥**

### प्रभाविलासः

**स्फुरदिति** । स्फुरतामराणां परिपाटी अनुक्रमो येषाम्; ते च ते चारुशैलाः प्रत्यन्तपर्वताः यस्य तस्मिन् । ते चोक्ता विष्णुपुराणे—

"पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ।
विपुलः पश्चिमे पार्श्वे सुपर्वा चोत्तरे स्थितः ॥"

इति ॥ ७ ॥

### प्रभावली

सांप्रतिकीं स्वावस्थामाह—**वयं खल्वित्यादिना** । **वशीकृतसर्वेन्द्रियस्य**; यमनियमादिस्थानपञ्चकारूढस्येत्यर्थः । **धारणादीनां** धारणध्यानसमाधीनां सिद्धि-करम् । परिक्रमस्यानुपूर्व्या **मध्यमं लोकं** भूलोकमवेक्षितुमित्यर्थः । भूमिं वर्णयति—**स्फुरदिति** । **स्फुरताम् अराणाम्**; अराः चक्रस्य नाभिनेमिव्याप्ता बन्धविशेषाः, तेषां परिपाटी प्रक्रिया, तया चारवः शैलाः प्रत्यन्तपर्वताः यस्मिन् । **चक्रवालाद्रिः**; लोकालोकपर्वतः, स एव नेमिः प्रधिः प्रधिस्थानीयो यस्मिन् । धरणिमण्डलरूपे चक्रे । **अमी सप्त जलधयः** । **संपूर्णम्** अखण्डं **वृत्तं** मण्डलं येषां ते । **प्रचितैः** बद्धैः **विविधैः पट्टैः** रथचक्रबद्धैः स्वर्णलोहादिमयैः दण्डैः स्पष्टं **संख्यं** युद्धं यस्याः स्ताम् । **अभिख्यां** शोभां **दधति** ॥ ७ ॥

इदं हि त्रिगुणमरुकान्तारगनागनखेदनिर्वेदविधुराणां कामकामानां किमपि विश्रमस्थानम् । अयं च—

**भुजगपतिनालविधृते भूपद्मे कर्णिकारूपः ।**
**विलसति केसरभूधरपरिवृततनुरत्र काञ्चनक्ष्माभृत् ॥ ८ ॥**

प्रभाविलासः

**भुजगेति** । भुजगपतिः शेष एव नालः । **कर्णिकारूप इति;** अनेन "भूपद्मस्यास्य शैलोऽसौ कर्णिकाकारसंस्थितः" इति वचनं स्मारितम् । **केसरभूधराः;** नितान्तचारुकुञ्जप्रभृतयः । तदुक्तम्—

"नितान्तश्चारुकुञ्जश्च कुररी माल्यवांस्तथा ।
वैकङ्कप्रमुखा मेरोः पूर्वतः केसराचलाः ॥
त्रिकूटशिखरी चैव पतङ्गो रुचकस्तथा ।
निषधाद्या दक्षिणतस्तस्य केसरपर्वताः ॥
शिखिवासाः सवैदूर्यः कपिलो गन्धमादनः ।
जारुधिप्रमुखास्तद्वत्पश्चिमे केसराचलाः ।
शङ्खकूटोऽथ ऋषभो हंसो नागस्तथा परः ।
काराञ्जनाद्याश्च तथा उत्तरे केसराचलाः ॥"

इति ॥ ८ ॥

प्रभावली

**इदम्**; भूमण्डलम् । **त्रिगुणं** त्रिगुणाख्यप्रकृतिविकारभूतस्वर्गभूलोकादिकं, तदेव **मरुकान्तारं**, तत्र **गतागतेन** यः **खेदः**, तेन जनितेन **निर्वेदेन** विषादेन **विधुराः** रहिताः; अमुमुक्षव इत्यर्थः । अत एव **कामकामानाम्**; क्षुद्रं फलं कामयन्त इति कामकामाः, तेषाम् । अयं च; महामेरुः । **भुजगपतिः** शेषः, स एव नालः, तेन **विधृते भूपद्मे केसरपर्वताः** गन्धमादनादयः, तैः परिवृततनुः **कर्णिकारूपः** कर्णिकारूपेण **विलसति** प्रकाशत इत्यर्थः ॥ ८ ॥

असाविह समंततो [1]निपतदलिपटलविरुतमुखरपरिसरा [2]प्रफुल्ल-वकुलमुकुलप्रणालिकामुखगलितमधुरमधुधाराधोरणीपूर्यमाणमूलाल - वाला प्रत्यासीदति विबुधसिन्धु[3]सविधवनतरुवाटिका। [4]इह च—

निष्प्रत्यूहसमुन्नमन्मदसिराकण्डूलगण्डस्थली-
हेलाधूननधूतभृङ्गपटलीमूर्च्छन्मृषाचामरः।
मन्दान्दोलितमन्दराचलतटीनिष्ठ्यूतधातुच्छटा-
सिन्दूरद्युतिबन्धुरो [5]विहरति स्तम्बेरमग्रामणीः॥ ९॥

प्रभाविलासः

**आधोरणी**; प्रवाहः। **निष्प्रत्यूहेति**। निष्प्रत्यूहमनर्गलं यथा तथा समुन्नमन्मदाभिः निर्गच्छन्मदाभिः सिराभिः; यद्वा समुन्नमन्तीभिः उच्छूनाभिः मदसिराभिः कण्डूलयोः गण्डस्थलयोः हेलाधूननेन धूता भृङ्गपटल्येव मूर्च्छन् वीजन् मृषाचामरो यस्य सः। **बन्धुरः**; सुन्दरः। **स्तम्बेरम-ग्रामणीः**; ऐरावतः॥ ९॥

प्रभावली

अत्र गङ्गातटवृक्षवाटिका प्रत्यासन्नेत्याह—**असाविति**। **असौ**; वाटिका। **इह**; मेरौ। **विरुतैः** शब्दैः **मुखरः** शब्दायमानः **परिसरः** समीपप्रदेशः यस्याः सा। प्रफुल्लानि विकसितानि मुकुलान्येव प्रणालिकाः, तासां मुखेभ्यो गलिताः स्रुताः मधुधारायाः धोरण्यः कुल्याः, ताभिः पूर्यमाणानि तरुमूलालवालानि यस्याम्। आलवालं जलाधारमण्डलम्। **सविधम्**; समीपम्। **वाटिका**; स्थली। तत्रैरावतविहरणं दर्शयति—**इह चेति**। निर्विघ्नं यथा तथा उद्गच्छन्त्या मदनाड्या कण्डूतिमत्योः **गण्डस्थलयोः** लीलाधूननेन चलिता या भृङ्गपटली

[1] परिपतदलि—क. [2] प्रफुल्लतरमुकुल—ग.
[3] सविधविविध—ग. [4] अत्र च—क.
[5] विहरते—घ.

अपिच,

क्षरत्यारादैरावणकरटिशुण्डाचुलकिता
कथंचित्संतानद्रुमकिसलयासादितलया ।
स्मरस्मेरोत्कण्ठाविहरदमरीलोलकबरी-
जरीजृम्भन्मालामधुलवहरा[1] वातलहरी ॥ १० ॥

प्रभाविलासः

**क्षरतीति** । **क्षरति**; प्रवहति । **शुण्डा**; हस्तः । **चुलकिता**; आचूष्य विसृष्टा । अनेन शैत्योक्तिः । **आपादितलया**; संपादितमान्द्या । अनेन मान्द्योक्तिः । स्मरस्मेरोत्कण्ठया मदनोद्रेकजनितोत्साहेन विहरन्तीनाममरीणां लोलकबरीषु जरीजृम्भतीनां विकसमानानां मालानां स्रजां मधुलवान् हरतीति तथोक्ता । तेन सौरभ्योक्तिः ॥ १० ॥

प्रभावली

सेव परितः प्रसरन् **मृषाचामरः** कल्पितचामरो यस्य सः । **मन्दमान्दोलितस्य** चलितस्य, **मन्दराचलस्य** तव्याः **निष्ठ्यूता** निर्गच्छन्ती या **धातुच्छटा**, गैरिकधूलीपटलं, तदेव **सिन्दूरं** गजालंकरणचूर्णं, तस्य **द्युत्या** मनोहरः । **स्तम्बेरमाः** गजाः, तेषां श्रेष्ठः, ऐरावत इत्यर्थः । इह **विहरति** ॥ ९ ॥

किंचात्र मन्दमारुतो वातीत्याह—**क्षरतीति** । **ऐरावणश्चासौ करटी च** । करटो गजगण्डं, तदस्यास्तीति करटी वारणः । तस्य शुण्डया पीता । **संतानद्रुमस्य किसलयैः** कथंचिदापादितविच्छेदा, प्रतिहतेत्यर्थः । **स्मरेण** विकसन्त्या **उत्कण्ठया** औत्सुक्येन विहरन्तीनाममरस्त्रीणां **लोला** या **कबरी** केशपाशबन्धः, तत्र जरीजृम्भती या माला, तस्याः मकरन्दांशं हरतीति हरा । वातस्य वीचिः **आरात्** समीपे **क्षरति** वातीत्यर्थः । अत्र पादत्रयेण यथाक्रमं मान्द्यशैत्यसौरभ्याण्युक्तानि । पूर्वोक्ताभिर्वर्णनाभिर्मेरुः समाधिस्थानं न भवतीति सूचितम् ॥ १० ॥

[1] हरी—क.

**तर्कः**—(स्वगतम्) रत्नसानुरामणीयकलग्नचित्तं महाराजं प्रक्रान्तकार्ये संत्वरयामि[1]। (प्रकाशम्) देव, किमसौ केसरायमाणकेसरशैलपरिवृतकाञ्चनशिखरिकर्णिकास्थितेन भवता सर्वतः समीक्षितः क्षितिपद्मः ?

**विवेकः**—सत्पथवर्तिना[2] भवता प्रदर्शितः समीक्षित एव सामस्त्येन[3]। प्रस्तुतानुगुण्याय तु [4]प्रतीकशो विवेक्तव्यः। अथवा,

**द्विसप्तभुवनात्मकद्रुहिणगह्वरप्रेक्षणे**
**क्षितिस्तु परिशिष्यते तदिह सर्वधर्मास्पदे ।**
**त्रिवर्गपुटभेदनत्रिदशयोग्यवर्षत्यजं[5]**
**प्रवर्तय रथोत्तमं सपदि भारतैकोन्मुखम् ॥ ११ ॥**

प्रभाविलासः

**द्विसप्तेति**। गह्वरपदेनाण्डोदरप्रदेशो लक्ष्यते। **क्षितिः परिशिष्यत इति** तदतिरिक्तलोकानां भोगभूमित्वमुक्तम्। तत्रापि भारतवर्षमेव परिशिष्टमित्याह—**त्रिवर्गेति**। त्रिवर्गस्य पुटभेदनानि स्थानानि त्रिदशयोग्यानि भोगसाधनानि वर्षाणि किंपुरुषादीनि त्यजतीति तथोक्तम्। आह च पराशरः—

**प्रभावली**

विवेकोऽयं मेरुशोभासक्तचित्तो भवति। तमेनं प्रकृतकार्ये योजयामीत्याह—**रत्नेति**। **रामणीयकम्**; रमणीयत्वम्। **प्रक्रान्तकार्ये**; प्रकृतव्यापारे। **काञ्चनशिखर्येव** भूपद्मकर्णिका, तत्र स्थितेन भवता **असौ क्षितिपद्मः समीक्षितः** किमित्यन्वयः। **सत्पथवर्तिना**; सत्वे स्थितेन। **साकल्येन**; सामान्येनेत्यर्थः। **प्रस्तुतम्**; समाधिक्षेत्रनिर्धारणम्। **प्रतीकशः**; अवयवशः। **विवेक्तव्यः**; विवेचनीयः। **द्विसप्तभुवनानि**; चतुर्दश लोकाः; तदात्मकं यत् द्रुहिणगह्वरं ब्रह्माण्डं, तत्प्रेक्षणे शोधने विषये। सर्वधर्मानुष्ठानयोग्ये **इह**;

[1] संचारयामि—ग. [2] प्रवर्तिना—ख; परिवर्तिना—ग.
[3] साकल्येनेति प्रभावलीपाठः [4] प्रतीकतः—क. ख. [5] वर्षं त्यजन्—ग.

**तर्कः**—यदाज्ञापयति देवः ।

(इति वेगतो रथं प्रवर्तयति)

**विवेकः**—अये, तिष्ठ तिष्ठ । यावदयमनङ्गविजयिनो भवानीपतेरावासः कलधौतगिरिरवलोक्यते[1] ।

**तर्कः**—(रथवेगं स्थापयति)

**विवेकः**—(परितो दत्तदृष्टिः परामृश्य)

**विजितमनोभवेन विभुनाधिगतोऽपि सदा**
**निरुपधिसंयमस्य न पदं कलधौतगिरिः ।**
**गजमुखगण्डशैलघनदानकलिन्दसुता-**
**लहरिझलंझलाबहलकज्जलकम्बलितः[2] ॥ १२ ॥**

**प्रभाविलासः**

"यानि किंपुरुषादीनि वर्षाण्यष्टौ महामुने ।
न तेषु शोको नायासो नोद्वेगः क्षुद्भयादिकम् ॥
स्वस्थाः प्रजा निरातङ्काः सर्वदुःखविवर्जिताः ।
दश द्वादश वर्षाणां सहस्राणि स्थिरायुषः ॥"

इति ॥ ११ ॥

**विजितेति । विभुना**; शिवेन । **कम्बलितः**; संजातकम्बलः । अनेन शैवभूयिष्ठता गम्यते ॥ १२ ॥

**प्रभावली**

क्षितौ । निर्धारणे सप्तमी । त्रिवर्ग एव पुटभेदनं पत्तनं वासभूमिर्येषां ते त्रिदशाः, तेषां योग्यानि यानि वर्षाणि इलावृतादीनि, तानि त्यजतीति तत्त्यजं रथोत्तमं भारतोन्मुखं प्रवर्तय ॥ ११ ॥

कलधौतगिरिः; रजतगिरिः, कैलासः । कैलासोऽपि संयमस्थानं न

[1] आलोक्यते—क.

[2] कश्मलितः—क.

तर्कः—(अग्रतो रथं प्रवर्त्य) पश्य देव, गन्धर्वयूथसेवितं[1] गन्धमादनम् ।

विवेकः—([2]सकौतुकं दृष्ट्वा)

एतं गिरिवरं सूत मन्ये विश्वमनोहरम् ।
आगामिस्वर्गसृष्टीनामादिकन्दमिव स्थितम् ॥ १३ ॥

अयमपि [3]खलु सिद्धैरासेव्यो[4] न साधकानामावासः । अपिच,

सहचरभव्यदिव्यशबरीकबरीविकस-
न्मदनमहेषुजालमधुसौरभसारभृतः ।
इह मरुतो वहन्ति मददन्तुरदन्तिघटा-
करटकटाहवाहिघनशीकरशीभरिताः ॥ १४ ॥

प्रभाविलासः

एतमिति । कन्दम्; कन्दलम् ॥ १३ ॥

सहचरेति । सहचरैः भव्यानां दिव्यशबरीणां कबरीषु विकसतां

प्रभावली

भवतीत्याह—विजितमनोभवेनेति । रुद्रो यद्यपि विजितकामः; तेन सदाधिष्ठितोऽपि कलधौतगिरिः संयमनस्य समाधेः स्थानं न भवति । तत्र हेतुमाह—गजमुखेति । गजमुखस्य विनायकस्य गण्ड एव शैलः, तस्य यत् घनदानं सान्द्रमदजलं, तदेव कलिन्दसुता यमुना, तस्या लहर्य एव झलंझलाबहलकज्जलं, झलंझलाशब्देन विशिष्टं बहलं कज्जलम् अञ्जनं, तेन कम्बलितः कम्बलैरावृत इव लक्ष्यते । कश्मलित इति पाठान्तरम् । तदा संजातकश्मल इत्यर्थः ॥ १२ ॥

आदिकन्दं; मूलभूतं कन्दम ॥ १३ ॥

सिद्धैः; सिद्धयोगैः । सहचरेति । सहचराणां भर्तॄणां भव्या अनुकूलाः

[1] पूगसेवितं—क.
[2] सकुतुकं—क.
[3] खलु omitted—क.
[4] सिद्धैरासेव्यमानः—क.

तर्कः—इतस्तर्हि दिव्ये तपोवने दीयतां दृष्टिर्देवेन ।

विवेकः—(दूरतः पश्यन्)

स्वकल्पितरघूद्वहप्रथनकेलिगाथाशत-
प्रयुक्तिपथशिक्षणप्रवणसिद्धबृन्दान्वितः[1] ।
क इत्थमुपसर्पति स्थिरकठोरवीरव्रणः
कपिः कदलिकावनं कनकशैलशृङ्गाकृतिः ॥ १५ ॥

प्रभाविलासः

मदनेषूणां कुसुमानां जालेषु मधुनो मकरन्दस्य सौरभसारं बिभ्रतीति तथोक्ताः । मदनेन दन्तुराणां दन्तिघटानां गजसमूहानां करटाः गण्डाः, त एव कटाहाः कर्पराणि, तेषु वाहिभिः प्रवहद्भिः शीकरैः शीभरिताः सिक्ताः ॥ १४ ॥

स्वकल्पितेति ; हनूमद्रामायणमुच्यते । सिद्धबृन्दान्वित इति ; अनेन

"तदिहाप्सरसस्तात गन्धर्वाश्च तदानघ ।
तस्य वीरस्य चरितं गायन्त्यो रमयन्ति माम् ॥"

इत्यारण्यपर्वणि हनूमद्वचनं स्मारितम् । कदलिकावनमिति । अनेन

प्रभावली

याः दिव्याः शबर्यः शबरस्त्रियः, तासां कबरीषु ये मदनमहेषवः पुष्पाणि, तेषां जालस्य यन्मधु, तस्य यः सौरभसारः परिमलातिशयः, तद्वतः । मदेन विषमिता या दन्तिघटा, तस्याः करटाः गण्डस्थलानि, तान्येव कटाहाः, तेभ्यो वहन्तीति वाहिनः, ते च ते घनशीकराश्च, तैः शीभरिताः संजातशीभराः ; संजातजलबिन्दव इत्यर्थः । मरुतः ; वायवः । इह ; गन्धमादने । वहन्ति ; वान्तीत्यर्थः ॥ १४ ॥

तर्हि ; गन्धमादनादीनामसेव्यत्वपक्षे । इतः ; अत्र दिव्ये तपोवने ।

[1] बृन्दाश्रितः—क.

तर्कः—अवधारयतु देवः ।

**परिणतफलग्रासश्रद्धाजिघृक्षितभास्करः**
**पवनगरुडस्पर्धादानप्रवीणजवोल्बणः ।**
**दशमुखपुरीदाहोत्सिक्तस्ववालधिवैभवो**
**रघुपतिरणारम्भक्रीडारथोऽयमुपस्थितः ॥ १६ ॥**

प्रभाविलासः

" कदलीषण्डमध्यस्थमण्डपे सशिलातले ।
ददर्श स महाबाहुर्वानराधिपतिं स्थितम् ॥"

इति स्मारितम् । **कनकशैलेति**; अनेन

" रक्तोष्ठं ताम्रजिह्वास्यं रक्तवर्णं चलद्भुजम् ।
बृहन्तं वृत्तदंष्ट्राग्रं रश्मिमन्तमिवाचलम् ॥"

इति स्मारितम् ॥ १५ ॥

**परिणतेति** । **जिघृक्षितभास्करः**; जिघृक्षितः ग्रहीतुमिष्टः भास्करो येन सः । तदुक्तम्—

" बालार्काभिमुखो बालो बालार्क इव मूर्तिमान् ।
ग्रहीतुकामो बालार्कं पुप्लुवे घनमध्यगः ॥"

इति । **पवनेति**; अनेन

प्रभावली

**स्वकल्पितेति** । स्वशब्दो हनुमत्परः । स्वेन **कल्पिताः** रघूद्वहार्थं **कृताः प्रथनकेलयः** युद्धलीलाः, तद्विषयगाथाशतस्य श्लोकशतस्य **प्रयुक्तिपथशिक्षणे** प्रयोगमार्गाभ्यासे, **प्रवणानि** तत्पराणि यानि सिद्धबृन्दानि, तैर्वृतः । **स्थिराणि** कठिनानि **वीरव्रणानि** अस्त्रताडनाङ्काः यस्य सः । **कनकशैलः** मेरुः, तच्छृङ्गस्याकृतिरिवाकृतिर्यस्य ; पिङ्गलवर्ण इत्यर्थः । **को वा कपिः कदलिकावनमित्थमुपसर्पति**; स एष कपिः क इति पृच्छति ॥ १५ ॥

तस्योत्तरं तर्क आह—**अवधारयत्विति** । **अवधारयतु**; श्रृणोतु ।

विवेकः—(सादरचमत्कारमवलोकयन्) अयमिह श्रोतृजनकर्णामृतायमानं [1]वर्णनातिशायिवैभवं किमपि गायति —

'भगवति भरद्वाजे भुक्तिस्तथा शबरीगृहे
प्रभुरनुसृतो विश्वामित्रः प्लवङ्गपतिस्तथा[2]।
भृगुपतितपो लूनं दृष्टिः खगस्य च दक्षिणा
जयति ललितोत्तुङ्गा वृत्तिर्दशास्यरिपोरिति' ॥ १७ ॥

प्रभाविलासः

"न हि तं परिपश्यामि यस्तरेत महार्णवम् ।
अन्यत्र गरुडाद्वायोरन्यत्र च हनूमतः ॥"

इति स्मारितम् । **क्रीडारथ इति;** अत्र

"हनूमन्तं त्वमारोह अङ्गदं त्वथ लक्ष्मणः ।
वैहायसौ युवामेतौ वानरौ तारयिष्यतः ॥"

इति सुग्रीवोक्तिरभिप्रेता ॥ १६ ॥

**भगवतीति;**

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥"

प्रभावली

हनुमानुपस्थित इत्याह—**परिणतेति** । कीदृशः? पक्वफलभक्षणाकाङ्क्षया ग्रहीतुमभिलषितो भास्करो येन । **पवनगरुडयोः परस्परस्पर्धादाने;** अहमस्य वेगमनुसरामीति यो विरोधः, तद्दाने **प्रवीणो** यो **जवः** तेनोल्बणः प्रव्यक्तः, प्रसिद्ध इत्यर्थः । **लङ्काया दाहे** दाहेन वा उत्सिक्तं गर्वितं वालधिः पुच्छ, तस्य वैभवं यस्य सः । **रघुपतेः रणारम्भे क्रीडारथः;** मातलिरथागमनात्पूर्वं रामस्य हनुमानेव लीलारथः ॥ १६ ॥

**चमत्कारः;** विस्मयः । **अयमित्यादि** । **अयम्;** हनुमान् वर्णयितुम-

[1] वर्णनातिभूमिवैभवं—क. [2] पतिश्च सः—क.

### प्रभाविलासः

इत्युक्तलक्षणे । **भरद्वाजे**; तदाश्रम इत्यर्थः । **शबरीति** जातिप्रयुक्तदोषवत्त्वमुक्तम् । **गृह** इति देशप्रयुक्ताशुचित्वम् । **तथा**; अविशङ्कयेत्यर्थः । अनेन सौहार्दकाष्ठा दर्शिता,

"कथितानि रहस्यानि गृहे भुक्तमशङ्कितम् ।
दर्शितानि कलत्राणि सौहार्दं किमतः परम् ॥"

इत्युक्तत्वात् । **प्रभुरिति** रक्षोनिवारणे स्वयं सामर्थ्यमुक्तम् । **विश्वामित्र इति**; लोककण्टकराक्षसनिरासे स्वयं प्रवृत्ततया विश्वमित्रभूत इत्यर्थः । **प्लवगपतिरिति**; सख्यकरणानन्तरं शक्तिपरीक्षादिना प्रसिद्धश्वपलाग्रणीरित्यर्थः । **तथा अनुसृतः**; अनेन सौलभ्यसौशील्यकाष्ठा दर्शिता । **भृगुपतीति**; अभिजनपरिशुद्धिः, तस्य शुद्धिकरत्वं च । **तप इति**; यद्धलेनान्येषां लूनता, तदपि लूनमित्यर्थः । क्रव्यादत्वक्रूरत्वव्यञ्जनार्थं **खगस्येति** । अनेन समत्वमुक्तम् । **दशास्यरिपोरिति** शौर्यकाष्ठा । अनेन प्रकारेण ललिता उत्तुङ्गा च वृत्तिः ॥ १७ ॥

### प्रभावली

शक्यवैभवं किमपि गीतं गायति । तदेव दर्शयति—**भगवतीति** । **दशास्यरिपोः** भगवति **भरद्वाजे** **भुक्तिः** भोजनम् । तथा **शबरीगृहे** **भुक्तिः** । **विश्वामित्रश्च प्रभुर्भवन् येनानुसृतः** प्रभुत्वेनानुसृतः । **प्लवगपतिश्च तथा**; प्रभुत्वेन येनानुसृतः । आभ्यामस्य सौलभ्यरूपं ललितत्वं व्यञ्जितम् । **भृगुपतेः** परशुरामस्य **तपः** येन **लूनं** छिन्नम् । **खगस्य** काकस्य **दृष्टिः** दक्षिणा **लूना** । अनेन परत्वरूपोत्तुङ्गता दर्शिता । एवं **दशास्यरिपोः ललितोत्तुङ्गा वृत्तिर्जयति** लोके । इति गायतीति संबन्धः । प्रभुशब्दो विश्वामित्रसुग्रीवयोर्विशेषणम् । अनुसृत इति कर्मणि क्तः । **वृत्तिस्तु** भक्त्यनुसृतिलवनरूपा ॥ १७ ॥

(विमृश्य) [1]विजिताक्षतया [2]विज्ञातस्याप्यमुष्यानवरत-जोघुष्यमाणदुन्दुभिवीणावेणुमृदङ्गैः, अङ्गीकृतलास्यताण्डवैः, अनु-पमगान्धारग्रामगीतरसिकैः, [3]गन्धर्वदंपतिभिरावृतस्य [4]सत्त्वोत्तरेऽपि तपोवने संयमसिद्धिं न श्रद्दधे। पश्यामि च परितः सरसगीता-स्वादसमाकृष्टावस्थितमपूर्वं सजीवं चित्रम्। इह च,

**प्रभाविलासः**

**लास्यम्**; सौम्यनृत्तम्। तदुक्तम्—

"तण्डूक्तमुद्धतं प्रायः प्रयोगं ताण्डवं विदुः।
लास्यं तु सुकुमाराङ्गं मकरध्वजवर्धनम्॥"

इति। **गान्धारग्रामः**; गान्धारस्वरसमूहः। "ग्रामः स्वरसमूहः स्यान्मूर्छ-नादेः समाश्रयः" इति लक्षणात्। स्वर्गिणां गान्धारग्रामस्यातिप्रियतया तदुपादानम्। तदुक्तम्—

"षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः।
न तु गान्धारनामानं स लभ्यो देवयोनिषु॥
गान्धारग्राममाचष्टे तथा तं नारदो मुनिः।
प्रवर्तते स्वर्गलोके ग्रामोऽसौ न महीतले॥"

**प्रभावली**

आश्रमपतेर्विजिताक्षत्वेऽपि आश्रमस्य सत्त्वोत्तरत्वेऽपि नेदं समाधिक्षेत्र-मित्याह—विजितेति। विजितेन्द्रियतया विख्यातस्यापि। जोघुष्यमाणा वेणु-मृदङ्गा येषां तैः। लास्यं ललितनृत्तं, ताण्डवमुद्धतनृत्तं, तदुभयमङ्गीकृतं यैः। अनुपमो यो गान्धारग्रामः, तद्गीतरसिकैः। दंपतिशब्दस्य द्व्यर्थवाचित्वेन द्विवचनयोग्यत्वेऽपि समुदायस्यैकत्वमङ्गीकृत्य दंपतिशब्दात् प्रातिपदिकात्सुबु-त्पत्तिः। तथाच बहुभिर्दंपतिभिरित्यर्थः। न श्रद्दधे; न विश्वसिमि। गीतास्वादा-

[1] विजितानङ्गतया—घ. [2] प्रख्यातस्यापि—क.
[3] गन्धर्वपतिभिः—ग. घ. [4] सर्वोत्तरेऽपि—घ.

**परिणमति जनानां संविदानन्दरूपा**
**निखिलमपि विहाय स्निग्धतीव्रात्तरागम्[1] ।**
**स्वरपरिणतिचित्रां मूर्छनां भूषयद्भिः**
**श्रुतिसुरभिततन्त्रीझंकृतैः[2] स्वैरगीतैः ॥ १८ ॥**

**प्रभाविलासः**

इति । **गन्धर्वपतिभिरिति ;** हनूमतो गान्धर्वशास्त्रप्रवर्तकतया ततः शिक्षार्थं तेषामत्रावस्थितिरुक्ता । यथोक्तम्—

"वायुर्विश्वावसू रम्भार्जुनौ नारदतुम्बुरू ।
आञ्जनेयो मातृगुप्तो रावणो नन्दिकेश्वरः ॥"

इति । **परिणमतीति । आत्तरागम् ;** मन इति शेषः । स्वरो नाम श्रुत्यनन्तरं श्रोतृचित्तरञ्जकानुरणनात्मको ध्वनिः । तदुक्तम्—

"श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः ।
स्वरो रञ्जयति श्रोतृचित्तं स स्वर उच्यते ॥"

इति । श्रुतिलक्षणं च—

"प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः ।
श्रुतिः सा संपरिज्ञेया स्वरावयवलक्षणा ॥"

इति । **झंकृतानि ;** अनुकारशब्दाः । **स्वैरम् ;** मन्दम् । "मन्दस्वच्छन्दयोः स्वैरम्" इत्यमरः ॥ १८ ॥

**प्रभावली**

नन्दपरवशतयात्र जन्तवः सजीवचित्राणीव वर्तन्त इत्याह—**पश्यामि चेति ।** सर्वतः **समाकृष्टं** च तत् अवस्थितं च ; **अपूर्वम् ;** इतः पूर्वमदृष्टम् । चित्रवदवस्थाने हेतुमाह—**परिणमतीति । स्वराः ;** निषादऋषभादयः, तेषां **परिणतिः**

[1] वान्तरागम् —क. [2] रञ्जितैः—ग.

अशक्यश्च संनिधौ परित्यागः संयमारम्भविरोधिनां विषयाणाम् ।

अहत्वा विक्रीणन्निह मदनहस्ते त्रिभुवनं
वरस्त्रीमञ्जीरध्वनिरपि किमालोकितमुखैः ।
यदृच्छासंपन्नो यमिनमनघं मुक्तमपि वा
विकर्तुं पर्याप्तो विजितकलहंसीकलरवः ॥ १९ ॥

प्रभाविलासः

अहत्वेति । अहत्वा; सजीवम् । विक्रीणन्निति; मञ्जीररवस्य मृगयुसाम्यं व्यङ्ग्यम् ॥ १९ ॥

प्रभावली

विनिमयः, तेन चित्रां मूर्छनां स्वराणामारोहावरोहणे, तां भूषयद्भिः श्रुतिभिः स्वरारम्भकशब्दविशेषैः सुरभितानि अलंकृतानि शब्दविशेषा येषां तैः । स्वैरगीतैः; यथेष्टगानैः । अत्र स्थितानां जन्तूनां संवित् आनन्दरूपा परिणमति । सा च निखिलव्यापारान्तरं विहाय आत्तरागं यथा तथा स्निह्यति; तत्रैव सक्ता भवति ॥ १८ ॥

ननु भवतु स्वैरगीतम्; तद्विहाय समाधिः कर्तव्य इत्यत्राह—अशक्यश्चेति । संनिधौ तत्परित्यागस्त्वशक्यः । इममेवार्थमुपपादयति—अहत्वेति । इह; जगति । त्रिभुवनम्; सर्वं जनमित्यर्थः । अहत्वा; हननमकुर्वन्; सजीवमेव । कामहस्ते विक्रयं कुर्वन्, समर्पयन्नित्यर्थः । वरस्त्रीमञ्जीरध्वनेरहत्वा विक्रयणे हेतुमाह—विजितेति । विजितः कलहंस्याः कलरवो येन सः; यदृच्छया संपन्नः श्रुतः । अनघम्; परमविरक्तं मुनिमपि । मुक्तमपि वा; मुक्तं चापीति भावः । विकर्तुं विकारं प्रापयितुं समर्थः । किमालोकितमुखैः; आलोकितमालोकनम् । मुखशब्देन संभाषणादीनि गृह्यन्ते । तैः किम्; तानि तिष्ठन्त्वित्यर्थः ॥ १९ ॥

अपिच,

**कठिननियमोऽपि पुरुषः सहसा नवनीतकुम्भवद्द्रवति ।**
**वरयुवतिवह्निकुण्डे संनिहिते सपदि लीयमानमतिः ॥ २० ॥**

तर्कः—अस्त्वेवम् । तथापि सर्वधातुरत्नचित्रितं सर्वौषधिसंभवस्थानं सर्वोर्वीधरसमधिकमहिमवन्तं हिमवन्तमवलोकयतु देवः ।

**एष मैनाकजनको धरणीधेनुतर्णकः ।**
**त्रिदशाचलजामाता त्र्यम्बकश्वशुरो गिरिः ॥ २१ ॥**

प्रभाविलासः

**कठिनेति । लीयमानमतिः**; द्रवीभूतमतिः । अत्र

"अङ्गारसदृशी नारी घृतकुम्भसमो नरः ।
तस्मान्नारीषु संसर्गं दूरतः परिवर्जयेत ॥"

इति वचनमनुसंधेयम् ॥ २० ॥

**एष इति । तर्णकः**; वत्सः । **त्रिदशाचलः**; मेरुः । **पर्यायोक्ति**रलंकारः ॥ २१ ॥

**प्रभावली**

इममेवार्थं निदर्शनान्तरेण द्रढयति—**कठिनेति । कठिनो दृढः नियमो** यस्य । अन्यत्र कठिने काठिन्ये नियमः स्वभावनियमः यस्य । **वरयुवत्याख्यवह्निकुण्डे** यदृच्छया **संनिहिते** सति **सपदि** तत्क्षण एव **सहसा** अतर्कितं **लीयमानमतिः** सन् नष्टप्रज्ञः सन् **नवनीतकुम्भवत्** विलीनो मृतो भवति ॥२०॥

अथ हिमवन्तं पश्येत्याह—**सर्वधात्विति** । सर्वैर्धातुभिः रत्नैश्च चित्रम् । **ओषधयः**; विशल्यकरण्यादयः । सर्वोर्वीधरेभ्यः समधिकमहिमवन्तम् । **एष इति । गिरिः** हिमवान्, मैनकपर्वतस्य **जनकः** । धरण्याख्यधेनोः **तर्णकः** सद्यो जातवत्सः । धरणीधेनुदोहे हिमवन्तं वत्सीकृत्यादुहन्निति पौराणिकी कथा । **त्रिदशाचलस्य मेरोः जामाता । त्र्यम्बकस्य श्वशुरश्च** भवति ॥ २१ ॥

विवेकः—(सर्वतो दृष्टिं प्रसार्य) इयमिह भगवती भागीरथी । अत्र च,

वाहिन्यः कति सन्ति वन्यमहिषश्रेणीविषाणाहति-
क्षुभ्यद्दुर्दमकर्दमाङ्कपयसस्तत्संमितिं [1]क्षाम्यति ।
वारिक्रीडितवल्गिताङ्गवलभिच्छुद्धान्तसीमन्तिनी-
[2]वक्षोजक्षरदङ्गरागसुभगोत्सङ्गा न गङ्गापगा ॥ २२ ॥

अयमिह विषयस्तपोधनानां न भवति संयमिनां निवासयोग्यः ।
हरिचरणनदीनिपातघोषैर्मुखरितकाननगह्वरो हिमाद्रिः ॥ २३ ॥

**प्रभाविलासः**

**वाहिन्य इति । वन्यमहिषश्रेणीनां विषाणाहत्या क्षुभ्यन् दुर्दमकर्दमः अङ्कः** चिह्नं येषां तानि **पयांसि** यासां ताः, तथोक्ताः । **वारिक्रीडितेन वल्गिताङ्गानां** चलिताङ्गानां **बलभिद** इन्द्रस्य **शुद्धान्तसीमन्तिनीनां वक्षोजेभ्यः क्षरता अङ्गरागेण सुभग** उत्सङ्गो यस्याः सा, **गङ्गापगा तत्संमितिम्** उक्तवाहिनीसादृश्यं न क्षाम्यतीत्यन्वयः ॥ २२ ॥

**अयमिति । हरिचरणनदी;** भागीरथी ॥ २३ ॥

**प्रभावली**

अत्र गङ्गा प्रवहतीत्याह—**इयमिति** । तां वर्णयति—**वाहिन्य इति** । **वारिक्रीडितम्;** जलक्रीडा, तेन **नर्तिताङ्ग्यः बलभिदः** इन्द्रस्य **शुद्धान्तसीमन्तिन्यः** अन्तःपुरस्त्रियः, तासां वक्षोजेभ्यः क्षरद्भिरङ्गरागैः सुभगोत्सङ्गा गङ्गा । **वन्यमहिषश्रेण्यः;** वन्यमहिषपङ्क्तयः, तासां **विषाणैः आहत्या क्षुभ्यन्तः** आविलाः **दुर्दमाः** अपनेतुमशक्याः **कर्दमाः** पङ्का येषां तानि पयांसि यासां ताः, **वाहिन्यः** क्षुद्रनद्यः लोके बह्वयः सन्तीत्यर्थः; ताभिः सादृश्यं न सहत इत्यर्थः । सर्वोत्तरा गङ्गात्र प्रवहतीत्यर्थः ॥ २२ ॥

**अयमिति । अयं हिमाद्रिः संयमिनां निवासयोग्यो देशो न भवति ।**

[1] वक्ष्यति—ग. [2] वक्षोजस्फुरदङ्ग—ख.

(ससंभ्रमाद्भुतम्) अये, कथमिहाचिन्तितोपस्थितं घ्राणस्पर्शनोन्मादनम्? इह हि —

**उद्यानायातविद्याधरमिथुनरतिश्रान्त्यपक्रान्तिहेतु-**
**स्तिम्यद्गात्रस्तुषारैस्त्रिदशयुवतिनिश्वासविश्वासभूमिः ।**
**नीहारत्विट्कलङ्कप्रतिवदनपदन्यस्तकस्तूरिकोद्य-**
**न्नेपालीगण्डपालीपरिमलललितः स्पन्दते गन्धवाहः ॥ २४ ॥**

अतस्त्वरितमार्यावर्ताय प्रवर्त्यतां रथः । यत्र च[1],

**नवयौवनदुर्मदान्धनारीदुरितोपप्लवदूषितापि जातिः ।**
**अनपायपतिव्रताप्रवाहैरधुनापि प्रलयं न याति सत्सु ॥ २५ ॥**

**प्रभाविलासः**

**उद्यानेति** । **तिम्यद्गात्रः**; सिक्तदेहः । **निश्वास** एवायमिति **विश्वासस्य भूमिः** । **नीहारत्विट्कलङ्कस्य** चन्द्रकलङ्कस्य प्रतिवदनपदे प्रतिनिधिस्थाने न्यस्तया कस्तूरिकया उद्यन्तीनां प्रकाशमानानां नेपालीनां नेपालदेशस्त्रीणां गण्डपालीपरिमलेन ललितः ॥ २४ ॥

**आर्यावर्तः**; विन्ध्यहिमवतोरन्तरदेशः । **नवयौवनेति** । यद्यपि

**प्रभावली**

कुतः? **हरिचरणनद्याः निपातघोषैः** शब्दायमानवनगह्वरत्वादिति हेतुगर्भं विशेषणम् ॥ २३ ॥

हेत्वन्तरं चास्तीति वक्तुमुपक्रमते—**ससंभ्रमेति** । हेत्वदर्शनात् **संभ्रमः** । तस्यातिशयनात् **अद्भुतम्** । अतर्कितोपस्थितं घ्राणस्पर्शनयोरुन्मादकरम्; किमपीति शेषः । तत्स्फुटयति—**इह हीत्यादिना** । **उद्यानायातस्य विद्याधरमिथुनस्य रतिश्रान्त्याः अपक्रान्तिहेतुः** । **तुषारैः** आर्द्रगात्रः । **नीहारत्विषः** चन्द्रस्य यः **कलङ्कः**, तस्य **प्रतिवदनपदे** प्रत्याख्यानस्थाने **न्यस्तया कस्तूरिकया** उद्यन्तः नेपालीनां गण्डपालीषु परिमलाः, तैः **ललितः गन्धवाहो** वायुः, **अत्र स्पन्दते** मन्दं चलति ॥ २४ ॥

उक्तहेतुमनुवदन्नुत्तरत्र प्रेरयति—**अत इति** । “आर्यावर्तः पुण्यभूमि-

[1] **अत्र च—क.**

**तर्कः**—प्रविष्टमिदं विविधतीर्थतपोवननिरन्तरं विन्ध्यहिमवतोरन्तरम्। अत्र च तीर्थयात्राचरितार्थः सार्थवाहसार्थश्चिरतरोपोषितस्य चक्षुषः परां पारणां पूरयन्, अनवधिकधर्मलाभसंतोषेण गन्धसिन्धुरस्कन्धमधिरूढ इवेतस्ततः प्रसर्पति। (सर्वतोऽवलोक्य सविषादम्) हन्त, निरङ्कुशकलिबलसंकुचितनिगमवर्त्मनि चास्मिन् देशे प्राच्योदीच्यपाश्चात्त्यपाषण्डिगणकरम्बिते भग्नचरणत्रये च

**प्रभाविलासः**

"अनादाविह संसारे दुर्वारे मकरध्वजे।
कुले च कामिनीमूले का जातिपरिकल्पना॥"

इत्युक्तरीत्या युवतीनां यौवनमदादिसामग्रीसंभवेन संभावितव्यभिचारकृतसांकर्यवती ब्राह्मणत्वादिजातिः, तथाप्यत्र स्त्रीणां स्वाल्त्याभावात् न जात्युपप्लव इत्यर्थः॥ २५॥

**करम्बिते**; मिश्रिते। **चरणत्रयम्**; तपोदानसत्यरूपम्।

**प्रभावली**

मध्यं विन्ध्यहिमागयोः" इति हिमाचलविन्ध्ययोर्मध्यदेश आर्यावर्तः।

"आनादाविह संसारे दुर्वारे मकरध्वजे।
कुले च कामिनीमूले का जातिपरिकल्पना॥"

इति बाह्याः सत्स्वपि व्यभिचारिणीपुत्रत्वदूषणमुद्भावयन्ति; तदनेन प्रत्युच्यते— **नवेति**। **नवयौवनेन** यो **दुर्मदः**, तेन **अन्धानां नारीणां दुरितं** व्यभिचाररूपं, स एवोपद्रवः, तेन **दूषितापि जातिः** ब्राह्मणत्वादिः अधुना कलियुगेऽपि व्यभिचाररूपापायरहितानां पतिव्रतानां परंपराभिः सत्सु महत्सु केषुचित् **नाशं न याति यत्र**, तस्मै आर्यावर्तायेति योजना॥ २९॥

**तपोवनैः निरन्तरम्**; सान्द्रम्। **सार्थवाहसार्थः**; तीर्थयात्रापरपान्थसमूहः। **निरर्गलं कलिबलं**, तेन **संकुचितं निगमवर्त्म**, वैदिकमार्गः। प्राग्देशभवाः **प्राच्याः**। उदग्देशभवा **उदीच्याः**। पश्चाद्देशभवाः **पाश्चात्त्याः**। **पाषण्डि-**

भगवति धर्मे प्रायशः [1]परीक्ष्यमाणं न किंचित् स्थानमवशिष्यते। तथापि मुरभिदवतारमुषितकलुषोऽयं संदृश्यतां साकेतजनपदः—

**अयोध्या दिव्येयं वहति सरयूरत्र विरजा**
**विभोरेते यूपा विधिनियमनिर्मुक्तपशवः[2]।**
**अकुण्ठस्वातन्त्र्यः स्वपदमधिरोहन्नवसरे**
**सहानैषीदत्र[3] स्थिरचरमशेषं रघुपतिः॥ २६॥**

प्रभाविलासः

**अयोध्येति। इयम्;** पुरोवर्तिनी पूः। **दिव्या अयोध्या;** अप्राकृतवैकुण्ठ इत्यर्थः। **विभोः;** श्रीरामस्य। "अश्वमेधशतैरिष्ट्वा" इत्यादिस्मरणात् **यूपा** इत्युक्तिः। **निर्मुक्तपशव इति;** "पर्यग्निकृतानारण्यानुत्सृजन्त्यहिंसायै" इति श्रुत्यर्थोऽभिप्रेतः। अनधिकृतप्रापणे निमित्तमाह—**अकुण्ठेति। अनैषीत्;** नीतवान्॥ २६॥

प्रभावली

**गणैः** शबलिते धर्मे **भग्नचरणत्रये;** चरणत्रयं तपोदानसत्यरूपम्। बहुशो विचार्यमाणे न **किंचिदपि स्थानम्** अवशिष्यते; सर्वमपि दोषदुष्टमित्यर्थः। **अवतारेण;** रामावतारेण। अयोध्याजनपदं परमपदत्वेन प्रशंसति—**अयोध्येति।** इयं परिदृश्यमाना पुरी **दिव्या अयोध्या;** "देवानां पूरयोध्या" इत्याद्युक्तविभवा अयोध्या। **अत्र या सरयूः** नदी, सा **विरजैव भवति;** वैकुण्ठलोकगता विरजानद्येव। **एते** दृश्यमानाः **विधिनियमेन** बद्धाः **पशवो** येषु ते **विभोः** श्रीरामचन्द्रस्य **यूपाः।** स च **रघुपतिः अवसरे** अवसानकाले **स्वं पदं** वैकुण्ठम् **अधिरोहन् स्थिरचररूपमशेषं** जन्तुजातं स्वेन **सह अनैषीत्;** अत्रापि स्वपदमिति पदमनुषज्यते। अत एव **अकुण्ठस्वातन्त्र्यः** अप्रतिहतस्वातन्त्र्यः। हेतुगर्भमिदम्; अप्रतिहतस्वातन्त्र्यादिति भावः॥ २६॥

[1] परीक्षणीयं—क. [2] नियुक्तपशवः इति पठित्वा "यूपे पशुं युञ्जीत" इति विधिनियमेन नियुक्ताः बद्धा इति यावत्—इति केषांचित् व्याख्यान्तरम्. [3] देषः—ख.

विवेकः—(सर्वतो दृष्टिं प्रसार्य)

उपवनशुकबृन्दैरुद्गृणद्भिस्त्रिवेदीं
प्रतिकलमनुमेयप्राच्यधर्मानुबन्धम् ।
चिरगतजनघोषं तीरमेतत्सरय्वा
रघुकुलनृपतीनां शोभते रत्नयूपैः ॥ २७ ॥

(सहर्षपुलकोद्गममनुस्मृत्य)

विषयिभिरसौ वक्त्रैर्घोरं मनोरजनीचरं
प्रशमयति यो युञ्जानानां प्रबोधशरोत्करैः ।
जनकसुतया देव्या जुष्टो दिशत्यभयं सतां
दशरथसुतो देवः श्रीमान्दयामृतवर्षुकः[1] ॥ २८ ॥

## प्रभाविलासः

**उपवनेति । प्राच्यधर्मः;** पूर्वधर्मः । अत्रानुमानालंकारेण स्वतः संभवी अतिशयोक्त्यलंकारो व्यज्यते । अनुमानलक्षणं तु "यल्लिङ्गालिङ्गिनो ज्ञानमनुमानं तदुच्यते" इति ॥ २७ ॥

**विषयिभिरिति । विषयिभिः;** इन्द्रियैरेव वक्त्रैः । सहयोगे तृतीया । **युञ्जानानाम्;** योगमभ्यस्यताम् ॥ २८ ॥

## प्रभावली

उपवनेति । **उद्गृणद्भिः;** उच्चरद्भिः । प्रतिक्षणमनुमेया ये **प्राच्यधर्माः** वैदिकधर्माः, तेषाम् **अनुबन्धः** अनुष्ठानं यत्र । चिरादुपनतजनघोषमपि सरय्वा एतत्तीरं रत्नालंकृतैर्यूपैः शोभते ॥ २७ ॥

**अनुस्मृत्य;** दिव्यचरितमिति शेषः । दिव्यचरितमेव दर्शयति—**विषयिभिरिति । असौ;** रामः । **युञ्जानानाम्;** योगमभ्यस्यताम् । **विषयिभिः;** इन्द्रियैरेव **वक्त्रैः** उपलक्षितम् । मन एव **रजनीचरो** रावणः, तम् । **प्रबोधाः**

[1] वारिधिः—ग. छ; वर्षकः—क.

(सकौतुकमञ्जलिं बध्नन्)

**नमस्तस्मै कस्मैचन भवतु निष्किंचनजन-**
**स्वयंरक्षादीक्षासमधिकसमिन्धानयशसे ।**
**सुराधीशस्वैरक्षणकुपितशापायुधवधू-**
**दृषत्तादुर्जातप्रशमनपदाम्भोजरजसे ॥ २९ ॥**

(विचिन्त्य) [1]अये सूत, अयमप्यद्य पाषण्डिमण्डलप्रचार-खण्डितकार्तयुगधर्मो निवृत्तिधर्मनिष्ठैरनिष्ठुरबुद्धिभिः परित्यक्तो देशः ।

**प्रभाविलासः**

**नम इति । कस्मैचनेति;** अतिदेवमानुषत्वमुक्तम् । **निष्किंचन-जनानां स्वयंरक्षादीक्षया समधिकं** यथा तथा **समिन्धानं यशो** यस्य तस्मै । **सुराधीशस्य** इन्द्रस्य **स्वैरक्षणे** मर्यादातिक्रमक्षणे **कुपितस्य शापायुधस्य** गौतमस्य **वध्वाः** अहल्यायाः **दृषत्ता** उपलतैव **दुर्जातं** पापं, तस्य प्रशमनं निवर्तकं पदाम्भोजरजो यस्य तस्मै ॥ २९ ॥

**प्रभावली**

ज्ञानविशेषा एव बाणसमूहाः, तैः युञ्जानगतैः प्रशमयति; अद्यापि नाशयति । **जुष्टः**; प्रीत्या सेवितः । **सताम् अभयं ददाति** ॥ २८ ॥

कुतूहलान्नमस्यति—**नम इति । निष्किञ्चनजनाः** उपायान्तराशक्त्या तद्रहिताः, तेषां **स्वयं रक्षा** उपायान्तरस्थाने स्थित्वा रक्षणं, सैव **दीक्षा,** तया **समधिकं** यथा तथा **दीप्यमानयशसे । सुराधीशस्य** इन्द्रस्य **स्वैरेण** व्यभि-चारेण **क्षणमात्रं कुपितस्य शापायुधस्य** गौतमस्य **वधूः** अहल्या; तस्याः **दृषत्ता** पाषाणभावः, तदेव **दुर्जातं** दुर्जन्म, तस्य **प्रशमनानि पदाम्भोजयोः रजांसि** यस्य, तस्मै **कस्मैचन** पुरुषधौरेयाय **नमः** ॥ २९ ॥

तादात्विकपाषण्डाभिभवं विचिन्त्यायमपि संयमस्थानं न भवतीत्याह—**अयमपीति । अयमपि;** उक्तगुणवानपि । **प्रचारेण खण्डितः कार्तयुगधर्मः**

[1] हन्त सूत, अयमप्यद्य सत्त्ववद्भिः परित्यक्तो देशः—क.

तर्कः—देव, प्रतिपद्यतामियं तर्हि प्रादुर्भावभूमिरपरा ।

विवेकः—(मधुरां पश्यन्) अत्र खल्ववतीर्णमवनिभरमपजिहीर्षता सपर्यङ्केन वासुदेवेन । (सहर्षम्)

**नाथायैव नमःपदं [1]भवतु नश्चित्रैश्चरित्रक्रमै-**
**र्भूयोभिर्भुवनान्यमूनि कुहनागोपाय गोपायते ।**
**कालिन्दीरसिकाय [2]कालियमणिस्फारस्फटावाटिका-**
**रङ्गोत्सङ्गविशङ्कचङ्क्रमधुरापर्यायचर्या यते ॥ ३० ॥**

प्रभाविलासः

**पर्यङ्कः**; शेषः, बलराम इति यावत् । **नाथायेति** । **नमःपदम्**; नम इत्युक्तिः । **चित्रैः**; शैशव एव शकटपरिवर्तनाद्याश्चर्यकरैः । **भूयोभिः**; बहुभिः । **कुहनागोपाय**; कपटगोपाय । **कालिन्दीरसिकाय**; यमुनायां रासक्रीडादिषु सरसाय । कालिन्द्याख्यदिव्यमहिषीवल्लभत्वं च व्यज्यते । **कालियस्य** सर्पस्य **मणिभिः** रत्नैः **स्फाराणां** प्रकाशमानानां **स्फटानां** फणानां **वाटिका** पङ्क्तिरेव **रङ्गः** नृत्तस्थलं, तस्योत्सङ्गे उपरितले विशङ्कं निःशङ्कं यथा तथा चङ्क्रमस्य नर्तनस्य धुरया भारेण, अतिशयेनेति यावत् । **पर्यायचर्याय**; पर्यायचङ्क्रमगतिमते । "रङ्गं त्रपुणि रङ्गो ना रङ्गे नृत्तस्थलेऽपि च" इति रत्नमालायाम् ॥ ३० ॥

प्रभावली

निवृत्तिधर्मः येन सः । अनिष्ठुरबुद्धिभिः; प्रशान्तबुद्धिभिः । **प्रादुर्भावभूमिः**; मधुरा । **सपर्यङ्केन**; शेषसहितेन । तन्महिमावबोधाद्धर्षः । **नाथायैवेति** । **नाथायैव**; नान्येभ्यः । **नमःपदम्**; नमःशब्दः **भवतु** । नमःपदं वितनुम इति वा पाठान्तरम् । **चरित्राणां** पूतनाशकटादिभङ्गरूपाणां **क्रमैः** परंपराभिः । **भूयोभिः**; बहुतरैः । **कुहनागोपाय**; कपटगोपालाय । **गोपायते**; रक्षते ।

[1] वितनुमः—ख.

[2] कालियफणि—क. ख.

(सर्वतोऽवलोक्य सहर्षम्) निरङ्कुशाः खल्वत्र भगवतः परिहसनवृत्तयः। स खलु,

**हर्तुं कुम्भे विनिहितकरः स्वादु हैयंगवीनं**
**दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम्।**
**पायादीषत्प्रचलितपदो नापगच्छन्न तिष्ठन्**
**मिथ्यागोपः सपदि नयने मीलयन्विश्वगोप्ता॥ ३१॥**

अपिच,

**वासो हृत्वा दिनकरसुधासंनिधौ वल्लवीनां**
**लीलास्मेरो जयति ललितामास्थितः कुन्दशाखाम्।**
**सव्रीडाभिस्तदनु वसने ताभिरभ्यर्थ्यमाने**
**कामी कश्चित्करकमलयोरञ्जलिं याचमानः॥ ३२॥**

प्रभाविलासः

**हर्तुमिति**। **हैयंगवीनम्**; सद्योघृतम्। **दामग्रहणे चटुलाम्**; त्वरमाणाम्। **मिथ्यागोपः**; कैतवगोपालः। तात्कालिकी जातिरलंकारः॥ ३१॥

**वास इति**। **दिनकरसुतासंनिधाविति**; लोके साधारणजनसाक्षि-

**प्रभावली**

अद्यापि शृण्वतां पापनिबर्हणादिद्वारेति भावः। **कालियेत्यादि**। **कालियस्य सर्पस्य मणिभिः स्फाराः** भूरि प्रकाशमानाः याः **स्फटाः** फणाः, तासां **वाटिका** पङ्क्तिः, सैव **रङ्गस्थलं**, **तस्योत्सङ्गे विशङ्कचङ्क्रमधुरा** निःशङ्कसंचरणधुरा, तत्र **पर्यायेण चर्याः** क्रमणानि यते प्राप्नुवते॥ ३०॥

परिहसनवृत्तिषु काश्चिदुदाहरति—**हर्तुमिति**। **हैयंगवीनम्**; सद्योनवनीतम्। **दामग्रहणचटुलाम्**; उलूखले बन्धनाय दामग्रहणार्थमितस्ततः संचरन्तीम्॥ ३१॥

परिहासान्तरमाह—**वासो हृत्वेति**। **दिनकरसुतायाः**; यमुनायाः।

प्रभाविलासः

त्वमपि जारकर्मणि विरुद्धम् । लोकसाक्षिसुतासाक्षित्वं किमुतेति व्यज्यते । सतीसमक्षं स्त्रीणामतिव्रीडाकरमिति च व्यज्यते । **वल्लवीनामिति**; प्रायेणाटवीनिवासिभ्यस्तत्पतिभ्योऽपि न बिभेतीति व्यज्यते । **लीलास्मेर इति**; अकुतोभयत्वं व्यज्यते, "रामो राजीवलोचनः" इतिवत् । **कुन्दशाखामास्थित इति**; धृष्टनायकत्वं व्यज्यते । **जयतीति**; लोके पारदार्येण शक्रादयोऽप्यतिनिकृष्टत्वं प्राप्ताः । तादृशकर्म स्मरणेऽप्यतिनिन्दितम् । अयं तु तेन कर्मणा सर्वोत्कृष्टो विराजत इति व्यज्यते । **सव्रीडाभिरिति**; वासोहरणस्येर्ष्याराहित्येनाभिमतत्वं व्रीडामात्रपरिधानत्वं च व्यज्यते । **अभ्यर्थ्यमान इति**; चिरकालमप्रदानं प्रतीयते । **कामीति**; अनुचितकरणे संकोचाभावः प्रतीयते । **कश्चिदिति**; निरतिशयकामुकत्वं लोककामुकवैलक्षण्यं च व्यज्यते । यथोक्तम्—

"स्मेरावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरततन्त्रशौण्डैः ।
पत्न्यस्तु षोडशसहस्रमनङ्गबाणैरस्येन्द्रियं प्रमथितुं करणैर्न शेकुः ॥"

इति । **करकमलयोरिति**; अङ्गानां स्पष्टप्रकाशनार्थमिति व्यज्यते । **याचमान इति**;

"बध्वाञ्जलिं मूर्ध्न्यपनुत्तयेंऽहसः
कृत्वा नमो वो वसनं प्रगृह्यताम् ।"

इति वचनं स्मारितम् । लौकिककामुकवैलक्षण्यप्रतितेर्व्यतिरेकालंकारध्वनिः,

प्रभावली

**संनिधौ**; तीरे । अयमपि सव्रीडत्वे हेतुः, स्त्र्यन्तरसंनिधौ लज्जाया आधिक्यात् । **वल्लवीनां** गोपीनां **वासो** हृत्वा **ललितां कुन्दशाखामास्थितः** आरूढः, **ताभिः** गोपीभिः **तदनु** तदनन्तरं **वसने अभ्यर्थ्यमाने सति करकमलयोः**

हन्त सूत, मुरभिदुपमुक्तमुग्धगोपिकावृत्तान्तमुद्घाटयति [1]संप्रति मधुरा।

**इमामधर्मेण विभाव्य [2]संप्लुतामुदन्वता द्वारवतीमिवाधुना।**
**न भावये संयमसंपदास्पदं न कालतः कस्य गुणव्यतिक्रमः ॥३३॥**

**तर्कः**—(रथं प्राङ्मुखयित्वा) देव, परमपुरुषप्रादुर्भावपवित्रीकृतक्षेत्रद्वयविप्लवे क्षेत्रान्तरेषु का प्रत्याशा? तथापि स्वाभाविकसुदर्शनचिह्नभूषितशिलाकलापसूचितभगवदभिमानविशेषः प्रागुत्तरः [3]प्रेक्ष्यतां देशः—

## प्रभाविलासः

"भेदप्राधान्यसामान्यादुपमेयोपमानयोः।
आधिक्याल्पत्वकथनाद्व्यतिरेकः स उच्यते॥"

इति लक्षणात्॥ ३२ ॥

**इमामिति**। अर्थान्तरन्यासोऽलंकारः॥ ३३ ॥

## प्रभावली

एकस्या एव उभयोर्हस्तयोः **अञ्जलिं याचमानः कश्चित् कामी** लीलाकामुक इत्यर्थः। **जयति**; सर्वोत्कर्षेण वर्तते॥ ३२ ॥

कृष्णोपभुक्तगोपिकावृत्तान्तमपि दर्शयति—**इमामिति**। इमां मधुराम् उदधिना **द्वारवतीमिव** अधुना **अधर्मेण** आक्रान्तां **संयमसंपदः** योगसिद्धेः **आस्पदं न भावये**। तथाहि **कस्य** वा वस्तुनः काले गच्छति सति गुणहानिर्न स्यात्? कालेन सर्वं निर्गुणं भवतीति भावः॥ ३३ ॥

**प्राङ्मुखयित्वा**; प्राङ्मुखं कृत्वा। **क्षेत्रद्वयस्य** अयोध्यामधुरयोः **विप्लवे**

[1] संप्रति omitted—क. [2] विप्लुतां—ख.
[3] प्रेक्ष्योऽयं देशः—क.

पुनरुपजनिभीतैः पुण्डरीकादिभिस्तै-
श्चिरपरिचितपूर्वं श्रीहरिक्षेत्रमेतत् ।
सकृदपि विमलेऽस्मिन्मज्जतश्चक्रतीर्थे
भवजलनिधिगर्तात्क्षिप्रमुन्मज्जनं स्यात् ॥ ३४ ॥

विवेकः—(दूरतः पश्यन्) पुण्यतमोऽप्यसौ भूभागो नेदानीं मम चेतसे रोचते । यतः,

अयमुपहतः सालग्रामोपलान्तरवस्थित-
द्रविणकणिकालुब्धैर्देशो मलिम्लुचलुब्धकैः ।
बहुगुणपरब्रह्मप्रेक्षासुधाब्धिमनोरथै-[1]
र्मुहुरुपनतप्रत्यासेधैर्मुमुक्षुभिरुज्झितः ॥ ३५ ॥

प्रभाविलासः

**पुनरिति । उपजनिः;** उत्पत्तिः । मज्जने सति उन्मज्जनमिति विषमालंकारः,

"विरुद्धकार्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत ।
विरूपघटना वा स्याद्विषमालंकृतिस्त्रिधा ॥"

इति लक्षणात् ॥ ३४ ॥

**अयमिति । उपनतप्रत्यासेधैः;** प्राप्तविघ्नैः ॥ ३५ ॥

प्रभावली

सति । देशः; सालग्रामशैलदेशः । क्षेत्रतीर्थयोर्वैभवं दर्शयति—पुनरिति । पुनरुपजनिः पुनर्भवः । तैः प्रसिद्धैर्मुनिभिः पूर्वं चिरपरिचितम् । अस्मिन् विमले चक्रतीर्थे सकृदपि मज्जतः पुंसः भवजलनिधेः गर्तात् एतद्देहावसाने उन्मज्जनं संसारान्मोक्षः स्यात् ॥ ३४ ॥

न रोचत इत्यत्र हेतुमाह—अयमिति । अयं देशः सालग्रामशिलान्तरव-

[1] सुधाप्तिमनोरथैः—ख.

तर्कः—इदं तर्हि भागीरथीतरङ्गधौतपर्यन्तभागभावितनियमैः परमर्षिभिरुपसेवितं भवत्कटाक्षपात्रं भवतु [1]वारानसीनामकनदीद्वय-परिगतोपकण्ठं वसुमतीललामभूतं वाराणसीक्षेत्रम् ।

विवेकः—(सबहुमानमवलोक्य)

लब्ध्वापि मूर्तिमधरीकृतपूर्वरूपां
रत्या समेत्य च रथाङ्गभृतः प्रसादात् ।
धर्मोपरोधमिह नेच्छति पुष्पधन्वा
त्रैयम्बकात्प्रचकितो[2] नयनात्तृतीयात् ॥ ३६ ॥

प्रभाविलासः

लब्ध्वेति । मूर्तिम्; प्रद्युम्नरूपाम् ॥ ३६ ॥

प्रभावली

स्थितधनलेशलोलुपैः तस्करव्याधैः उपहतः । हेतुगर्भमिदम्; उपहतत्वादित्यर्थः । बहुगुणं यत्परं ब्रह्म, तस्य प्रेक्षा साक्षात्कारः, स एव सुधाब्धिः, तत्र—सुधाप्तीति पाठान्तरम्; तदा सुधाया आप्तौ प्राप्तौ—मनोरथो येषां तैः । योगमारभ्य च मुहुः उपनतप्रत्यासेधैः; मुहुः प्राप्तमनोरथविघ्नैः । उज्झितः; त्यक्तः ॥ ३५ ॥

तर्हि वाराणसीक्षेत्रं दृश्यतामित्याह—इदं तर्हीति । पर्यन्तभागेषु स्वीकृतनियमैः । वारणा असीति नामवन्नदीद्वयपरिवृतसमीपं ललाम तिलकम् । अत्र कामक्षोभो नास्तीत्याह—लब्ध्वापीति । अधःकृतपूर्वजन्मसौन्दर्यां मूर्तिं रथाङ्गभृतः कृष्णस्य प्रसादात् लब्ध्वापि रत्या स्वकान्तया भूयः समेत्यापि पुष्पधन्वा त्रैयम्बकात् ललाटस्थात् तृतीयान्नयनात् प्रचलितः, क्षोभितत्वादित्यर्थः । इह क्षेत्रे धर्मोपघातं कर्तुं नेच्छति ॥ ३६ ॥

[1] वारणासीनामक—ग.    [2] प्रचलितः इति प्रभावलीपाठः

अपिच,

इह पुरुषमजानतां पुराणं[1] नियतिवशेन निमीलतां दयालुः ।
उपदिशति पतिः स्वयं पशूनामुपनिषदामपि दूरगं रहस्यम् ॥३७॥

अद्यत्वे पुनरतिचिरसमुपचितदुरितावलीमलीमसैः, अनाघ्रातभागवतधर्मैः, अवैदिकयवनतुरुष्काद्यभिन्नजातीयदेशाधिपतिसंनिधानलुप्तशौचाचारैः पुरुषैरविशेषिततत्रिचतुरसाधुसमेतामेतां वाराणसीं समाधिसौधाधिरोहसोपानभूतधारणाध्यानसमाधीनां सिद्धिस्थानमिति न मन्यते चेतः । तथाहि—

**प्रभाविलासः**

**इहेति । पुराणं पुरुषम्**; नारायणम् । **अजानताम्**; अश्रुतवेदान्तानामित्यर्थः । **निमीलताम्**; शरीरं त्यजताम् । **रहस्यम्**; तारकब्रह्मरूपम्[2] । अत्र,

"मुमुक्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम् ।
उपदेक्ष्यसि मन्मन्त्रं स मुक्तो भविता शिव ॥"

इति वचनं द्रष्टव्यम् ॥ ३७ ॥

**प्रभावली**

अत्र गुणान्तरमप्यस्तीत्याह—अपिचेत्यादि । इह वाराणस्यां **पुराणं पुरुषम्**; भगवन्तं श्रीमन्नारायणम् । **अजानताम्**; अज्ञानामपीति भावः । मरणकाले विधिवशेन **निमीलताम्**; म्रियमाणानाम् । कर्णे इति शेषः । **पशूनां पतिः** दयालुत्वात् **स्वयमेवोपनिषदां दूरगं रहस्यम्**; "यतो वाचो निवर्तन्ते" इत्युक्तं विष्णवाख्यं तारकं ब्रह्म **उपदिशति** ॥ ३७ ॥

इदमप्यद्य समाधिस्थानं न भवतीत्याह—**अद्यत्व** इति । **अद्यत्वे**; अद्य । **समुपचितम्**; समुपार्जितम । **मलीमसैः**; मलिनैः । **भागवतधर्माः**; पञ्चकालनिरतत्वादयः । तुरुष्कादिसजातीयो देशाधिपतिः । लुप्तस्मृत्युक्तशौचाचारैः **अविशेषितैः** पूर्वोक्तपुरुषवदाभासमानैः **त्रिचतुरैः** परमार्थसाधुभिः समेताम् । धारणा-

[1] जनानां—क.

[2] श्रीरामषडक्षरीमिति सांप्रदायिकोऽर्थः ।

**सा काशीति न चाकशीति भुवि सायोध्येति नाध्यास्यते**
**सावन्तीति न कल्मषादवति सा काञ्चीति नोदञ्चति ।**
**धत्ते सा मधुरेति [1]नाग्रिमधुरां नान्यापि मान्या पुरी**
**या वैकुण्ठकथासुधारसभुजां रोचेत नो चेतसे ॥ ३८ ॥**

प्रभाविलासः

**सेति** । न **चाकशीति**; न प्रकाशते । **नाध्यास्यते**; नावस्थीयते । **नोदञ्चति**; उन्नतिं न प्राप्नोति । **अग्रिमधुराम्**; श्रेष्ठताम् । **अन्येति**; माया संगृह्यते । अत्र,

"न यत्र वैकुण्ठकथासुधापगा न साधवो भागवतास्तदाश्रयाः ।
न यत्र यज्ञेशमखा महोत्सवाः सुरेशलोकोऽपि न वै स सेव्यताम् ॥"
"तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा निरमन्त्युशिक्क्षयाः[2] ॥"

इत्यादिकमनुसंधेयम् ॥ ३८ ॥

**प्रभावली**

**ध्यानसमाधीनाम्**; धारणा नाम प्रत्याहृतस्य मनसो ध्येये निरोधः । ध्यानं ध्येयस्वरूपसंततचिन्तनम् । समाधिः साक्षात्कारः । तेषां **सिद्धिस्थानम्** । तदुपपादयति—**सा काशीति**; नाममात्रेण प्रशस्ततया **न चाकशीति** न शोभते । भागवताधिष्ठितमेव शोभते, नान्यदिति भावः । एवं सर्वत्र योजनीयम् । **सा** आयोध्या च अयोध्येति नाममात्रेण सद्भिर्नाध्यास्यते । सा अवन्तीत्युक्ता मुक्तिपुरी **अवन्तीति** नाममात्रेण **कल्मषात् नावति** न रक्षति । **सा काञ्चीति** प्रसिद्धा पुरी नाममात्रेण; **नोदञ्चति** श्रैष्ठ्यं न प्राप्नोति । **सा** मधुरेति प्रसिद्धा पुरी नाममात्रेण अग्रिमस्य प्रशस्तस्य वस्तुनो **धुरं न धत्ते** । **अन्यापि** द्वारवत्यादिरपि नाममात्रेण **न मान्या** । या भागवतानां **मनसे न रोचते**; यत्र भागवताभिमतिर्नास्तीति तैः परित्यक्ता भवति । तस्मात् पूर्वोक्ता देशाः संयमस्थानं न भवन्तीत्युक्तम् ॥ ३८ ॥

[1] नोत्तमधुरां—क.        [2] उशिक्क्षयाः, रम्यवसतय इत्यर्थः ।

(विचिन्त्य) अहो, दुर्विलसितं महामोहस्य ।

**विटविदूषकगायकवैशिकैर्विषमितेव विभाति वसुंधरा ।**
**क नु निवेशमुपेत्य परं पदं विमृशता भवितव्यमिह क्षणम् ॥३९॥**

तर्कः—देव, भवन्तमन्तरेण को नाम सदसत्परीक्षार्हः ? आस्तामयमाजानशुद्धोऽप्यन्तिमयुगसंक्षोभगलितसौभाग्यो मध्यमदेशः । दक्षिणापथस्तु निरीक्षणीयः । तत्र हि मरुद्वृधादिमहानदीसेवितेषु श्रीरङ्गादिषु तेषु तेषु स्थानेषु नारायणपरायणा महान्तः सांप्रतमपि संभवन्तीति पौराणिकाः पठन्ति ।

**प्रभाविलासः**

**विटेति** । विटादयो नायकसहायाः । तदुक्तममृतानन्दीये—

"नेतृचित्तानुकूलैकविद्यो विट इतीरितः ।
विदूषकः प्रसङ्गेषु नेतृहास्यकरो मतः ॥"

इति । **वैशिकः**; वेश्यापतिः । तल्लक्षणं त्वधस्तादुक्तम् ॥ ३९. ॥

**दक्षिणापथः**; विन्ध्याद्दक्षिणदेशः । "विन्ध्यात्तु दक्षिणो देशो दक्षिणापथसंज्ञितः" इत्यभिधानात् । **पौराणिकाः पठन्तीति**;

**प्रभावली**

**दुर्विलसितम्**; दुरुज्जृम्भणं महामोहस्य । समाधिस्थानयोग्यत्वाभावं निगमयति—**विटेति** । **विटः**; धूर्तः । **विदूषकः**; परिहासकः । **गायकाः**; नरस्तोत्रिणः । **वैशिकाः**; वेश्यापतयः । **विषमिताः**; विषमतां प्राप्ताः । वासं लब्ध्वा **परं पदं** ब्रह्म **क्षणं** ध्यायता **क नु भवितव्यम्**; न कुत्रापीति भावः ॥३९॥

**परीक्षार्हः**; परीक्षाचतुरः । **आजानशुद्धः**; स्वतः शुद्धः । कलियुगे यः संक्षोभः, तेन सौभाग्यहीनः । **मरुद्वृधा**; कावेरी । **पौराणिकाः**; शुकादयो

विवेकः—सूत, प्रमाणानुगुणवृत्तिः खल्वसि। किन्त्ववधारितधर्मविप्लवमनार्यजनभूयिष्ठमचिरादेव विन्ध्याचलपरिसरमतिलङ्घयेम। पश्य—

**मिषतो विलोभयन्ती मृगतृष्णाभिस्तरङ्गिताभिरसौ।**
**मरुभूमिरुज्झितरसा दुर्जनपरिषदिव दूरपरिहार्या॥ ४०॥**

### प्रभाविलासः

"कलौ खलु भविष्यन्ति नारायणपरायणाः।
क्वचित्क्वचिन्महाभागा द्रमिडेषु च भूरिशः॥
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी।
कावेरी च महाभागा प्रतीची च महानदी॥
ये पिबन्ति जलं तासां मनुजा मनुजर्षभ।
प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः॥"

इति। **मिषत इति।** **मिषतः**; पश्यतः। **मृगतृष्णाभिः**; मरीचिकाभिः। अन्यत्र द्रव्यगवेषणाशालिभिः। **उज्झितरसा**; उज्झितजला, विगतस्नेहा च॥ ४०॥

### प्रभावली

भागवतादिषु पठन्ति—"क्वचित्क्वचिन्महाभागा द्रमिडेषु च भूरिशः" इत्यादिभिः। **प्रमाणानुगुणवृत्तिः**; प्रमाणानुग्राहकः। **किंतु**; अथापीत्यर्थः। **अवधारितः** निश्चितः धर्मविप्लवः यत्र तम्। **परिसरम्**; समीपम्। **अचिरेण लङ्घयेम**। लङ्घनीयत्वं सदृष्टान्तमाह—**मिषत इति**। **मिषतः**; अनिमिषं पश्यतोऽपि जनान् **लोभयन्ती**; प्रतारयन्ती। **तरङ्गिताभिः**; संजाततरङ्गाभिः। **मृगतृष्णिकाभिः**; मरीचिकाभिः। **उज्झितरसा**; निरुदका। अन्यत्र उज्झितस्नेहा। मृगतृष्णिकासदृशाभिस्तरङ्गिताभिर्वाग्भिर्बुद्धिमतोऽपि प्रतारयन्ती दुर्जनपरिषदिव दूरतः परिहार्या॥ ४०॥

अयं चात्र हुतवहज्वालामध्यमध्यासीन इव दृश्यते पथिकः । आः कष्टम् ;

**अतिमथनगृहीतानन्धकूपस्य पान्थः**
**कतिचन जलबिन्दून् कुण्डिकापीतशेषान् ।**
**करचरणकपोलेष्वर्पयन् गाढतापः**
**कथमपि [1]मरुभूमिं क्रामति क्लान्तदेहः ॥ ४१ ॥**

अपिचात्र कतिचिदधिगतकुसीदवृत्तयः कृच्छ्रलब्धधनमुदितकृपणतरमानसाः [2]कीकटाः पुरुषाः,

**न धर्ममनुवर्तन्ते न कामं नापुनर्भवम् ।**
**अर्थमेकमुपाश्रित्य दुःखमेवोपभुञ्जते ॥ ४२ ॥**

प्रभाविलासः

**अतिमथनेति । कुण्डिका ;** कमण्डलुः । दूरस्थित्यातिमथनग्रहणेनार्धं गलितम् । आतपपरितप्तकुण्डिकया ततोऽर्धम् । अतः स्वल्पमवशिष्टमिति पानेऽपर्याप्ततया श्रमापनयनाय करादिष्वर्पयन्तीत्युक्तम् ॥ ४१ ॥

**कीकटाः ;** म्लेच्छाः । **न धर्ममिति । अपुनर्भवम् ;** मोक्षम् ॥ ४२ ॥

**प्रभावली**

**अत्र ;** मरुभूमौ । **अयम् ;** पथिकजनः । **गाढतापः पान्थः अतिमथनेन** अतिप्रयासेनोद्धृतान् । **अन्धकूपस्य ;** अन्धकारावृतत्वात् । **कतिचन जलबिन्दून्** । कीदृशान् ? **कुण्डिकापीतशेषान् ;** आतपशुष्कः कुण्डिकाहृतं जलं किंचित्स्वयं पिबति; तच्छेषान् जलबिन्दून् करे चरणे कपोलयोश्चार्पयति । तथापि **क्लान्तदेहः** सन् **कथमपि** मरुदेशं **क्रामति** अतिक्रामति ॥ ४१ ॥

**अत्र ;** मरुभूमौ । **कचित्प्राप्तवार्धुषिकवृत्तयः** । स्वभावतः कृपणतरं कृच्छ्रलब्धधनमुदितं मानसं येषां ते । **कीकटाः ;** क्षुद्राः । तादृशाः केचन **धर्ममपि नानुतिष्ठन्ति** । काममपि नानुवर्तन्ते । मोक्षमपि नानुवर्तन्ते । **अर्थमेकमेवाश्रित्य** धर्मादीननपेक्षमाणाः **दुःखमेव** प्राप्नुवन्ति ॥ ४२ ॥

[1] मरुदेशं—क. [2] कीटकापुरुषाः—ख.

एष चैषामाधिपत्यमधिरूढो[1] नवधनमूढः—

प्रलपति घूर्णति स्खलति मुह्यति हुंकुरुते
न च पदवीमवैति न च धाम न च त्रपते ।
विकृतिशतप्रसूतिविषमाशयदोषभुवा
धनमदिरामदेन धमतीव धरावलयम् ॥ ४३ ॥

अपिच,

अभिजनवयोविद्यावृत्तैरकिल्बिषकर्बुरै-
रतिशयभृतस्तृप्यन्[2] मत्वा तृणाय महीयसः ।
नवधनमदक्षीबः क्षुद्रो नटप्रकृतिः क्रमा-
न्नरकिगणनालेख्यारूढं[3] न किं [4] तिपत्स्यते ॥ ४४ ॥

प्रभाविलासः

धनगर्वितं मद्यपसाम्येनाह—प्रलपतीति । **विकृतीनां** विकाराणां **शतस्य प्रसूतिः** । **विषमाशयः** कुटिलाभिप्रायः, स एव **दोषः**, तस्य **भूः** उत्पत्तिस्थानम । विकृतिशतप्रसूतिश्चासौ विषमाशयदोषभूश्चेति कर्मधारयः । **धमतीव**; पुटपाकेन स्वर्णयतीव ॥ ४३ ॥

**अभिजनेति** । किल्बिषैः कर्बुरा न भवन्तीति **अकिल्बिषकर्बुराः**,

प्रभावली

**एष च कश्चित्** एषां कीकटानामाधिपत्यमधिरूढः नवधनेन मूढः । कथम्? प्रलपतीत्यादि । यत्किंचित्प्रलपति । **घूर्णति**; भ्रमति । **स्खलति**; कृत्यं मुञ्चति । **मुह्यति**; अकृत्यमुपादत्ते । निरपराधिनः समीपस्थान् **हुंकुरुते** । न च स्वमार्गं जानाति । **न च धाम**; प्राप्यं प्रयोजनं च न जानाति । स्वगृहमार्गमपि न जानाति । स्वगृहं च न जानाति । एवं सत्यपि परेभ्यो **न लज्जते** । यथा मदिरामदान्धः । तदेवाह—एवं विकारशतानामुत्पत्तिस्थानस्य **विषमाशयस्य दोषाः** प्रलपनादयः, तान् भावयतीति **तद्भूः**, तेन । **धनमद एव मदिरा**, तत्प्रयुक्तेन **मदेन** भूमण्डलं **धमन्निव** वर्तते ॥ ४३ ॥

इममेव भङ्ग्यन्तरेण विनिन्दति—**अभिजनेति** । **नटप्रकृतिः**; सदा

[1] आरूढः—ख. [2] हृप्यन् इति प्रभाविलासपाठः [3] आरूढिं—क. ख. [4] प्रतिपद्यते—ग.

हन्त, निरर्थिका [1]खल्वीदृशपुरुषसृष्टिरीश्वरस्य । अथवा महतामुपकाराय । तथाहि—

**विदधातु धाम तमसा कृतेन किं**
**यदि वा न वेत्ति न विधिर्न वा वयम् ।**
**प्रथमोपकारि चरमं यतस्ततः**
**प्रतियोगिनो भवति [2]हन्त सार्थता ॥ ४५ ॥**

प्रभाविलासः

निर्दोषा इत्यर्थः, तैः । इदमभिजनादिविशेषणम् । **दृप्यन्**; दृप्तः सन् । **आलेख्यारूढम्**; आलेख्यलिखितम् । **न प्रतिपत्स्यते किम्**; न जानाति किम् ॥ ४४ ॥

**विदधात्विति** । **विधिः**; चतुर्मुखः । **धाम**; तेजः । **विदधातु**; सृजतु । **कृतेन**; सृष्टेन । तमसा किम्; किं प्रयोजनम् । तेजःसृष्टिः सप्रयोजनत्वादुपपद्यते; निष्प्रयोजनं तमः किमिति सृष्टवानित्यर्थः । अज्ञानादिति चेत्, नेत्याह—**यदि वेति** । **न न वेत्ति**; वेत्त्येवेत्यर्थः । वयमपि

प्रभावली

अशुचिः । **अभिजनेन** कुलेन, **वयसा** जीवितकालेन, **विद्यया**, **वृत्तैः**राचारैः, दोषासंस्पृष्टैरित्यर्थः । अतिशयवतो **महीयसः** महत्तरजनान् **तृणाय मत्वा** । तत्र हेतुः—नवधनमदेन **मत्तः** । अयं क्रमात् नरकाननुभवन्तीति नरकिणः, तेषां **गणनालेख्ये**; "ते वै निरयगामिनः" इत्युक्तरीत्या 'इमे नरकिणः' इति या गणना, तदर्थलेख्ये चित्रगुप्तस्य गणनापत्रे, **आरूढं** लिखितम्; त्वमिति शेषः । किं न ज्ञास्यति । ज्ञास्यति चेत्, नैवमाचरेदिति भावः ॥ ४४ ॥

पक्षान्तरमाह—**अथवेति** । तेषां सृष्टिः **महतामुपकाराय**; क्षुद्राभावे महतां महत्त्वस्याप्रकाशनात् । एतदुपपादयति—**तथाहीति** । **विदधात्विति** । **विधिः**; ब्रह्मा । **धाम**; तेजः । **विदधातु**; सृजतु । सृष्टेनान्धकारेण किं

[1] खल्वीदृशी—ग. [2] तस्य—क.

तर्कः—(रथवेगमभिनीय)

**अतिक्रान्तो विन्ध्यः शबरगणभूयिष्ठगहनः**
**पुरस्तात्किष्किन्धावनमथ च पश्चादपसृतम् ।**
**असह्यप्रारम्भा परिपतति सह्याद्रिशिखरा-**
**दसौ कावेर्याख्या सरिदमरसिन्धोरधिगुणा ॥ ४६ ॥**

प्रभाविलासः

न विद्म इति नेत्याह—**न वेति**। तर्हि सप्रयोजनत्वे ज्ञाते प्रयोजनं वक्तव्यमित्यत आह—**प्रथमेति। चरमम्**; तमः। प्रथमस्य तेजसः उपकारि, तमसोऽभावे तेजस आकाङ्क्षाभावात। **ततः**; तस्माद्धेतोः। **तस्य प्रतियोगिनः**, तमसः। **सार्थता**; सप्रयोजनता भवति ॥ ४५ ॥

**अतिक्रान्त इति। शबरगणः**; म्लेच्छसमूहः। **अमरसिन्धोरधिगुणेति**; कावेर्याः विष्णुपद्या आधिक्यप्राप्तिर्व्यज्यते ॥ ४६ ॥

प्रभावली

प्रयोजनम्? **यदि वा**; **विधिः** स्रष्टा **न वेत्तीति न**। अथवा **वयमेव न विद्म इति न**। यतश्चरमं तमः सृष्टं **प्रथमस्य** तेजस उपकारि, अन्धकाराभावे तेजसो निष्प्रयोजनत्वात्। **ततः** तमसः सकाशात्, **तस्य प्रतियोगिनः** तेजसः **सार्थता** सप्रयोजनता सिध्यति। तद्वदीश्वरस्य मूढसृष्टिरपि महतामुपकारायेति भावः ॥ ४५ ॥

**अतिक्रान्त इति। शबराः**; निषादाः, तेषां गणभूयिष्ठत्वात् गहनः। **पुरस्तात् किष्किन्धावनं** दृश्यत इत्युक्त्यनन्तरमेतद्वनं पश्चाद्भागे अपसृतमतीतमित्युच्यते, रथवेगातिशयात्। **अथ च** कावेरी दृश्यत इत्याह—**असह्येति**। **प्रारम्भः**; वेगः। **सह्याद्रिशिखरात परिपतति**; प्रवहति। **अमरसिन्धोः**; गङ्गायाः सकाशात् अधिकपवित्रत्वशीतत्वनिर्मलत्वतापहरत्वादिगुणा ॥ ४६ ॥

विवेकः—(परितोऽवलोक्य सविषादम्)

इमां मधुरपानीयां दक्षिणापथजाह्नवीम् ।
चोरैः परिवृतां मन्ये विद्यां कुमतिविप्लुताम्[1] ॥ ४७ ॥

इह हि परित्यक्तपरिग्रहा अपि परिसरभाजः पाटच्चरगणजनितरणरणकचटुलचेतसः प्रवातकदलीन्यायेन वर्तन्ते । अपिचामी कलियुगधर्मसंचया इव कतिचन पुरुषा वसुमतीसुतनुहारायमाणानग्रहारानुपघ्नन्ति । तथाहि—

मुक्ताहारनिषेविता अपि न तद्वृत्त्यै दिशन्त्यन्तरं
बन्धे गाढविमर्दनेऽपि न जहत्यन्योन्यसंपीडनम् ।
उष्णे शीतलतामुपेत्य शिशिरे प्राप्ते भजन्त्युष्णतां
कामान्तःपुरचेटिकाकुचतटीकाठिन्यवन्तः खलाः[2] ॥ ४८ ॥

प्रभाविलासः

इमामिति । **विद्याम्**; ब्रह्मविद्याम् । **कुमतिविप्लुताम्**; कुदृष्टिविपर्यासितार्थाम् ॥ ४७ ॥

**मुक्तेति । मुक्ताहारैः**; नियताहारैः सात्त्विकैः सेविताः । **तद्वृत्त्यै**; तेषां जीवनाय । अन्यत्र मुक्तामणिहारवर्तनाय । "वृत्तिर्वर्तनजीवने"

प्रभावली

चोरैराक्रान्तत्वदर्शनात् विषादातिशयः । दक्षिणापथदेशस्य जाह्नवीस्थानीयाम् । कुमतिविप्लुतां विद्यामिव ॥ ४७ ॥

चोरोपद्रवं दर्शयति—**इह हीति** । परित्यक्तपरिग्रहाः सर्वसङ्गपरित्यागिनोऽपि भिक्षवः चोरगणजनितेन रणरणकेन भयेन चञ्चलचेतसः, **प्रवातः** चण्डवायुः, तदाहतकदलीन्यायेन वर्तन्ते । **कलियुगधर्मः**; पापं, तत्समूहा इव । **वसुमती**; भूमिः, सैव सुतनुः, तस्या हारवत् स्थितान् हिंसन्ति । **मुक्तेति** । अत्र दुर्जनकुचयोः श्लेषः । मुक्तः आहारः यैः, चोरभयादिति भावः । यद्वा **मुक्ताहाराः**

[1] संप्लुताम् —क. [2] अत्र चेटिकाकुचतटीदृष्टान्तेन खलानामव्यवस्थितप्रवृत्तित्वं गम्यते.

**तर्कः**—देव, अयं पुनरमुष्याः परिसरे पुरुहूतपुरोहिताभ्यधिकबुद्धिभिः पुराणपुरुषचरणारविन्दमधुकरायमाणमानसैर्मनीषिभिरधिष्ठितो यदुकुलसार्वभौमस्य भगवतः परिग्रहात् प्रख्यातगुणसमाख्यो यादवाचलो नाम पर्वतोत्तमः । इह च,

**प्रभाविलासः**

इत्यमरः । **अन्तरम्**; अवकाशम् । **बन्धे**; शृङ्खलादिना बन्दीकरणे । **गाढविमर्देनेऽपि**; कशाघातादिना पीडनेऽपि । अन्यत्र कञ्चुकबन्धे करपीडनेऽपि । **उष्णे**; परुषे, उष्णकाले च । **शीतलताम्**; मृदुताम्; शिशिरतां च । शीतोष्णपदे उभयत्र सद्विपर्ययपरे । अत्र

"कूपोदकं वटच्छाया ताम्बूलं तरुणीस्तनौ ।
शीतकाले भवेदुष्णमुष्णकाले च शीतलम् ॥"

इत्येतद् द्रष्टव्यम् ॥ ४८ ॥

**प्रभावली**

परित्यक्तरसवदाहाराः संन्यासिनः, तैर्निरन्तरसेव्यमाना अनुवर्त्यमाना अपि । **तद्वृत्त्यै**; अनुवर्तिजनजीवनाय । **अन्तरम्**; अवकाशं **न दिशन्ति** । अन्यत्र मुक्तामयहारैरलंकृता अपि हारस्य वृत्तये अतिनिबिडत्वात् अवकाशं न ददति । **बन्धे**; शृङ्खलादिबन्धे, कदाचिद्राजभिर्निगृह्य स्वेषां निगलबन्धे सत्यपि । राजभिर्गाढविमर्दने कृतेऽपि । अन्यत्र गाढविमर्दन इति बन्धविशेषणम् । अन्योन्यसंपीडनं न जहति । उष्णे; उग्रपुरुषे विषये, अन्यत्र उष्णकाले । **शीतलताम्**; **मृदुतां** शिशिरत्वं च । **शिशिरे**; शान्तपुरुषे शिशिरकाले च । **उष्णताम्**; तीक्ष्णताम्, उष्णस्पर्शाश्रयत्वं च भजन्ति । ते क इत्यपेक्षायां **कामान्तःपुरस्य चेटिका** दासी, तस्याः कुचतटीवत् काठिन्यवन्तः खलाः दुर्जनाः ॥४८॥

**अमुष्याः**; कावेर्याः । **पुरुहूतपुरोहितः**; बृहस्पतिः । **मनीषिभिः**; विद्वद्भिः । **भगवतः**; कृष्णस्य । प्रसिद्धगुणनामधेयः यादवेन परिगृहीतत्वात् यादवाचल इति गुणनाम । **इह च**; यादवाचले । श्रीमान् लक्ष्मणमुनिर्जयति । स कीदृश इत्यत्राह—**कपर्दीति** । **कपर्दिमतकर्दमम्**; पाशुपताख्यपङ्कम् । **कपिलस्य कल्पना**; सांख्यमतम्, तदेव वागुरा जालम् । **दुरत्ययम्**; दुरतिक्रमं, दुरव-

कपर्दिमतकर्दमं कपिलकल्पनावागुरां
दुरत्ययमतीत्य तद् द्रुहिणतन्त्रयन्त्रोदरम् ।
कुदृष्टिकुहनामुखे[1] निपततः परब्रह्मणः
[2]करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिः ॥ ४९ ॥

अपिच बादरायणादिभिरभ्यर्चिते दक्षिणबदरिकाश्रमे नारायणगिरौ,

लक्ष्मीकौस्तुभलक्षणेन वपुषा वाचं विनैव स्वयं
श्वेतद्वीपनिवासिनामिव दिशन्संतोषमन्तर्मुखम् ।
विद्यावीचिसहस्रसंभ्रममिलद्दुग्धार्णवाडम्बरे
स्थानं संयमिसार्वभौमविजयस्थाने विधत्ते हरिः ॥ ५० ॥

प्रभाविलासः

**वागुरा**; मृगबन्धनी ॥ ४९ ॥

**वाचं विनैव**; प्रार्थनां विनैव । **विद्यावीचिसहस्रसंभ्रमेण मिलन्**

प्रभावली

गाहमिति यावत् । **द्रुहिणतन्त्रस्य**; योगमतस्य यन्त्रवत् स्थिरमुदरम् । **अतीत्य**; पूर्वोक्तमखिलं मतमतीत्यापि । **कुदृष्टयः**; शंकरादयः, तेषां **कुहना** प्रतारकयुक्तिः । तत्र निपतत इत्युक्त्या अन्धकूप इत्यवगम्यते । तस्य **मुखे अन्तः**, **निपततः परब्रह्मणः** निर्विशेषचिन्मात्रं ब्रह्मेत्युक्तस्य, उद्धरणार्थं **करस्य ग्रहणे**; ब्रह्मणः करग्रहणं नाम निर्विशेषचिन्मात्रत्वेनोक्तस्य ब्रह्मणः सविशेषचेतनत्वप्रतिपादनम् । तत्र **विचक्षणः** सन् **जयति** ॥ ४९ ॥

अत्र श्रीमान्नारायणो दिव्येन विग्रहेण पश्यतां संतोषं जनयंस्तिष्ठतीत्याह—**अपिचेति** । **बादरायणः**; व्यासः । दक्षिणापथे स्थितो बदरिकाश्रम इति

[1] कुहना मायाख्या वेताली । ब्रह्मणस्तन्मुखे निपतनं नाम तदाक्रान्तत्वात् चिदात्मत्वरूपस्वरूपनाशः.

[2] कचग्रहविचक्षणः इत्यपि क्वचित् पाठः । कूपे निमज्जतः पुरुषस्य जलोपरिदृश्यमानानां कचानां तटोपरिस्थितैर्ग्रहणं हि लोकानुभवसिद्धम् ।

[1]अमुं च

[2]कटाक्षलहरीमुहुःकबलितामृतस्तोमया
विलोचनयुगश्रिया विवृतसर्वदानव्रतम् ।
शुकादिभिरुपासितं शुभचरित्रभाजो जनाः
समस्तभयवारणं शरणयन्ति नारायणम् ॥ ५१ ॥

प्रभाविलासः

**दुग्धार्णवस्याडम्बर** इवाडम्बरो यस्मिन् । **संयमिसार्वभौमः** ; श्रीभाष्यकारः ॥ ५० ॥

**कटाक्षेति** । कटाक्षलहरीभिः मुहुः कबलितः अमृतस्य स्तोमो यया तया । अत्र नारायणपुरे प्राचीनाचार्याः प्रपत्त्यनुष्ठानं परिपालयन्तः कृतार्था अभूवन्निति संप्रदायः ॥ ५१ ॥

प्रभावली

प्रसिद्धो **नारायणगिरिरिति** स्वाभाविकं नाम, नारायणपरिगृहीतत्वात् । यादवाचल इत्यादीनि गौणनामानि । **लक्ष्मीति** । लक्ष्मीः कौस्तुभश्च वक्षःस्थलस्थौ लक्षणं चिह्नं यस्य तेन दिव्यविग्रहेण, श्वेतद्वीपवासिनामिव नारायणाचलवासिनां, **वाचं विनैव** अर्चासमाधिना संलापवाचं विनैव । श्वेतद्वीपे संलापेनापि संतोषं जनयतीति गम्यते । **अन्तर्मुखं** प्रत्यग्वस्त्वनुभवजनितं **संतोषं** जनयन् दिशन् । **विद्येत्यादि** ; विद्याया **वीचिसहस्रस्य संभ्रमेण** मिलितत्वात् दुग्धार्णवस्याडम्बरवति **संयमिसार्वभौमस्य विजयस्थाने** । पुरा किल भाष्यकारो जिनमतप्रविष्टराजसंनिधौ सप्रतिज्ञं बाह्यकुदृष्टीन् विजित्य तान् राज्ञा शिलाचक्रयन्त्रे पेषयामास । स च राजा श्रीभाष्यकारे निरतिशयभक्तिमान् तमाश्रित्य श्रीविष्णुवर्धनाख्यदास्यनाम्ना कथितोऽभूदित्यैतिह्यं श्रूयते । तत्र हरिः स्थानं विधत्ते ॥ ५० ॥

**अमुमिति** । **अमुं** श्रीमन्नारायणं **जनाः** सर्वे शठरिपुसहस्रगाथाप्रबन्धचतुर्थशतकप्रथमगाथोक्तरीत्या शरणयन्तीत्याह—**कटाक्षेति** । कटाक्षवीचिभिः मुहुः पीतामृतप्रवाहया ; अमृतप्रवाहविजयिकटाक्षलहरीयुतयेत्यर्थः ; विलोचन-

[1] अत्र चेति प्रभाविलासपाठः [2] कटाक्षलहरीमहः—क.

विवेकः—(सकौतुकमवलोक्य सविमर्शम्) सूत, सह्यपर्वत-प्रत्यासत्तेरसह्यपवनसंक्षोभसंत्रासितस्य दुर्बलबुद्धेः कथमत्रावकाशः?

यद्वा तावदयं भवेदधिगुणो वासो[1] यदुक्ष्माधरः
कर्णालंकृतिविभ्रमं भजति यः कर्णाटदेशश्रियः।
अन्यान्यप्यरविन्दलोचनपदानुध्यानमेधाविनां
स्थानान्यालप कौतुकं मम पुनः सर्वत्र निर्वर्तते ॥ ५२ ॥

तदन्यतो रथं प्रवर्तय।

**प्रभाविलासः**

**यद्वेति। अधिगुणः**; अधिकगुणः ॥ ५२ ॥

**प्रभावली**

युगस्य संपदा प्रकाशितसकलपुरुषार्थदानव्रतम्। **शुकादिभिः** भागवतैरुपासितं पूर्वं **कृतपुण्या** इदानीमपि सदाचारपरा जनाः **नारायणं** श्रीमन्तं **शरणयन्ति** शरणं गच्छन्ति। अस्य श्रीपदयोर्वक्षःस्थले च सविग्रहा श्रीरास्ते उपायोपेयदशयोरप्यस्य श्रीमत्त्वसूचनायेत्यैतिह्यं च वदन्ति ॥ ९१ ॥

असह्यपवनसंक्षोभदर्शनात् सविमर्शम्। **प्रत्यासत्तेः**; सामीप्यात्। **दुर्बलबुद्धेः**; चञ्चलबुद्धेः। **अवकाशः**; समाध्यवकाशः। अयमपि समाधिस्थानं न भवतीति भावः। पक्षान्तरमवलम्बते—**यद्वेति। अधिगुणः; अधिकगुणः**। यद्यपि द्वित्रा दोषाः सन्ति, तथापि दोषादधिकगुणत्वात् अयं यादवाचलः प्रथमं समाधेः स्थानं भवति। यः कर्णाटदेशसंपदः कर्णालंकारविलासं भजति। **अरविन्दलोचनस्य पदानुध्याने** समाधौ **मेधा** श्रद्धा, तद्वतां युञ्जानानां योग्यानि **अन्यान्यपि स्थानानि आलप**; दर्शयेति यावत्। मम तु सर्वत्र इतोऽन्यत्रापि स्थानमस्ति वेति द्रष्टुं कौतूहलं वर्तते ॥ ९२ ॥

[1] गुणावासः—क.

तर्कः—(तथा कृत्वा) देव, दृश्यतामसौ दम्भोलिदारुणपरशुदारितदुष्टराजन्यरुधिरझरभरितबहुमहाह्रदतर्पितपितृगणस्य पात्रसात्कृतभूमण्डलस्य भगवतो भार्गवस्य दिव्यप्रायो निवासदेशः । अत्र हि,

नाहं नापि च मत्सुतो न च सुराः सर्वे न चामी सदा
ध्यानारोपितचेतसो मुनिगणा जानन्ति विष्णोः पदम् ।
इत्थं नाभिसरोजशायिपृथुकव्याहारमाकर्णय-
ञ्छेते पन्नगसार्वभौमशयने श्रीपद्मनाभः श्रिया ॥ ५३ ॥

प्रभाविलासः

नाहमिति । मत्सुतः; शंकरः । पृथुकः; शिशुः । अत्र,

"यन्न जानन्ति मुनयो न चाहं न च शंकरः ।
जानन्ति परमेशस्य तद्विष्णोः परमं पदम् ॥"

इति चतुर्मुखवचनमनुसंधेयम् ॥ ५३ ॥

प्रभावली

तर्हि मलयालदेशो दृश्यतामित्याह—असाविति । दम्भोलिः; वज्रं, तद्वत् । भरितम्; पूर्णम् । पात्रे; योग्ये । काश्यपे सात्कृतं दत्तम् । भार्गवस्य; परशुरामस्य । निवासदेशः दिव्यदेशबहुलः दिव्यदेशसदृशो वा । अत्रापि श्रीपद्मनाभादयो दिव्यदेशा बहवः सन्ति । तत्र तावत्पद्मनाभो द्रष्टव्य इत्याह—अत्र हीत्यादि । नाभिपद्मस्थबालब्रह्मवचनं दर्शयति—नाहमित्यादिना पूर्वार्धेन । अहं विष्णोः पदं दिव्यस्वरूपं चरणप्रभावं वा परमं पदं वा यथावन्न जानामि । मत्सुतः शंकरो रुद्रोऽपि च न जानाति । इन्द्रादयः सर्वे च न जानन्ति । सदा ध्याने आरोपितचेतसः अमी मुनिगणा अपि न जानन्ति । एवं बालत्वात् शायित्वम् । पृथुकः; अर्भकः, ब्रह्मेत्यर्थः । व्याहारम्; उक्तिम् । पन्नगसार्वभौमः शेषः, तस्मिन् शयने पद्मनाभः श्रिया सह शेते । अत्र,

"यन्न देवा न मुनयो न चाहं न च शंकरः ।
जानन्ति परमेशस्य तद्विष्णोः परमं पदम् ॥"

इत्याद्यनुसंधेयम् ॥ ५३ ॥

**विवेक:**—(दृष्ट्वा सहर्षमञ्जलिं बध्नन्)

**क्रोधाग्निं जमदग्निपीडनभवं संतर्पयिष्यन्क्रमा-**
**[1]दक्षत्रामभिसंततक्ष य इमां त्रिःसप्तकृत्वः क्षितिम् ।**
**दत्वा [2]कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वसन्न-**
**ब्रह्मण्यमपाकरोतु भगवानाब्रह्मकीटं मुनिः ॥ ५४ ॥**

(विचिन्त्य) अयं खलु मलयाचलवासिनां महर्षीणां निवृत्तिधर्ममुपदिश्य यथाधिकारं परिमितमतीनामिह प्रवृत्तिधर्मं प्रवर्तयन्नास्ते । अपिच,

प्रभाविलास:

**क्रोधाग्निमिति । जमदग्निपीडनभवम्**; कार्तवीर्येण जमदग्निहननजनितम् । **अभिसंततक्ष**; तक्षणसाधनेन परशुना अभितः समीचकार । **सिन्धुमास्कन्द्य**; सिन्धुं शोषयित्वा, पृथिव्या विप्रेभ्यो दानात् ॥ ५४ ॥

## प्रभावली

पद्मनाभाय **सहर्षमञ्जलिं बध्नन्**; नमस्कृत्य । अथ भार्गवाद्रामात् सर्वेषामभिलषितमाशास्ते—**क्रोधाग्निमिति** । जमदग्नेः पितुः पीडनेन संजातं स्वस्य **क्रोधाग्निं** संतर्पयितुकाम इव; "लक्षणहेत्वोः" इति शतृप्रत्ययः । **क्रमेण इमां** भूमिम् **अक्षत्त्राम्**; क्षत्त्रियजातिरहितां यथा तथा । **त्रिःसप्तकृत्वः**; एकविंशतिवारम् । **अभिसंततक्ष**; अभितस्तनूचकार । अथ **तां भूमिं क्वचन बर्हिषि** अश्वमेधे काश्यपाय **दक्षिणां दत्वा** पृथिव्यामवकाशाभावात् **सिन्धुं** पश्चिमसमुद्रम् **आस्कन्द्य** अभिभूय तद्दत्ते मलयालदेशे वसन् मुनिः भार्गवः **आब्रह्मकीटं** ब्रह्माणमारभ्य कीटावधि सर्वस्य जन्तुजातस्य **अब्रह्मण्यं** दुरितं निरस्यतु ॥ ५४॥

अयमपि समाधिस्थानं न भवतीत्याह—**अयं खल्विति** । **अयम्**; भार्गवः । इदानीमिति शेषः । अल्पमतीनामधिकारानुगुणं प्रवृत्तिधर्मप्रवर्तनमेको

[1] अक्षत्रामिह—ख. [2] बर्हिषि—क.

बुभुक्षाभिक्षाकब्रुवपठितमिथ्यागुणगणा
मुमुक्षूनक्षुद्रानिह मुहुरुपघ्नन्ति परुषैः ।
कदध्वोपानीतद्रविणकणदुर्मानमदिरा-
गुणक्षैब्यक्षुभ्यन्मतिकलहकाकोलकलुषैः ॥ ५५ ॥

तर्कः—मलय एव तर्हि विलोक्यतां देवेन ।

विन्ध्यस्तम्भप्रकटमहिमा विष्वगाचान्तसिन्धुः
कुम्भीसूनुर्दनुजकबलग्रासदीप्तोदराग्निः ।
नाकाधीशन्नहुषभुजगीकारदुर्वारशक्ति-
र्ब्रह्मापत्यं मुनिरिह वसन्भ्राजते मुक्तकल्पः ॥ ५६ ॥

प्रभाविलासः

**बुभुक्षेति । बुभुक्षया ;** भोजनेच्छया । **भिक्षाकब्रुवैः ;** अशिष्टब्राह्मणाभासैरिति यावत् । **पठिताः मिथ्यागुणगणाः** अविद्यमानगुणगणाः येषां ते तथोक्ताः । **कदध्वना** कुमार्गेण **आनीतैः द्रविणकणैः** धनलवैः संजातः **दुर्मानः** दुरहंकार एव मदिरा, तस्या **गुणेन** यत् **क्षैब्यं** मत्तता, तेन **क्षुभ्यन्त्या मत्या कलह** एव **काकोलः** कालकूटः, तेन कलुषैः परुषवचनैः **अक्षुद्रान् मुमुक्षून् उपघ्नन्ति ।** अतोऽयं देशो न संयमस्थानमिति भावः ॥ ५५ ॥

**विन्ध्येति । दनुजः ;** वातापिः । **नाकस्य** स्वर्गस्य **अधीशतः**

प्रभावली

दोषः । अन्यानपि दर्शयति—**बुभुक्षेति । बुभुक्षया भिक्षाकाः ;** भोगसंन्यासिनः । अत एव भिक्षुब्रुवाः भिक्ष्वाभासाः, तैः पठिताः मिथ्यागुणानां गणा येषां ते, एतद्देशीयाः इह देशे **अक्षुद्रान मुमुक्षून्** महतो मोक्षसंन्यासिनः, परमविरक्तानिति यावत् । **परुषैः ;** निष्ठुरवचनैः । **उपघ्नन्ति ;** उपहिंसन्ति, तिरस्कुर्वन्ति । कीदृशैर्वचनैः? **कदध्वेति ।** कुमार्गोपार्जितधनलेशेन यो दुर्मानः गर्वः, स एव मदिरा, तस्या उपसर्जनीभूतेन क्षैब्येन **क्षुभ्यन्त्या** मतेः **कलुषम्,** अज्ञानादिरूपम्, स एव **काकोलः** विषभेदः, कालकूट इति यावत्, स एव **कलुषं** पङ्को येषां तैः । धनमदिरागर्वजनितानादरादिसहितैरित्यर्थः ॥ ५५ ॥

मलये स्थितमगस्त्यं वर्णयति—**विन्ध्येति ।** विन्ध्यपर्वतस्य स्तम्भनेन

विवेकः—उक्तमुपलालयन् स कथमस्माभिः[1] सुप्रेक्षः ?

**निरवधिमहिमा निरुद्धविन्ध्यो निगममहार्णवनित्यकर्णधारः ।**
**[2]सुचरितमिव नः स्वयं [3]स काले कतकनिभांशुरुदेति चेत्समीक्ष्यः ॥५७॥**

**प्रभाविलासः**

अधीशीभवतः **नहुषस्य** राज्ञः भुजगीकारे दुर्वारो गर्वो यस्य सः । **ब्रह्मापत्यम्;** चतुर्मुखपुत्रः । पुनर्निमित्तान्तरात् कुम्भीसूनुरिति न विरोधः । विन्ध्यस्तम्भादिकं भारते प्रसिद्धम् ॥ ५६ ॥

**निरवधीति । कर्णधारः**; नाविकः । अगस्त्योदये जलाशया निर्मला भवन्तीति प्रसिध्या कतकनिभांशुरित्युक्तम् । तदुक्तं वराहसंहितायाम्—

"उदये च मुनेरगस्त्यनाम्नः कुसमायोगमलप्रदूषितानि ।
हृदयानि सतामिव स्वभावात्पुनरम्बूनि भवन्ति निर्मलानि ॥"

इति ॥ ५७ ॥

**प्रभावली**

प्रकाशितः महिमा यस्य सः । निःशेषम् **आचान्तः** पीतः समुद्रो येन । **दनुजः** वातापिः, स एव **कबलः**, तस्य भक्षणेन **दीप्तः** पुनरुत्थितो जाठराग्निः यस्य सः । नाकस्याधीशो नाकाधीशः । स भवति नाकाधीशतीति **नाकाधीशन्** । क्विबन्ताद्धातोः शतृप्रत्ययः । स चासौ **नहुषश्च**, तस्य **भुजगीकारः** सर्पभावकरणं, तेन **दुर्वारा शक्तिर्यस्य । ब्रह्मणः पुत्रः कुम्भीसूनुः** अगस्त्यः । शापाग्निदग्धदेहस्यास्य मित्रावरुणवीर्यसंभृतकुम्भाज्जन्माभवदिति पौराणिकी कथानुसंधेया । स मुनिर्मुक्तानां सदृशः ; मुक्तानां यथा तापत्रयाभिहतिर्नास्ति, एवमस्यापीति भावः । इह मलये वसन् भ्राजते ॥ ९६ ॥

**सुप्रेक्षः**; सुखेन प्रेक्षितुं शक्यः । अत्रोत्तरं स्वयमेवाह । सः काले स्वयमुदेति चेत् समीक्ष्यो भवतीत्याह—**निरवधीति । निरुद्धेति** । निरुद्धो विन्ध्यो येन सः । **निगममहार्णवस्य** नित्यं **कर्णधारः**, पारदृश्वेत्यर्थः । **कतकनिभांशुः**; कतकबीजं यथा वारिप्रसादकम्, एवमगस्त्योदयेऽपि तदंशुभिर्वारि

[1] अस्माकम् —क.
[2] सुचरितवशतः इति प्रभावल्यां पाठान्तरमुक्तम्.
[3] स्वकाले—क.

तर्कः—देव तस्येदमाश्रमपदम् ।

तापोन्मुक्तं दिवसमखिलं शर्वरी नातिशीता
शाखारूढाः स्वयमिह शुकास्तत्त्वविद्यां पठन्ति ।
सिंहैः सार्धं विहरति गणः सैन्धुरः शान्तवैर-
स्तन्नः पुण्यैरिव परिणतं स्थानमेतत्समाधेः ॥ ५८ ॥

अमी च कुम्भसंभवानुगामिनामन्येषामपि महर्षीणामाश्रमाः—

इह प्रशान्तेषु निजाश्रमेषु प्राधीतवेदान्प्रतिपन्नदीक्षान् ।
अन्वासते वह्निमतो यथार्हं छायाः सजीवा इव धर्मदाराः ॥५९॥

प्रभाविलासः

**सैन्धुरो गणः**; गजसमूहः ॥ ५८ ॥

**इहेति । वह्निमतः**; आहिताग्नीन् ॥ ५९ ॥

**प्रभावली**

प्रसीदतीति प्रसिद्धिः । अतः कतकनिभांशुरित्युक्तम् । सः अगस्त्यः नः **सुकृतमिव** स्वयमेव काले उदेति चेत् समीक्ष्यो भवति । सुचरितवशत इति पाठान्तरम् ॥ ५७ ॥

**तस्य**; अगस्त्यस्य । अगस्त्याश्रमस्य समाधियोग्यत्वमुपपादयति तर्कः पूर्वपक्षत्वेन—**तापेति** । अत्र **अखिलं दिवसं** रवितापरहितम् । **शर्वरी** च नात्यन्तं शीता । **तत्त्वविद्याम्**; अध्यात्मविद्याम् । **सैन्धुरः**; सिन्धुरा गजाः, तत्संबन्धी । **परिणतम्**; पक्वम् ॥ ५८ ॥

**अनुगामिनः**; अनुवर्तिनः भृत्यशिष्यादयः । एषु आश्रमेषु दीक्षितान् दीक्षाप्रविष्टान् पतीन् यज्ञपत्न्यः परिचरन्तीत्याह—**इहेति । प्रशान्तेषु**; कामक्रोधादिवर्जितेषु; यद्वा प्रशान्तजन्तुषु । प्रकर्षेणाधीयमानवेदान् प्राप्तदीक्षानियमान् **वह्निमतः** गार्हपत्याहवनीयदक्षिणाग्निमतः पतीन् धर्मपत्न्यः सजीवाः छाया इव यथाधिकारमनुवर्तन्ते ॥ ५९ ॥

विवेकः—(सर्वतो निर्वर्ण्य) हन्त,

एलालिङ्गितचन्दना वनभुवो मुक्ताप्रसूतिर्नदी
ताम्बूलीपरिणद्धपूगपटली कच्छोपकण्ठस्थली ।
काले दक्षिणमारुता विदधते कामाग्निसंधुक्षणं
कुञ्जान्यत्र च भुञ्जते युवतिभिः स्वर्लोकशृङ्गारिणः ॥ ६० ॥

अतो [1]मनुष्यभोग्यमिदं भौमं त्रिविष्टपम् । अत्र चैवं मनोहरतरे [2]मन्मथकथापराङ्मुखा [3]महर्षयश्चरन्तीत्याश्चर्यमेतत् । वयं पुनरन्यदास्पदमन्वेषयेम ।

तर्कः—देव, आलक्ष्यतामयमदूरादेव नलसेतुसंदर्शनोत्सुकमुनिजनगतागत[4]विभवताण्डवितवैभवः पाण्ड्यदेशः । अत्र च,

### प्रभाविलासः

एलेति । नदी; ताम्रपर्णी । कच्छोपकण्ठस्थली; अनूपसमीपदेशः । काले; वसन्तकाले । अत्र शृङ्गाररसो व्यङ्ग्यः ॥ ६० ॥

### प्रभावली

अगस्त्याद्याश्रमा अपि समाधियोग्या न भवन्तीति सिद्धान्तयति—एलेति । एलाः; एलालताः । नदी; ताम्रपर्णी, मुक्तामणीनामुत्पत्तिस्थानम् । कच्छः; समुद्रोपकण्ठस्थली च । ताम्बूललताभिः परिवृता पूगपटली यस्यां सा । समासान्तविधेरनित्यत्वात् पूगपटलीत्युच्यते । काले; तत्तत्काले । संधुक्षणम्; संदीपनम् । स्वर्लोककामुकाः, देवा इत्यर्थः ॥ ६० ॥

भौमम्; भूमिसंबन्धि । एवम्; उक्तप्रकारेण । प्रदेश इति शेषः । कथा; प्रसङ्गः । मन्मथविकाररहिता इति यावत् । पाण्ड्यदेश आलक्ष्यतामित्याह—आलक्ष्यतामित्यादि । अदूरात्; समीपात् । नलकृतः सेतुः । गतागतस्य विभवेन । कुरुकापुर्यां श्रीशठकोपमुनेः द्रामिडी श्रुतिराविर्बभूवेत्यभि-

[1] मनुष्ययोग्यम्—ग.
[2] मकरकेतन—क.
[3] महर्षयः सन्तीति—ग.
[4] विभव omitted—ख.

सारः सारस्वतानां शठरिपुभणितिः [1]शान्तिशुद्धान्तसीमा
मायामायामिनीभिः स्वगुणविततिभिर्बन्धयन्तीं धयन्ती ।
पारं पारंपरीतो भवजलधिभवन्मज्जनानां जनानां
प्रत्यक्प्रत्यक्षयेन्नः प्रतिनियतरमासंनिधानं निधानम् ॥६१॥

## प्रभाविलासः

**सार** इति । **सारस्वतानाम्**; वेदानां सारः,

"कलेरादौ जन्मयोगी शठकोप इति श्रुतः ।
मद्भक्तोऽहं भविष्यामि नेतुं द्रामिडतां श्रुतिम् ॥"

इति कुरुकामाहात्म्योक्तेः । शान्तानां सिद्धान्तसीमा तत्त्वनिर्णयपारभूमिः । यद्वा शान्तरस एव सिद्धान्तः, तस्य सीमा; तत्प्रतिपादिकेत्यर्थः, सर्वत्र तत्प्रबन्धे निर्वेदरूपशान्तरसस्याभिव्यक्तेः । "निर्वेदस्थायिभावः शान्तरसः" इति काव्यप्रकाशे । रसमञ्जर्याद्यनुसारेण परमात्मज्ञानसर्वसङ्गपरित्यागहेतुरुत्साहः शान्त इति यदि, तथापि स सर्वत्र व्याप्नोतीति न विरोधः । शान्तिशुद्धान्तसीमेति पाठे त्वर्थः स्पष्टः । पदव्यङ्ग्यः शृङ्गाररसः । **आयामिनीभिः**; दीर्घाभिः । **स्वगुणविततिभिः**; सत्त्वादिगुणविस्तरैः । **बन्धयन्तीं मायां धयन्ती** पिबन्ती, नाशयन्तीति यावत् ।

## प्रभावली

प्रायेणाह—**सार** इति । शान्तेः शान्तिगुणस्य राजधानी । श्रोतॄणां शान्तिगुणोत्पादिकेति यावत् । शान्तशुद्धान्तसीमेति पाठे शान्तानां शुद्धाशयजन्यस्यान्तस्य तत्त्वनिश्चयस्य सीमा उत्पत्तिस्थानम् । **आयामिनीभिः**; दीर्घाभिः । स्वशब्देन मायोच्यते । **स्वगुणाः**; सत्त्वरजस्तमांसि, तेषां प्रपञ्चः । अन्यत्र गुणशब्दः पाशवाची । जनान् **बन्धयन्तीं मायाम्**; प्रकृतिम् । प्रकृतिकार्यकामक्रोधादीनित्यर्थः । **धयन्ती**; पिबन्ती, नाशयन्तीति यावत् । **सारस्वतानाम्**; वाक्प्रपञ्चानाम् । सरस्वतीनां समूहः सारस्वतम्; उपनिषदामित्यर्थः ।

[1] शान्तसिद्धान्तसीमेति प्रभाविलासपाठः

[1]विवेकः—(सहर्षभक्तिपुलकोद्गमम् )

**निरञ्जनमयं जनः किमपि नेत्रमुन्निद्रय-**
**न्नमस्यति शठद्विषे नरकवैरिजीवातवे ।**
**अगस्त्यगिरिनिम्नगासुभगवीचिकासोदर-**
**स्वलक्षणसरस्वतीसुरभिकेसरश्लाघिने ॥ ६२ ॥**

**प्रभाविलासः**

**शठरिपुभणितिरिति**; द्रामिडप्रबन्धः । **पारंपरीतः**; पारंपर्येण । भवजलधौ भवत मज्जनं येषां तेषां संसारिणां जनानां **पारम्**, उत्तरणहेतुमित्यर्थः । **प्रत्यग्रूपं निधानम्;** निधिम् । तद्विशिनष्टि—**प्रतिनियतेति** । अत्र सारः सार इत्यादिपदानामर्थभेदेऽप्यापातत एकार्थप्रतीतेः पुनरुक्तवदाभासो नामालंकारः,

"पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ।
एकार्थतेव शब्दस्य तथा शब्दार्थयोरयम् ॥"

इति लक्षणात् । अनुप्रासभेदश्च ॥ ६१ ॥

**निरञ्जनमिति** । **निरञ्जनम्;** निर्दोषम् । अकज्जलमिति च व्यज्यते । **किमपि नेत्रम्;** ज्ञानरूपं चक्षुः । **अगस्त्यगिरिनिम्नगा;**

**प्रभावली**

सारार्थप्रतिपादिका **शठरिपोः** शठकोपस्य **भणितिः** प्रबन्धचतुष्टयरूपा । **पारंपरीतः**; परंपरयेति यावत् । **भवजलधौ** संजातमज्जनानां नः **पारम्**; "सोऽध्वनः पारमाप्नोति" इत्युक्तं संसारपारभूतम् । **प्रतिनियतं** व्याप्तं **रमायाः संनिधानं** संनिधिर्यस्य तत् **प्रत्यक् निधानम्**; आन्तरं निधिम्, "हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुः" इत्याद्युक्तमन्तर्यामिरूपं निधिम् । **प्रत्यक्षयेत्**; साक्षात्कारयतु । प्रार्थनायां लोट्, संभावनायां वा ॥ ६१ ॥

**अयं जनः**; अहमित्यर्थः । **निरञ्जनम्**; निष्कल्मषम्; संशयादिरहित-

[1] क. ख and छ read this verse after the next verse अग्रे पश्य etc.

[1]**तर्कः**—अन्यदपि किंचिदिहावलोकनीयं महाराजेन ;

**अग्रे पश्य वृषाचलं क्षितिभृतामग्र्यं यदग्रे हरे-**
**र्मञ्जीरोदकमाबिभर्ति महतीं मन्दाकिनीसंपदम् ।**
**नृत्यच्चन्दनगन्धवाहनियतव्यालोलचूडाटवी-**
**शाखाताडितचन्द्रमश्च्युतसुधाधाराभिसंवर्धितम् ॥ ६३ ॥**

प्रभाविलासः

ताम्रपर्णी । सोदरत्वं सदृशत्वम् । स्वलक्षणत्वं परिशुद्धत्वं, शठकोपपदचिह्नितत्वं वा । **केसराणि;** वकुलपुष्पाणि ॥ ६२ ॥

**अग्र इति । वृषाचलम्;** वनाद्रिम् । **मञ्जीरोदकम्;** नूपुरनदीजलम् । "यत्र सुप्रथितनूपुरापगातीर्थमर्थितफलप्रदं विदुः" इति श्रीवत्साङ्कमिश्रोक्तेः । **नृत्यता चन्दनगन्धवाहेन नियतव्यालोलाभिः चूडाटवी-**

**प्रभावली**

मित्यर्थः । **किमपि नेत्रम;** ज्ञानाख्यम् । **उन्निद्रयन्;** उन्निद्रं विकसितं कर्तुम् । "लक्षणहेत्वोः" इति शतृप्रत्ययः । **शठद्विषे;** पराङ्कुशमुनये । **नरकवैरिणः कृष्णस्य जीवातवे** जीवनौषधाय, 'स्वरूपं निर्विशेषम; गुणा न सन्ति; विग्रहोऽपि न; ज्ञानाश्रयत्वमपि न; तद्व्यतिरिक्तं सर्वं मिथ्या' इति वदतां मतं स्वप्रबन्धे निरस्य स्वरूपस्य सविशेषत्वप्रतिपादनादिति भावः । **अगस्त्यगिरिः** मलयः, ततः प्रसूता **निम्नगा** ताम्रपर्णी, तस्याः **सुभगानां वीचिकानां सोदरा** सदृशी, **स्वलक्षणा** स्वस्य शठकोपस्य नाम्ना अङ्कनं चिह्नं यत्र सा, शठकोपनामाङ्कितत्वात् सरस्वत्याः, तद्वत् **सुरभितैः केसरैः** वकुलपुष्पैः **श्लाघिने** श्लाघावते ; वकुलधरमुनिरिति प्रशस्तयशस इत्यर्थः ॥ ६२ ॥

अथ वृषगिरिपतेः सर्वलोकप्रसर्पिणीं दयां स्तौति—**अग्र इति** । **यस्य वृषाचलस्य अग्रे हरेः** संबन्धि **मञ्जीरोदकं** नूपुरनदी । **नृत्यन्तः** चन्दनवृक्षा

[1] **तर्कः** omitted—क. ख. छ.

[1]विवेकः—अहह, अत्र सर्वतः प्रसर्पिणी खल्वियं वृषगिरिपतेरनुकम्पा । (साञ्जलिबन्धम्)

त्वया दृष्टस्तुष्टिं भजति परमेष्ठी निजपदे
वहन्मूर्तीरष्टौ विहरति मृडानीपरिबृढः ।
बिभर्ति स्वाराज्यं वृषशिखरिशृङ्गारकरुणे
शुनासीरो देवासुरसमरनासीरसुभटः ॥ ६४ ॥

**प्रभाविलासः**

**शाखाभिः ताडितात् चन्द्रमसः च्युताभिः सुधाधाराभिः** अभिसंवर्धितम् । इदं मञ्जीरोदकविशेषणम् । अतिशयोक्त्यलंकारध्वनिः ॥ ६३ ॥

**त्वयेति । अष्टौ मूर्तीः**; पञ्च भूतानि, सूर्यचन्द्रौ, सोमयाजी च । **मृडानीपरिबृढ इति;** परिबृढशब्देन स्वामित्वमुक्तमिति न प्रयोगदोषः । पत्यादिपदप्रयोगे हि विरुद्धमतिकृद्रूपकाव्यदोषः । यद्वा महाकविप्रयोगप्रसिद्धानां प्रयोगे न दोषः, स्वबुद्धिकल्पितानामेव तथा दुष्टत्वात् । अत एव जनकतनयाम्बिकारमणादिपदानामदुष्टत्वमित्यालंकारिकाः ॥ ६४ ॥

**प्रभावली**

येन, तेन वायुना **नियता व्यालोला** सततचञ्चला या **चूडाटवी** शिरोऽरण्यानी, तस्याः **शाखाभिः ताडितात् चन्द्रमसः च्युताभिः सुधाधाराभिः** संवर्धितं सत् महतीं **मन्दाकिनीसंपदं बिभर्ति** ॥ ६३ ॥

त्वयेति । भो दये, **त्वया दृष्टः** विषयीकृतः **परमेष्ठी निजपदे तुष्टिं भजति । मृडानीपरिबृढः** रुद्रः **निजपदे** त्वया दृष्टः सन् **अष्टौ मूर्तीर्वहन्** पञ्चभूतचन्द्रसूर्ययजमानरूपाः अष्ट मूर्तीः वहन्, अष्टमूर्तित्ववैभवं प्राप्तः **विहरति । देवासुरसमरे नासीरसुभटः** अग्रगामी भटः सन् **शुनासीरः** इन्द्रः, भो वृषगिरिभूषणभूतवेंकटेशदये स्वर्गाख्यं राज्यं रक्षति ॥ ६४ ॥

[1] विवेकः omitted—क. ख. छ.

(दक्षिणतोऽवलोक्य)

[1]नलहस्तनिवेशितैरुदग्रैर्हिमवन्मन्दरमेरुविन्ध्यशृङ्गैः ।
[2]हरिचक्रपदक्रमैरसीदन्नुदधेरूर्मिगणं रुणद्धि सेतुः ॥ ६५ ॥

(विमृश्य) नलसेतुनिबिडयन्त्रितधरणिधरशिखरनिकरास्फालनमुखरतरदक्षिणोदन्वदूर्मिघोषजर्जरितजानपदकर्णरन्ध्रे नास्मिन्नपि देशे समाधिसंभवं संभावयामि । तदितः प्रागुत्तरं तु रथः प्रवर्त्यताम् ।

तर्कः—(तथा कृत्वा) देव, इयं पुनरविरलनालिकेरपङ्क्तिपरिवृतक्रमुकवनकुहलिकापरिमलानुरञ्जितपान्थजनहृदया चोलभूमिः ।

विवेकः—([3]परितोऽवलोक्य सोद्वेगम्)

प्रभाविलासः

**नलेति** । **अदभ्रैः**; अनल्पैः । **हरिचक्रम्**; वानरसमूहः । **असीदन्**; अमज्जन् ॥ ६५ ॥

प्रभावली

अथ सेतुं वर्णयति—**नलेति** । नलस्य हस्तप्रक्षिप्तैः पृथुभिः गिरिभिः हेतुभिः बद्धः सेतुः **हरिचक्रस्य** वानरसेनायाः **पद**विक्षेपैः **असीदन्** अवसादमनाप्नुवन् **उदधेरूर्मिगणं रुणद्धि** । पश्चिमभागीया ऊर्मयो यथा पूर्वभागं नायान्ति, पूर्वभागीयाश्च पश्चिमभागं, तथा प्रतिबन्धको भवतीत्यर्थः ॥ ६५ ॥

पाण्ड्यदेशः समाधिस्थानं न भवतीत्याह—**नलसेत्विति** । **निबिडं यन्त्रिताः**; बद्धाः । आस्फालनेन मुखरतराः ऊर्मयः, तासां घोषेण जर्जरिताः बधिरीकृताः जानपदा जनाः यत्र । **देशे**; पाण्ड्ये । इदं निराकरणं कुरुकापुरीवृषगिरिव्यतिरिक्तदेशविषयम्, यादवाचलस्य संयमस्थानत्वोक्त्या अधिकगुणयोस्तयोरप्युपलक्षितत्वात् । **इतः प्रागुत्तरम्**; इतः नलसेतोः । चोलभूमिं दर्शयति—**देवेत्यादि** । परितो नालिकेरपङ्क्तिपरिवृतं यत् क्रमुकवनं, तस्य **कुहलिकानां** पूगमञ्जरीणां **परिमलेन** अनुरञ्जितं वशीकृतं पान्थजनहृदयं यया सा । तत्र

[1] निवेशितैरदभ्रैः इति प्रभाविलासपाठः [2] क्रमैश्च सीदन्—क. ख. [3] सर्वतः—क.

इतस्त्वरितमन्यतः प्रहिणु सारथे मद्रथं
यदत्र कवयश्चरन्त्यपटुचित्तपाटच्चराः ।
द्रुतप्रचरणक्वणद्द्रुहिणसुन्दरीनूपुर-
ध्वनिप्रचयसूचनासुभगसूक्तिविष्फूर्तयः ॥ ६६ ॥

इह खलु संयमसिद्धिमिच्छतः[1] पुरुषस्य सिद्धमपि विनङ्क्ष्यति । तथा च वृद्धिमिष्टवतो मूलस्यापि नाशवदपहास्यता[2] ।

तर्कः—(अग्रतो निर्दिश्य) देव, कथमिह निखिलनिगमहृदयान्तरङ्गमभङ्गुरप्रसरया भगवदनुकम्पया तरङ्गितवैभवं रङ्गमपि नावलोकयसि ?

प्रभाविलासः

इत इति । प्रहिणु; चोदय । डिण्डिमकवीनपदिश्याह—यदत्रेति । अपटूनां चित्तानां पाटच्चराः आकर्षकाः । तेषां गद्यपद्यादिपाठक्रममनुविडम्बयति—द्रुतेति । द्रुतप्रचरणेन क्वणन्तौ यौ द्रुहिणसुन्दर्याः सरस्वत्याः नूपुरौ, तयोर्ध्वनिप्रचयस्य शिञ्जितपरम्परायाः सूचनया सुभगाः सूक्तिविष्फूर्तयः येषां ते तथोक्ताः ॥ ६६ ॥

प्रभावली

दोषदर्शनादुद्वेगः । इत इति । भो सारथे, इतोऽन्यत्र मद्रथं प्रेरय । तत्र हेतुमाह—यदत्र क्षुद्राः कवयश्चरन्ति । द्रुतेति; द्रुतगमनेन क्वणत् शब्दायमानं द्रुहिणसुन्दर्याः सरस्वत्याः यन्मञ्जीरं, तद्ध्वनिसमूहसूचनया सुभगाः सूक्तिप्रसराः येषाम् । सरस्वतीमञ्जीरध्वनिसूचकसूक्तयः अपटूनामज्ञानां चित्तस्यापहारकाश्चात्र चरन्ति ॥ ६६ ॥

इह; चोलदेशे । सिद्धमपि संयमधारारूपं विनाशं प्राप्स्यति । तथाच मूलधनस्यापि नाशवत् अपहास्यता स्यात् । अङ्गुल्या निर्दिश्य श्रीरङ्गं दर्शयति—निखिलेति । निखिलोपनिषद्रहस्यमिति यावत् । तरङ्गितं वैभवम् ऐश्वर्यं यस्य

[1] इच्छतः—ग. [2] अपहास्यम्—क.

विवेकः—(विलोक्य) सूत, अनवरतविकसितकल्हारपरिमलानुबन्धादुल्लोकमहिमशालिनीभिश्चोलभूपवनलहरीभिश्चुलकितसर्वेन्द्रियवृत्तिना परमापातदृष्टिविश्रान्तेन न खलु मया द्रागेव सम्यगवधारितम्। (सान्तस्तोषम्)

[1]निरातङ्का रङ्गाध्युषित[2]ललितोदारपुलिनां
चिरक्लिष्टा दृष्टिश्चुलकयति मे चोलतटिनीम्।
यदृच्छानिद्राणत्रियुगशयनीयद्विरसन-
प्रतिच्छायान्तर्वत्पृथुमधुरवीचीपरिगताम्॥ ६७॥

प्रभाविलासः

**उल्लोकः**; लोकमतिक्रान्तः। **निरातङ्केति**; श्रृङ्गावलोकनेन गतक्लेशा। **यदृच्छानिद्राणस्य त्रियुगस्य** भगवतः **शयनीयस्य** तल्पस्य **द्विरसनस्य** शेषस्य **प्रतिच्छाया** प्रतिबिम्बम् अन्तरासामस्तीति, ताश्च ता पृथुविमलवीचयश्च, ताभिः परिगता॥ ६७॥

प्रभावली

तत्। अपिशब्देन पूज्यपूजाव्यतिक्रमः सूच्यते। चोलभूपवनसंपद्वशीकृतदृष्टिना मया श्रीरङ्गक्षेत्रमिदमिति सम्यङ् न निश्चितमित्याह—**अनवरतेति**। **अनुबन्धः**; संबन्धः। **उल्लोकः**; लोकमतिक्रान्तः। **लहरीभिः**; पङ्क्तिभिः। **चुलकीकृतम्**; वशीकृतम्। केवलं सामान्यदर्शिना मया दृढं न विचारितम्। श्रीरङ्गं दृष्ट्वा **सांतस्तोषम्**। श्रीङ्गमुभयतः प्रसृता कावेरी दृश्यत इत्याह—**निरातङ्केति**। **निरातङ्का**; निःशङ्का मे दृष्टिः। **रङ्गेण**; श्रीरङ्गविमानेन। **चिरक्लिष्टा चोलतटिनीं** कावेरीं **पश्यतीत्यर्थः**। कीदृशीम्? **यदृच्छया**; स्वेच्छयेत्यर्थः। **निद्राणस्य त्रियुगस्य** त्रियुग्मगुणकस्य श्रीरङ्गराजस्य, यः शयनीयद्विरसनः, तस्य **छायाभिः अन्तर्वत्नीभिः** गर्भवतीभिः **पृथुमधुरवीचीभिः** परिवृताम्॥ ६७॥

[1] निरातङ्कम्—ख. [2] महितोदार—ग.

(साञ्जलिबन्धम्)

घनकरुणारसौघभरितां परितापहरां
नयनमहश्छटां मयि तरङ्गय रङ्गपते ।
दुरितहुताशनस्फुरितदुर्दमदुःखमषी-
मलिनितविश्वसौधदुरपह्नववर्णसुधाम् ॥ ६८ ॥

अपिच,

दास्यं लास्यवतानुमत्य मनसा रङ्गेश्वर त्वत्पदे
नित्यं किंकरवाण्यहं न तु पुनः कुर्यां कदर्याश्रयाम् ।
मीलच्चक्षुषि वेल्लितभ्रुणि मुहुर्दत्तावमानाक्षरे
भीमे कस्यचिदाढ्यकस्य वदने भिक्षाविलक्षां दृशम् ॥६९॥

प्रभाविलासः

**घनेति** । **नयनमहश्छटाम्**; नेत्रकान्तिसमूहम् । दुरितमेव हुताशनः, तेन स्फुरितं संजातं **दुर्दमं** नाशयितुमशक्यं च यत् **दुःखं**, तदेव **मषी** मालिन्यनिमित्तद्रव्यविशेषः, तेन **मलिनितस्य विश्वसौधस्य** दुरपह्नवा वर्णार्था या सुधा, तामित्यर्थः ॥ ६८ ॥

**दास्यमिति** । चपलस्वभावतया मनः कदाचित् दास्यमप्यनुमनुत इत्याकूतेन **लास्यवतेत्यु**क्तम् । तेन "त्वदङ्घ्रिमुद्दिश्य" इत्यादिन्यायेन

**प्रभावली**

कृपाकटाक्षैर्मामवलोकयेति रङ्गिणं प्रार्थयते--**घनेति** । नयनकान्तिपरंपरां कटाक्षपद्धतिं **मयि** समृद्धय । कीदृशीम्? **दुरितानि** पापानि, तान्येव **हुताशनः**, तेन **स्फुरितम्** उत्पादितं, **दुर्दमं** स्वयं नाशयितुमशक्यं यत् **दुःखं**, तदेव **मषी** काकतलेखनसाधनी, तया **मलिनितः विश्वसौधः**, तस्य **दुरपह्नवा** अपह्नोतुमशक्या **वर्णसुधा** लेपनसुधा । तां मयि तरङ्गयेत्यन्वयः ॥ ६८ ॥

भो स्वामिन्, तवैव दास्यं करवाणि, न तु पुनः क्षुद्राणाम् । **मीलच्चक्षुषि**;

(विचिन्त्य) अये सूत, अस्तु तावदिदमाद्यं स्थानम्। किमन्यदप्यावेदयिष्यसि ?

**तर्कः**—(उत्तरतो निर्दिश्य) देव, इयं पुनरिहाखण्डभुवनशिखण्डकायमानं तुण्डीराभिधानं मण्डलम्। अत्र च,

### प्रभाविलासः

पुरुषार्थपर्यवसायित्वं हार्दम। दास्यलाभेन संजातहर्षतया वा लास्यवतेत्युक्तिः। अत एव 'त्वत्पदे नित्यं किंकरवाणि' इत्युक्तिः। **कदर्याश्रयाम्;** कृपणविषयाम्। दूरदर्शने **मीलच्चक्षुषि,** समीपागमने **वेल्लितभ्रुणि,** याच्ञायां **दत्तावमानाक्षरे,** अथाप्यनिर्गमने **भीमे** इति पर्वक्रमः। उक्तलक्षणस्य नामग्रहणमप्यनर्हमिति **कस्यचिदि**त्युक्तम। **भिक्षाविलक्षाम्;** याच्ञाकार्पण्यविह्वलाम्। दृशं न कुर्यामित्यर्थः ॥ ६९ ॥

**आद्यं स्थानमिति;** "आद्यं स्वयं व्यक्तमिदं विमानं रङ्गसंज्ञितम्"

### प्रभावली

याचकजने समीपमागते अज्ञानं नाटयन् मीलच्चक्षुर्भवति खलः। **वेल्लितभ्रुणि;** यत्किंचिद्याच्ञिते बद्धभ्रूभङ्गो भवति। पुनर्याचने मुहुरवमानाक्षरं परुषं वदति। एवं वाग्भीमे **कस्यचिदाढ्यकस्य** अज्ञातकुलगोत्रस्य ईषत्संपन्नस्य, अल्पार्थे कप्रत्ययः। पूर्वोक्तविशेषणविशिष्टे **वदने** विषये याच्ञया विलज्जितां सतीम। **कदर्याश्रयाम;** कदर्यः कृपणः, तद्विषयाम। **न कुर्याम्;** त्वामेव विषयीकुर्यामिति भावः ॥ ६९ ॥

इदं श्रीरङ्गक्षेत्रं समाधेराद्यस्थानं भवतु। अन्यदपि द्रष्टव्यं किमस्तीति भावः। तर्हि तुण्डीरमण्डलं पश्येत्यभिप्रायेणाह—**इदं पुनरिति। अखिलभुवनस्य शिखण्डकायमानम;** शिरोभूषणायमानमित्यर्थः। शिखण्डकाः काकपक्षाश्च

किमपि विबुधमुख्यैः सेवितं क्षेत्रमेत-
द्भवभयशमनार्हं भाति सत्यव्रताख्यम् ।
निजसुतहयमेधे यत्र दिव्येन पुंसा
क्षितिकलुषमशेषं क्षेप्तुमाविर्बभूवे ॥ ७० ॥

अयं खलु एतद्देशवासिनामन्ववायसिद्धो निर्णयः—

'आत्मैक्यं देवतैक्यं [1]त्रिकसमधिकता तुल्यतैक्यं त्रयाणा-
मन्यत्रैश्वर्यमित्याद्यनिपुणभणितीराद्रियन्ते न सन्तः ।
त्रय्यन्तैरेककण्ठैस्तदनुगुणमनुव्यासमुख्योक्तिभिश्च
श्रीमान्नारायणो नः पतिरखिलतनुर्मुक्तिदो मुक्तभोग्यः' ॥ ७१ ॥

इति ।

प्रभाविलास:

इति स्मारितम् । **किमपीति** । **निजसुतस्य**; चतुर्मुखस्य । **हयमेधे**; अश्वमेधे । **आविर्बभूवे**; भावे लिट् । "धातुरुत्तरवेद्यन्तः प्रादुरासीज्जनार्दनः' इति स्मरणात् ॥ ७० ॥

**आत्मैक्यमिति** । जीवात्मपरमात्मनामैक्यमिति राहुमीमांसकाः । देवतानामिन्द्रादीनामैक्यमिति सर्वेषां चतुर्थ्यन्तशब्दात्मकतया देवतैक्य-

प्रभावली

मयूराणां शिरस्युन्नतावयवाः । पुण्यक्षेत्रमस्तीत्याह—**किमपीति** । ब्रह्मरुद्रादिभिः **सेवितम्** । यत्र क्रियमाणं व्रतं सत्यं भवति, **तत्सत्यव्रतम्** । यत्र अशेषजगद्रक्षणाय **दिव्येन पुंसा** वरदराजेन आविर्बभूवे । **निजसुतेन** ब्रह्मणा अश्वमेधे क्रियमाणे सति । कलुषं निरसितुम् ॥ ७० ॥

**अन्ववायसिद्धः**; वंशपरंपरासिद्धः सिद्धान्तः । **आत्मैक्यमिति**; जीवात्मनां परस्परैक्यम् । **देवतैक्यम्**; देवतानां परस्परं ब्रह्मणा च सहैक्यम् ।

[1] त्रिकसमधिगता—क.

प्रभाविलासः

मिति कबन्धमीमांसकाः। **त्रिकसमधिकता**; ब्रह्मविष्णुरुद्रातिरिक्तं ब्रह्मेत्युत्तीर्णब्रह्मवादिनः। त्रयाणां तुल्यतेति राजसपुराणानुसारिणः। त्रयाणामैक्यमिति नैयायिकाः। तदुक्तम्—"त्रिमूर्तिर्यः सर्गस्थितिविलयकर्माणि तनुते" इति। **अन्यत्र**; त्रिकातिरिक्तादित्यादौ। **ऐश्वर्यम्**; ईश्वरत्वमित्यादित्योपासकादयः, "असावादित्यो ब्रह्म" इत्यादिश्रुतेः, आदित्यपुराणोपबृंहणाच्च। यद्वा **त्रयाणामन्यत्र**; अन्यतमे। चतुर्मुखः केवल इति हैरण्यगर्भाः। शिव एव केवल इति शैवाः। विष्णुरेव केवल इति माध्वाः। आदिपदेनेश्वरमनङ्गीकुर्वन्त आत्मभेदवादिनः सांख्याऽदयो गृह्यन्ते। **सन्तः**; विशिष्टाद्वैतिनः। **त्रय्यन्तैरेककण्ठैः**; मुख्यार्थापरित्यागेनैकवाक्यतां नीतैः सर्ववेदान्तैरित्यर्थः। अनेन मतान्तरेषु तत्तत्प्रतिपादनाग्रहेण वाक्यान्तराणि त्यक्तानीत्युक्तं भवति। अथोपबृंहणानुगुण्यमाह—**तदनुगुणेति**। "आसीदिदं तमोभूतम" इत्युपक्रम्य ब्रह्मणो जन्मादिहेतुत्वम् "सोऽभिध्याय शरीरात स्वात" इत्यादिभिरभिन्ननिमित्तोपादानत्वं शरीरशरीरिभावेन सामानाधिकरण्यं चोपपाद्य "आपो नारा इति प्रोक्ताः" इत्यादिना देवताविशेषे पूर्वोक्तधर्मजातं निर्धार्य तस्य सकलकर्माराध्यत्वं तत्फलप्रदत्वं च विशेषितवान् मनुरिति तदानुगुण्योक्तिः। अनेन मनूक्तिविरुद्धानामन्यपरत्वं भ्रान्तिमूलत्वं वा वेदितव्यम्, "मनुस्मृतिविरुद्धा तु या स्मृतिः सा न शस्यते" इति भृगुस्मरणात।

प्रभावली

**त्रिकेति**; त्रिमूर्तिभ्यः परस्य ब्रह्मणः समधिकता उत्तीर्णत्वम्। **त्रयाणां** ब्रह्मविष्णुशिवानां **तुल्यता**। त्रयाणां स्वरूपैक्यम्। त्रयाणां मध्ये **अन्यत्र** वा यस्मिन् कस्मिंश्चित् **ऐश्वर्यम्** ईश्वरता। **इत्याद्यनिपुणभणितीः**; अज्ञानां वचनानि। **सन्तः**; वेदान्तविदः नाद्रियन्ते। तर्हि किमाद्रियन्त इत्यत्राह—**त्रय्यन्तैरिति**। **एककण्ठैः**; एककण्ठतां प्राप्तः। **त्रय्यन्तैः**; उपनिषद्भिः। **तदनुगुणाभिः** मनुव्यासवाल्मीकिपराशरशुकशौनकादिवाग्भिश्च सिद्धार्थस्तु

इह च मुनिपरिषदनुगृहीतो मुक्तप्रायः कश्चिदाधित्सित-वह्निमनुजानाति —

'इह बहुविधिसिद्धैः शोधकैरिन्दिरेशं
प्रणिपतनमुखैश्च प्राज्यभक्तिः प्रसाद्य ।
[1]प्रभुतरपरिपूतः कर्मयोग्यः प्रजाना-
मनुपधिसुहृदग्नीनादधीथा यजेथाः' ॥ ७२ ॥

इति ।

**प्रभाविलासः**

**व्यासेति** । व्यासादयोऽपि भारतादिषु भगवद्वैभवमेवामनन्ति । एवं प्रमाणपौष्कल्यमुक्तम् । प्रमेयस्वरूपमाह—**श्रीमानित्यादिना** । तत्र "वेदेषु पौरुषं सूक्तम्" इति सकलश्रुतिसारभूतपुरुषसूक्तप्रमेयतामाह—**श्रीमानिति** । अनेन माध्वमतव्यावृत्तिः । उपनिषदन्तरेषु सद्ब्रह्मपरतत्त्वपरमात्मादिशब्दैरयमेव वेद्य इत्यभिप्रायेणाह—**नारायण इति** । अनेन हैरण्यगर्भव्यावृत्तिः । "पत्यादिशब्देभ्यः" इति सौत्रभेदश्रुत्यानुगुण्यमाह—**नः पतिरिति** । अनेनात्मैक्यसांख्यमतयोर्निरासः । घटकश्रुत्यैककण्ठ्यमाह—**अखिलतनुरिति** । अनेनोत्तीर्णब्रह्मवादिनिरासः । "विदुषा चिद्रथः स्तोमो यज्ञस्य राध्यो हविष्मतः" "फलमत उपपत्तेः" इत्याद्युक्तसकलकर्माराध्यत्वं तत्फलप्रदत्वं चाह—**मुक्तिद इति** । मुक्तिपदं चतुर्वर्गोपलक्षणम् । अनेन कबन्धमीमांसकव्यावृत्तिः । मुक्तोपसृप्यत्वमाह—**मुक्तभोग्य इति** ॥ ७१ ॥

**इहेति** । **बहुविधिसिद्धैः**; नानाशास्त्रप्रसिद्धैः । **शोधकैः**; प्राय-

**प्रभावली**

श्रीमान्नारायण एव जीवानां स्वतः परमशेषी; अखिलाः स्वेतरसमस्तचेतनाचेतनात्मकाः शरीरं यस्य । **मुक्तिदः**; मुक्तेः साक्षादुपायः । मुक्तानामुपेय इति ॥ ७१ ॥

[1] बहुतर—ख.

विवेकः—(सहर्षबहुमानमञ्जलिं बद्ध्वा)

द्विरदशिखरिसीम्ना सम्भवान्पद्मयोने-
स्तुरगसवनवेद्यां श्यामलो हव्यवाहः ।
कलशजलधिकन्यावल्लरीकल्पशाखी
[1]कलयतु कुशलं नः कोऽपि कारुण्यराशिः ॥ ७३ ॥

प्रभाविलासः

श्चित्तैः । प्राज्यभक्तिः; प्रभूतभक्तिः । प्रभुतरम्; अधिकतरम् ॥ ७२ ॥
द्विरदेति । कलशजलधिः; क्षीराब्धिः ॥ ७३ ॥

प्रभावली

सत्यव्रतक्षेत्रे कश्चिद्विशेषोऽस्तीत्याह—इह चेति । कश्चित; महाभागवतः । वह्न्याधानं चिकीर्षुमनुज्ञया अनुगृह्णाति । इह महाभागवतेनानुज्ञातो यजति चेत्, श्रीवरदराजस्य प्रसादेन सर्वं सफलं संपत्स्यत इति भावः । अनुज्ञाप्रकारं दर्शयति—इहेति । इह; क्षेत्रे । बहुशास्त्रसिद्धैः शोधकैः; प्रायश्चित्तैः । तदनु प्राज्यभक्तिः निरवधिकप्रीतिमान् । त्वम इन्दिरेशं प्रणिपतनमुखैः; मुखशब्देन स्तुत्यादिग्रहणम् । प्रसाद्य प्रभुतरः समर्थः परिपूतश्च । यद्वा प्रभुतरम् अधिकतरं परिपूतः । अत एव कर्मसु योग्यः । अग्नीन्; गार्हपत्यादीन् । आदधीथाः; अग्नीनामाधानं कुरु; आधानानन्तरं यज्ञं कुरु ॥ ७२ ॥

स्वकार्यसिद्धिं प्रार्थयते—द्विरदेति । द्विरदशिखरी; करिगिरिः, तस्य सीम्ना शृङ्गप्रदेशेन हेतुना सम्भवान्; हस्तिगिरिशृङ्गभवन इत्यर्थः । पद्मयोनेः हयमेधवेद्यां श्यामलवर्णो हव्यवाह इव स्थितः, श्यामवर्णत्वात् तत्स्थाने प्रादुर्भूय स्थितत्वाच्च । कलशशब्देन क्षीरं लक्ष्यते । क्षीरजलधेः कन्या, सैव वल्लरी विशिष्टा लता, तस्या आश्रयः कल्पवृक्षः । कोऽपि; निरवधिकमहिमा । कारुण्यराशिः नः पुरुषमोक्षणे प्रवृत्तानां कुशलं मङ्गलं करोतु ॥ ७३ ॥

[1] कलयति—क.

(मुहूर्तमनुचिन्त्य)

संसारावर्तवेगप्रशमनशुभदृग्देशिकप्रेक्षितोऽहं[1]
संत्यक्तोऽन्यैरुपायैरनुचितचरितेष्वद्य शान्ताभिसंधिः ।
निःशङ्कस्तत्त्वदृष्ट्या निरवधिकदयं [2]प्रार्थ्य संरक्षकं त्वां
न्यस्य त्वत्पादपद्मे वरद निजभरं निर्भरो निर्भयोऽस्मि ॥७४॥

प्रभाविलासः

**संसारेति** । संसारावर्तस्य वेगप्रशमनश्चासौ शुभकृद्देशिकश्च, तेन प्रेक्षितः । **अन्यैरुपायैः** ; कर्मज्ञानादिभिः । एवं कार्पण्यमुक्तम् ,

"उपाया नैव सिध्यन्ति अपाया बहुलास्तथा ।
इति या गर्वहानिस्तद्दैन्यं कार्पण्यमुच्यते ॥"

इत्युक्तत्वात् । अथ प्रातिकूल्यवर्जनमाह—**अनुचितेति** । **अनुचितचरितेषु** भूतहिंसादिषु शान्ताभिसंधिः, "तथैव सर्वभूतेषु प्रातिकूल्यस्य वर्जनम्" इति स्मरणात् । अत्रानुकूल्यसंकल्पोऽप्यर्थसिद्धिः, "अनुकूल्यमिति प्रोक्तं सर्वभूतानुकूलता" इति वचनात् । शङ्कापञ्चकव्यावृत्तिरूपविश्वासशालितामाह—**निःशङ्क इति** ;

प्रभावली

स्वकार्यसिद्ध्यर्थं साङ्गं प्रपदनं करोति—**संसारेति** । **संसारस्य आवर्तः** ; पुनः पुनः भ्रमणम् । यद्वा संसार एव आवर्तः, तस्य यो वेगः, तस्य प्रशमनं शुभं च करोतीति प्रशमनशुभकृत् , स चासौ देशिकश्च, तेन प्रेक्षितः ; लब्धसदाचारकटाक्ष इत्यर्थः । **ईदृशः अहम् अन्यैरुपायैः** ; उपासनैः अधिकाराभावात् स्वयमेव त्यक्तः । अनेनाकिंचन्यरूपोऽधिकार उक्तः । **अनुचितचरितेषु** प्रतिकूलाचरणेषु शान्ताशयः । अनेन प्रातिकूल्यवर्जनमङ्गमुक्तम् । आनुकूल्यस्य सर्वभूतानुकूलतारूपत्वात् तद्विपरीतरूपप्रातिकूल्यवर्जनेन तदभिसंधिविरामेण वानुष्ठितत्वसिद्धेः अत्रानुकूल्यसंकल्पकथनम् । यद्वा तदत्राप्युप-

[1] शुभकृद्देशिकेति व्याख्ययोः पाठः.

[2] प्राप्य—ख.

प्रभाविलासः

" कर्तव्यं सकृदेव हन्त कलुषं सर्वं ततो नश्यति
ब्रह्मेशादिषु दुर्लभं पदमपि प्राप्यं मया द्रागिति ।
विश्वासप्रतिबन्धि चिन्तनमिदं पर्यस्यति न्यस्यतां
रङ्गाधीश रमापतित्वसुभगं नारायणत्वं तव ॥ "

इत्यभियुक्तवचनात् । शरण्यत्वोपयुक्तगुणयोगमाह— **निरवधिकदयमिति** । **प्रार्थ्येति** गोप्तृत्ववरणमुक्तम् । **न्यस्येति** निक्षेपोक्तिः । भोग्यतातिशयज्ञापनार्थं **पद्म**ग्रहणम् । न्यासफलमाह— **निर्भय इति**; " अथ सोऽभयं गतो भवति " इति श्रुतेः । **निजभरमिति** रक्षाभरसमर्पणम् । **निर्भर इति** फलसमर्पणम् । स्वरक्षणेऽस्वतन्त्रत्वमुक्तम् । **अस्मी**त्यहमर्थसमर्पणम् । अत्र नृवरेत्यादिपदप्रयोगसंभवेऽपि रक्षणप्रार्थनायां **वरदेति** पदस्याभिजाततया मुद्रा नामालंकारः,

" साभिप्रायस्य वाक्ये यद्वचसोऽभिनिवेशनम् ।
मुद्रां तां मुत्प्रदायित्वात् काव्यमुद्राविदो विदुः ॥ "

इति लक्षणात् ॥ ७४ ॥

**प्रभावली**

लक्षितम् । **तत्त्वदृष्ट्या**; तत्त्वज्ञानेन; स्वयमेव रक्षापेक्षी प्रपदनरूपव्याजे कृते सत्यस्मान् रक्षतीति ज्ञानेनेत्यर्थः । **निःशङ्कः**; " कर्तव्यं सकृदेव " इति श्लोकोक्तशङ्कापञ्चकापगमात् निःसंदेहः । अनेन विश्वासाख्यं प्रधानमङ्गमुक्तं भवति । **निरवधिकदयम्**; दयैव प्रधानोपाय इति द्योतनायैतदुक्तम् । **त्वाम्**; सर्वरक्षकम् । **प्रार्थ्य**; " त्वमेवोपायभूतो मे भव " इति गोप्तृत्ववरणं कृत्वा । **निजभरम्**; मोक्षायोपायानुष्ठानं कर्तव्यमिति शास्त्रविहिततया पुरुषस्योपायानुष्ठानं भरः । भो **वरद**, ममाप्युपायानुष्ठानरूपं भरं त्वत्पादपद्मे न्यस्य । न्यासो नाम 'अहं भक्त्याद्युपायानुष्ठानेऽशक्तः, त्वमेवानुष्ठितोपायस्य यत्कर्तव्यं तदननुष्ठितोपायस्यापि मम कुरु' इति प्रार्थना । **निर्भरः**; भरस्य त्वयि निवेशितत्वादिति भावः । त्वय्यर्पितभरत्वादेव 'अयमात्मा कथं भविष्यति' इति भयरहितश्चास्मि ॥ ७४ ॥

(सूतमवलोक्य) दृष्टमेव खलु निखिलं द्रष्टव्यम् ।

तर्कः—इतश्च दीयतां दृष्टिर्देवेन । अयं किलाधिगतपरावर-[1]तत्त्वयाथार्थ्यैर्महात्मभिरध्यक्षितमिव परमपदमनेकदेशदर्शनप्रयास-परिश्रान्तयोरावयोर्विश्रान्तिभूमिरिव भगवता स्वयमेव निर्मितो दूरा-दवलोक्यमानविकटतरहाटककूटविराजमानदशदिशावकाशः कलिबल-प्रसारितसकलसंकटप्रशमनो वेंकटाद्रिरालक्ष्यते ।

पारेशृङ्गमिहादिपूरुषपदप्रस्यन्दिपाथस्विनी-
पाथःपातपरंपराद्भुतमहारण्ये शरण्ये सताम् ।
पारावर्यविवेकपवित्रमधियः सत्त्वाश्च तत्त्वं परं
पश्यन्तः प्रचरन्ति हन्त सुखिनः सर्वेऽपि निर्वैरतः ॥ ७५ ॥

प्रभाविलासः

हाटकम्; सुवर्णम् । कूटम्; शृङ्गम् ।

"कूटं यन्त्रे नृपे राशौ निश्चले लोहमुद्गरे ।
मायाद्रिशृङ्गयोस्तुच्छे शिरोऽवयवदम्भयोः ॥"

इति विश्वः । पारेशृङ्गमिति । शृङ्गस्य पारे पारेशृङ्गम् । प्रस्यन्दिपाथ-स्विनी; आकाशगङ्गा । पारावर्यविवेकः; ईशेशितव्यज्ञानम् । इदं च निर्वैरत्वे हेतुः, "तज्जलानिति शान्त उपासीत" "मित्रामित्रकथा कुतः" इत्युक्तत्वात् ॥ ७५ ॥

प्रभावली

द्रष्टव्यम्; समाधिस्थानम् । अन्यदपि सत्त्वोत्तरं स्थानं दृश्यते, पश्ये-त्याह—इतश्चेति । महात्मभिः; मुनिभिर्देवैश्च । प्रत्यक्षं परमं पदमङ्गीकृतमि-त्यर्थः । अनेकदूरपरिश्रान्तयोरावयोर्विश्रान्त्यै भगवता स्वयमेव संदर्शित इतीव स्थितः । विकटतरं प्रकटतरं हाटकमयं काञ्चनरूपं कूटं विमानशृङ्गं, तेन भ्राजमानदशदिगन्तरः । प्रसारितं विस्तृतम् । सर्वदुःखप्रशमनो दृश्यते । दीयतां दृष्टिरिति संबन्धः । तत्राश्चर्यं दर्शयति—पार इति । पारशब्दोऽत्र मध्यवाची;

[1] तत्त्वयाथात्म्यैः—क.

इह खलु कश्चिदनादिपापवासनाजलधिकुक्षिंभरीमादिपूरुषकृपां भगवतीमनवरतमभिष्टौति—

'मृदुहृदये दये मृदितकामहिते महिते
धृतविबुधे बुधेषु [1]निहितात्मधुरे मधुरे।
वृषगिरिसार्वभौमदयिते मयि ते महतीं
भवुकनिधे निधेहि भवमूलहरां लहरीम्' ॥ ७६ ॥

इति।

प्रभाविलासः

मृद्विति। **मृदितकामहिते**; निष्कामहितकरे। **महिते**; पूजिते। **धृतविबुधे**; पोषितदेवगणे। **बुधेषु**; विद्वत्सु, प्रपन्नेष्वित्यर्थः। **निहितात्मधुरे**; विहितस्वरक्ष्यरक्षणभरे। **भवुकनिधे**; भाग्यनिधे। "भावुकं भवुकं भव्यम्" इत्यमरः। **निधेहि**; प्रतिधेहि, प्रयच्छ। **भवमूलहराम्**; संसारदुःखहेतुवासनानिवर्तिकां **लहरीम्**। अत्र दये दये हिते हिते इत्यादिना व्यञ्जनार्थद्वयपौनरुक्त्यप्रतीतेश्छेकानुप्रासोऽलंकारः,

प्रभावली

शृङ्गस्य मध्ये। **इह**; श्रीवेंकटाद्रौ। **आदिपुरुषस्य पदात् प्रस्यन्दिन्याः** क्षरन्त्याः **पाथस्विन्याः** नद्याः, आकाशगङ्गाया इत्यर्थः। तस्याः **पाथसो** जलस्य **पातः** पतनं, तत्परंपरया; प्रवाहपरंपरयेत्यर्थः। आश्चर्यभूते **सतां शरण्ये महारण्ये सत्त्वाः** प्राणिनः व्याधाः तिर्यञ्चश्च, **पारावर्य** परावरतत्त्वभावः, तस्य **विवेकः** यथावस्थितविभागः, तेन परिपक्वा शान्ता बुद्धिः येषां ते। परतत्त्वं श्रीनिवासरूपं **पश्यन्तः** साक्षात्कुर्वन्तः, उत्सवयात्रास्विति भावः। **निर्वैरतः** गोव्याघ्रादयोऽपि जातिवैराभावेन सुखिनश्चरन्ति पश्य ॥ ७५ ॥

**कश्चित्**; महापुरुषः। **जलनिधेः कुक्षिंभरीम्**; शोषणीमित्यर्थः। **भगवतीम्**; जगत्प्रसिद्धाम्। मृद्विति। **मृदुहृदये**; अनुकूलस्वरूपे। **मृदितकामाः**; निष्कामाः, तेषां हिते। **महिते**; पूजिते। **धृताः**; रक्षिताः **विबुधा**

[1] विधृतात्म—ख; विततात्म—छ.

अन्यदप्येतदनवरतमावर्तयति—

'निषादानां नेता कपिकुलपतिः कापि शबरी
कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति ।
अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि
प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे समयसि[1]' ॥ ७७ ॥

इति ।

प्रभाविलासः

"भवेदव्यवधानेन द्वयोर्व्यञ्जनयुग्मयोः ।
आवृत्तिर्यत्र स बुधैश्छेकानुप्रास इष्यते ॥"

इति लक्षणात् ॥ ७६ ॥

**निषादानामिति** । सकलजन्तुहिंसका निषादाः, तेषां नेता प्रवर्तकः । **कपिकुलपतिरिति** चापल्यातिशयोक्तिः । शबरजातिरेव सकलदोषमूला; तत्राप्यज्ञातपितृमात्रादितयात्यन्तनीचत्वं **कापि शबरीति** दर्शितम् । नामोच्चारणेनैव हेयता; किं पुनः कच्चरवस्त्रग्रथितक्षुद्रधान्यपृथुकग्रहणेनेति वक्तुं **कुचेल** इत्युक्तम् । **सा**; अनिर्दिष्टजातितया प्रसिद्धा ।

प्रभावली

देवाः विद्वांसश्च यया । **बुधेषु न्यस्तात्मभरे**; दयापरवशाः सन्तो जगद्रक्षणे प्रवर्तन्त इत्यर्थः । वृषगिरिनाथस्य वल्लभे, भवुकानां कुशलानां निधे । **महतीम्**; अन्यकृपाभ्यो महत्तराम् । अतो **भवस्य** मूलं पापं, तद्धरतीति ताम् । ते **लहरीं** प्रसरविशेषं **मयि** त्वयि न्यस्तभरे, निधेहि स्थापय ॥ ७६ ॥

**निषादानामिति** । **निषादानां नेता**; गुहः । **कपिकुलपतिः**; सुग्रीवः । **कापि**; अज्ञातकुलगोत्रा । **शबरी**; निषादी । **इति**; एवंप्रकारा अन्येऽपि । **अमीषाम्**; अनुक्रान्तानाम् । **निम्नत्वम्**; नैच्यम् । **वृषगिरिपतेः उन्नतिम्**; सर्वो-

[1] शमयसीति प्रभाविलासपाठः । एतच्छ्लोकानन्तरमधो निर्दिष्टः श्लोकः प्रभावल्यनुसारेण मूलेऽधिकः पठनीयः—

विश्वोपकारमिति नाम सदा दुहानामद्यापि देवि भवतीमवधीरयन्तम् ।
नाथे निवेशय वृषाद्रिपतौ दये त्वं न्यस्तस्वरक्षणभरं त्वयि मां त्वयैव ॥

**विवेकः**—(सबहुमानमवलोक्य प्रणमति)

**तर्कः**—(सर्वतो निर्दिश्य)

**श्रीरङ्गं वृषभाचलः करिगिरिर्दृष्टानि देव त्वया**
**दीव्यन्ति द्रमिडेष्वमी च कतिचिद्देशाः प्रजेशार्चिताः ।**
**प्रत्यग्रोदितघोरपश्चिमयुगप्रक्षोभविक्षोभके-**
**ष्वेतेषु क्वचिदस्तु संयमविधिस्वास्थ्यं त्रिवर्गत्यजः ॥ ७८ ॥**

**प्रभाविलासः**

रूपतोऽपि हेयेत्याह—**कुब्जेति** । यासामङ्गसङ्गिसमीरणगन्धोऽपि दुःसहः, किमुत सहासनसंलापपरिहासपरिरम्भादय इति वक्तुं **व्रजयुवतय** इत्युक्तम् । माल्यनिर्माणेनैव तस्य स्वरूपं ज्ञातम्; न तु जात्यादिनेति वक्तुं **माल्यकृदित्युक्तिः** । न केवलं स्वरूपरूपगुणविभूतिभ्य उन्नतत्वम्; किं तु स्थानतोऽपीत्याह—**वृषगिरिपतेरिति** । **शमयसि**; शान्तिं नयसि । तेऽपि गुहादय आत्मसाम्यापादनेन भगवता कृपावशेन स्वीकृता इति भावः ॥७७॥

**श्रीरङ्गमिति** । **दृष्टानीति**; "नपुंसकमनपुंसकेन" इत्यादिना नपुं-

**प्रभावली**

त्कृष्टत्वमपि । भो दये । **प्रचुरैः** तव **स्रोतोभिः** प्रचारैः सौशील्यवात्सल्यादिरूपैः । **प्रसभम्**; बलात्कृत्य । शेषशेषिणोरुभयोरननुमतावपीति भावः । **समयसि**; "परमं साम्यमुपैति" इत्युक्तरीत्या समानभोगान् करोषि ॥ ७७ ॥

**विश्वेति** । भो दये, **इति नाम**; उक्तप्रकारेण । **सदा** विश्वस्य सर्वविधमुपकारं **दुहानां त्वाम् अद्यापि** ज्ञानदशायामपि **अवधीरयन्तम्** अनादरयन्तम् **मां नाथे** वृषाद्रिपतौ त्वमेव समर्पय । कुत इत्यत आह? **त्वयैव** बलात्कृत्य **त्वयि** विषये **न्यस्तरक्षणभरम्**; त्वयैव त्वयि मद्भरन्यासस्य **कृतत्वात्** । अत आरब्धस्यान्तगमनं कुर्विति भावः ।

एवं निश्चितेष्वेतेषु स्थानेषु क्वचित्पुरुषं समाधौ स्थापयेत्याह—**श्रीरङ्गमिति** । **श्रीरङ्गक्षेत्रम्**; **वृषभाचलः** सुन्दरगिरिः **वेङ्कटाद्रिश्च**; **करिगिरिः**;

विवेकः—सूत, सांप्रतमेव[1] त्वया सांप्रतं प्रदर्श्यते । स्मर्यते च मुनिभिः—

“ निगृहीतेन्द्रियग्रामो यत्र यत्र वसेन्नरः ।
तत्र तत्र कुरुक्षेत्रं नैमिशं पुष्कराणि च ॥”

इति । अपिच,

**परिक्रान्ता पृथ्वी प्रणिधिपदमन्विष्य बहुधा**
**कलिक्षोभग्रस्ते जगति न गतिः क्वापि सुलभा ।**
**अथापि द्रष्टव्यं पुनरिह किमप्यादिमयुग-**
**क्रियायोग्यं किंचित्कथमपि मया स्थानमनघम् ॥ ७९ ॥**

### प्रभाविलासः

सकनिर्देशः । **प्रजेशः**; ब्रह्मा । **प्रक्षोभविक्षोभकेषु**; प्रक्षोभनाशकेषु ॥७८॥

**परिक्रान्तेति । प्रणिधिपदम्**; ध्यानयोग्यस्थानम् । **गतिः**; ज्ञानम् । **आदिमयुगक्रियायोग्यम्**; ध्यानयोग्यम् ॥ ७९ ॥

### प्रभावली

हस्तिशैलः, इत्येतानि स्थानानि त्वया दृष्टानि । “नपुंसकमनपुंसकेन” इति नपुंसकलिङ्गत्वम् । अमी च; अन्ये कतिचिद्देशाः यादवाचलादयः । **प्रजेशैः** ब्रह्मरुद्रादिभिः पूजिताः **दीव्यन्ति** प्रकाशन्ते संयमस्थानतया । **प्रत्यग्रेति** । प्रत्यग्रं यथा तथा उदितो घोरश्च यः कलियुगप्रक्षोभः कामक्रोधाद्यभिभवः, तस्य विक्षोभकेषु एतेष्ववस्थानेषु, **कच्चित्** तव मनोरुचिते **त्रिवर्गत्यजः** मुमुक्षोः पुरुषस्य **संयमविधिः** समाधिप्रवर्तनमस्तु ॥ ७८ ॥

**सांप्रतम्**; युक्तमेव । **सांप्रतम्**; संप्रति । **निगृहीतेति** । जितेन्द्रियः पुरुषः । **यत्र यत्र** देशे वसेत्, **तत्र तत्र** कुरुक्षेत्रादीनि भवन्तीति । अथ श्रीरङ्गादिस्थानानां दूरस्थत्वात् सुगमत्वेन स्थानान्तरं द्रष्टव्यमित्याशयेनाह—

[1] एव omitted—क.

संभवन्ति सर्वत्र श्रेयसामन्तरायाः। शमयितव्याश्च ते सर्वनिर्वोढारमेकमेव शरणमुपगच्छद्भिः। अपिच स्वयमेवाह भगवान्—"मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति। अथवा,

बहिर्भूतैरेतैर्विविधविनिपातस्थपुटितै-
र्यदृच्छासंवादप्रचितगुणविख्यातिभिरलम्।
प्रतिक्षिप्तावद्यं प्रवरगुणभूयिष्ठमधुना
नियच्छाम्यन्तःस्थं किमपि यमिनः संयमपदम्॥ ८०॥

प्रभाविलासः

**बहिरिति**। **एतैः**; देशैः। **विनिपातः**; विघ्नः। **संवादः**; कस्मिंश्चित् प्रतीते तदितरप्रतीत्यविषयत्वम्। **प्रतिक्षिप्तावद्यमिति**; प्राणायामादिभिर्निरस्तदोषमित्यर्थः। यथोक्तमहिर्बुध्न्येन—"प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्बिषम्" इति। याज्ञवल्क्येन च—

"यथा पर्वतधातूनां दोषान् दहति पावकः।
एवमन्तर्गतो दोषः प्राणायामेन दह्यते॥"

प्रभावली

**अपिचेति**। प्रणिधिस्थानमन्विष्य पृथ्वी बहुधा परिक्रान्ता मया। **क्वापि गतिः** संयमस्थानमदूरं सुगमं **न सुलभा**; न लभ्यते। एवमपि **आदिमयुगक्रियायोग्यम्** निवृत्तिधर्मानुष्ठानयोग्यम्। **अनघम्**; अन्तरायरहितम्, किमपि स्थानं द्रष्टव्यम्॥ ७९॥

**सर्वत्र**; स्थानेषु। **अन्तरायाः** विघ्नाः संभवन्ति, ते शमयितव्याश्च। कथमित्यत्राह—**सर्वेति**। सर्वकार्यनिर्वाहकं "मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" इति वादिनं कृष्णमेव तदा तदा शरणं गच्छद्भिरधिकारिभिः। **स्वयमेवाह**; इममर्थमिति शेषः। **मामेव**; मामेकमेव

**प्रभाविलासः**

इति । **प्रवरगुणभूयिष्ठम्**; निरूपिताष्टदलादिभूयिष्ठम् । **संयमपदम्**; भगवद्ध्यानपदं नियच्छामि । अत्रोक्तं वसिष्ठेन—

"हृत्पद्मेऽष्टदलोपेते कन्दमध्यात्समुत्थिते ।
द्वादशाङ्गुलनालेऽस्मिंश्चतुरङ्गुलषण्मुखे ।
प्राणायामैर्विकसिते केसरान्वितकर्णिके ।
वासुदेवं जगन्नाथं नारायणमनामयम् ।
चतुर्भुजमुदाराङ्गं शङ्खचक्रगदाधरम् ।
किरीटकेयूरधरं पद्मपत्रनिभेक्षणम् ।
श्रीवत्सवक्षसं विष्णुं पूर्णचन्द्रनिभाननम् ।
पद्मोदरदलाभोष्ठं सुप्रसन्नं शुचिस्मितम् ।
शुद्धस्फटिकसंकाशं पीतवाससमच्युतम् ।
पद्मच्छविपदद्वन्द्वं परमात्मानमीश्वरम् ।
प्रभाभिर्भासयद्रूपं परितः पुरुषोत्तमम् ।
मनसालोक्य देवेशं सर्वभूतहृदि स्थितम् ।
सोऽहमात्मनि विज्ञानं ध्यानं तत् सगुणं स्मृतम् ॥"

इति ॥ ८० ॥

**प्रभावली**

**ये** एतत्सिद्धिकामाः **प्रपद्यन्ते**, ते मत्प्रसादात् **मायां** तत्तत्सिद्धिप्रतिबन्धरूपां तरन्तीति । अथ श्रीरङ्गादिबाह्यस्थानं विहाय सर्वदोषरहितमान्तरं स्थानं निश्चिनोति—**अथवेति** । **बहिर्भूतैः**; बाह्यैः नानाविधविघ्नविषमितैः **यदृच्छासंवादेन** क्वचिद्यादृच्छिकफलसिद्ध्या **प्रथितगुणत्वेन** अधिकगुणत्वेन विख्यातिर्येषां तैः **स्थानैरलम्** । अतः निरस्ताशेषदोषं **मङ्गलविग्रहगुणभूयिष्ठम् अन्तःस्थं** स्वशरीरान्तःस्थं दहराकाशरूपं **किमपि स्थानं यमिनो** योगिनः समाधिस्थानम् **अधुना नियमयामि** ॥ ८० ॥

किंच,

**पुरुषस्य पुराणस्य पुंसश्च शरणार्थिनः ।**
**अपृथक्सिद्धयोरेकमदूष्यं स्थानमान्तरम् ॥ ८१ ॥**

इदमपि सारथे, मन्वीथाः—

**शुद्धाचारतपोवनैकनियतः प्रज्ञानशैलाश्रयः**
**पद्माकान्तपदस्पृहासुरनदीनित्याभिषेकोज्ज्वलः ।**
**अध्यात्मश्रुतिचिन्तनेन तपसा निर्धूतदोषः पुमान्**
**कस्मै कुत्र गमिष्यति [1]स्थितमिदं कस्मै च निर्देक्ष्यति ॥ ८२ ॥**

**प्रभाविलासः**

हृदयपुण्डरीकस्य सौकर्यान्तरमाह—**पुरुषस्येति । अपृथक्सिद्धयोः**; शरीरशरीरिभावेनाविनाभूतयोः ॥ ८१ ॥

**शुद्धेति । कस्मै** प्रयोजनाय । **स्थितम्**; अवस्थानम् ॥ ८२ ॥

**प्रभावली**

पुराणस्य पुरुषस्य; शरीरिणः । **शरणार्थिनः पुंसः**; शरीरभूतस्य च । **अपृथक्सिद्धयोः एकं** साधारणम् **आन्तरं स्थानम्**; उभयोरपि हृदयस्थानत्वात्, "गुहां प्रविष्टौ परमे परार्ध्ये" इत्यादेः ॥ ८१ ॥

पुनरपि बाह्यस्थानगमने प्रयोजनाभावादान्तरमेव वरमित्याह—**इदमित्यादि । इदम्**; वक्ष्यमाणमपि । **शुद्धः** सदाचार एव **तपोवनं,** तदेकनियतः । प्रकृष्टज्ञानम्; जीवपरमात्मयथावस्थितज्ञानं; तदेव तपोवनशैलः, तदाश्रयः । **पद्माकान्तस्य पदयोः स्पृहा,** सैव सुरनदी । उपनिषदर्थचिन्तनमेव तपः; तेन निरस्तदोषः । एवं तपोवनादीनां स्वस्मिन्नेव संभवान्न कुत्रापि गन्तव्यमित्याह—**कस्मै** इत्यादि । **कस्मै**; प्रयोजनाय । **कुत्र**; स्थाने बाह्ये । **स्थितमिदम्**; आत्मनि विद्यमानं तपोवनादिकम् । **कस्मै** वा पुरुषाय वक्ष्यति । न कस्मैचिद्वक्तव्यमिति भावः ॥ ८२ ॥

[1] स्थितिमिमां—क.

अपिच,

गङ्गासेतुसरस्वतीरविसुतागोदावरीनर्मदा-
तुङ्गाशोणमरुद्वृधाप्रभृतिभिस्तीर्थैरलं प्रार्थितैः ।
नित्यासन्नमशेषतापशमनं[1] निःश्रेयसप्रापकं
ग्रीष्मे शीतमिव ह्रदं बहुगुणं ब्रह्म प्रविष्टो मुनिः ॥ ८३ ॥

तद्वयं शुभाश्रयनिर्धारणेन धारणादिकक्ष्यासु विशदतमां वृत्तिं पुरुषस्य विभावयामः ।

(इति ससूतो निष्क्रान्तः)

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदये स्थानविशेषसंग्रहो नाम षष्ठोऽङ्कः ।



प्रभाविलासः

गङ्गेति । ग्रीष्मे शीतमिवेति ; अनेन,

"एष ब्रह्म प्रविष्टोऽस्मि ग्रीष्मे शीतमिव ह्रदम् ।
शमामि परिनिर्वामि सुखमासे च सर्वदा ॥"

इति स्मारितम् ।

इत्यात्रेयाहोबिलाचार्यविरचिते संकल्पसूर्योदयव्याख्याने प्रभाविलासाख्याने स्थानविशेषसंग्रहो नाम षष्ठोऽङ्कः ।



प्रभावली

सदा ध्यायिनः पुंसो गङ्गादिसर्वतीर्थप्रार्थनैरलमित्याह—अपिचेत्यादि । रविसुता ; कालिन्दी । मरुद्वृधा ; कावेरी । तीर्थप्रार्थना मास्त्वित्यर्थः । कस्ये-

[1] पापशमनं—क.

## प्रभावली

स्याकाङ्क्षायामाह—**नित्यासन्नमिति**। सदा समीपस्थम्। गङ्गाद्याः दूरे वर्तमानाः कतिपयपापशमनाश्चेति भावः। **ग्रीष्मे शीतमिव ह्रदमिति** श्रुतिप्रतीकग्रहणम्। "एष ब्रह्म प्रविष्टोऽस्मि" इति पूर्वचरणम्। **बहुगुणम्**; तीर्थान्तरेभ्योऽप्यधिकगुणयुक्तम्। ग्रीष्मकाले शीतं ह्रदमिव स्थितम्। ह्रदाधिकगुणमाह—**बहुगुणमिति**। अशेषपापशमनत्वादिगुणं ब्रह्महृदं प्रविष्टः किलायं मुनिः। यतोऽयं ब्रह्महृदं प्रविष्टः, अतस्तस्य बाह्यतीर्थैरलमिति भावः॥ ८३॥

**तदिति**। **तत्**; तस्मात्; समाधिस्थानस्य निर्धारितत्वात्। इतः परं **शुभाश्रयस्य** ध्येयवस्तुनो **निर्धारणेन**। अनेनोत्तराङ्कार्थः सूच्यते। **धारणादिकक्ष्यासु**; धारणाध्यानसमाधिरूपयोगपर्वसु। पुरुषस्य स्पष्टतमां वृत्तिं संपादयाम इति।

इति श्रीनृसिंहराजाचार्यकृतसंकल्पसूर्योदयव्याख्यायां प्रभावल्यां स्थानविशेषसंग्रहो नाम षष्ठोऽङ्कः।

---

# सप्तमोऽङ्कः

## शुद्धविष्कम्भः

(ततः प्रविशति संस्कारः)

**संस्कारः**—अहं खल्वनुभवामुष्यायणः संस्कारनामा[1] देवस्य विवेकस्य शिक्षितसर्वविद्याकलापः[2] शिल्पी देवशिल्पिनं विश्वकर्माणमसुरशिल्पिनं मयं च विजित्य विश्रमाभिलाषी चिरमस्वाप्सम्। तावच्चेदमन्तरमासाद्य महामोहप्रयुक्ताभ्यां मधुकैटभाभ्यामिव महाबलाभ्यां मध्यमचरमगुणाभ्यां सत्त्वमित्रमसाविति जिघांसितः। नूनमप्रबुद्धतैव पुरुषेषु प्रतिपक्षजनस्य हस्तावलम्बः। ततश्चाहं

**प्रभाविलासः**

**तत इत्यादि। आमुष्यायणः**; पुत्रः। **विजित्य चिरमस्वाप्समिति** मुचुकुन्दसाम्यं व्यज्यते। **सहदृष्टीति**; "सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य

**प्रभावली**

संस्कारो नाम पदार्थानुभवजनितस्तत्स्मृतिजनको भावनाख्यः। **अनुभवामुष्यायणः**; अनुभवस्यापत्यं पुत्रः। **शिक्षितः सर्वविद्यानां कलापः** समूहो येन। **विवेकस्य शिल्पी**; चित्रलेखकः। **शिल्पिनम्**; तक्षाणम्। शिल्पविद्यया **विजित्य विश्रमाभिलाषी अस्वाप्सम्**। संस्कारस्याप्रबोध एव स्वापः। **तावत्**; तावता। **मध्यमचरमगुणाभ्याम्**; रजस्तमोगुणाभ्याम्। **असौ**; संस्कारः। सत्त्वगुणस्य मित्रमिति मत्वा हन्तुमिष्टोऽभूवम्। **अप्रबुद्धता**; प्रमादः। शत्रुजनस्य

[1] संस्कारापरनामा—क. ख.

[2] सर्वविद्यः—क.

[1]प्रबोधितः सहसैव परमपुरुषदयाचोदितया देव्या सुमत्या सहदृष्टि-सदृशदृष्टिसंज्ञाभ्यां दासीभ्यां, [2]निरवकाशतया ततस्ततः पलायिते प्रतिपक्षे केनापि हेतुना विश्वचित्रं दिदृक्षमाणस्य देवस्य महाराजविवेकस्य सेनापतिना व्यवसायेन स्वामिसंमतमादिष्टोऽस्मि । यथादिष्टं च तदाहितदृष्टिरन्वतिष्ठम् । अवसरानुकूलवृत्तीनां खल्वधिकारिणामाधिपत्यं प्रतितिष्ठति । ततश्च,

विदुषश्चिन्तनां शक्त्या चित्रभित्तिं वितन्वता ।
शुद्धाशुद्धविभागार्हं विश्वं विलिखितं मया ॥ १ ॥

**प्रभाविलासः**

बोधकाः" इति वचनमभिप्रेतम् । **विदुष इति** । **शुद्धम्**; ब्रह्मस्वरूपम् । **अशुद्धम्**; देवादिकम् । तदुक्तम्—

**प्रभावली**

हस्तावलम्बः । **ततः**; अनन्तरम्, जिघांसनात् हेतोर्वा । **सुमत्या**; प्रेषिताभ्यामिति शेषः । **सहदृष्टिः**; सहदर्शनम् । **सदृशदृष्टिः**; सदृशदर्शनम् । ताभ्यां सुमतीदासीभ्यां सहसैव प्रबोधितोऽस्मि । सहदर्शनेन सदृशदर्शनेन च संस्कार उद्बुद्धो भवति । अथ स्वकर्तव्यमावेदयितुं स्ववृत्तान्तमाह—**निरवकाशतयेत्यादिना** । **प्रतिपक्षे**; चार्वाकादिषु कामादिषु च विवेकसंनिधाववकाशाभावात् तत्र तत्र पलायितेषु । **केनापि हेतुना**; पुरुषस्य शुभाश्रयनिर्धारणायेत्यर्थः । **विश्वचित्रम्**; विश्वरूपं चित्रम् । **स्वामिसंमतम्**; विवेकस्याभिमतं किमपीति शेषः । **आदिष्टोऽस्मि**; मनोभित्तौ जगच्चित्रलेखनायेत्यर्थः । यथाज्ञप्तं **तत्**; चित्रलेखनम् । **आहितदृष्टिः**; सावधानोऽनुष्ठितवानस्मि । अनुष्ठानेच्छायां कारणमाह—**अवसरेति** । अवसरे अनुकूलकृताम् । **प्रतितिष्ठति**; प्रतिष्ठितं भवति । तदन्वतिष्ठमित्युक्तं विशदयन्नाह—**ततश्चेति** । **विदुषः**; उपासकस्य । **चिन्तनाम्**; चिन्ताम् । **चित्रस्य** लिख्यमानस्य जगच्चित्रस्य **भित्तिं** कुर्वता मया ।

[1] प्रतिबोधितः—क  [2] तदिह added before—क.

(सर्वतोऽवलोक्य) अहह 'सहस्रेष्वपि शिल्पकर्मसु[1] [2] किंचिदेव कदाचिदतिशेते । इह च,

**श्लक्ष्णं स्थानं सान्द्रलग्नो विलेपः**
**सूक्ष्मा रेखा सुस्थितः सूत्रपातः ।**
**स्निग्धो वर्णस्तत्तदर्हो विशेषः**
**शङ्के पक्वं शिल्पविद्याफलं नः ॥ २ ॥**

**प्रभाविलासः**

"समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत ।
तद्रूपं विश्वरूपस्य तस्य योगयुजा नृप ।
चिन्त्यमात्मविशुद्ध्यर्थं सर्वकिल्बिषनाशनम् ॥"

इति ।

"अन्ये तु पुरुषव्याघ्र चेतसो ये व्यपाश्रयाः ।
अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः ॥"

इति च ॥ १ ॥

**श्लक्ष्णमिति । तत्तदर्हः**; तत्तत्संस्थानार्हः ॥ २ ॥

**प्रभावली**

**शक्त्या**; यथाशक्तीत्यर्थः । **शुद्धाः**; कर्मरहिताः नित्यविभूतिगताः । **अशुद्धाः**; लीलाविभूतिगताः कर्मबद्धाः । शुद्धाशुद्धविभागविशिष्टमित्यर्थः । **विश्वं विलिखितम्**; सर्वतश्चित्रितम् ॥ १ ॥

सर्वतोऽवलोक्य । **अहहेति**; अद्भुते । लोके चित्रकर्मणि **कदाचित् किंचिदेवातिशेते**; सुष्ठु भवति । इह तु सर्वमप्यनुकूलं जातमित्याह—**श्लक्ष्णमिति । स्थानम्**; चिन्तनाख्यम् । **श्लक्ष्णम्**; चिन्तनायाः श्लक्ष्णत्वं नाम प्रत्ययान्तरानन्तरितत्वम् । **विलेपः**; वासनाप्रकर्षरूपः सान्द्रं यथा तथा **लग्नः**;

[1] सर्वेष्वपि—ख.    [2] चित्रकर्मसु—ग.

अपिच, आजानसिद्धशक्तीनां पुरुषाणामभ्युच्चयो हि शिक्षाप्रकर्षः। वदन्ति हि—'प्रतिनियतैव हि वस्तुशक्तिः' इति[1]। यद्वा भवतु नामैतत्साधारणं सर्वशिल्पिनाम्। मम पुनरालेखनीयानां भगवदवताराणां प्रसादादद्य यावददृष्टचरमीदृशं हस्तकौशलमुपलभ्यते। किं प्रतिपत्स्यते देवः? निरङ्कुशाः खलु राजानः परिजनकृत्येषु यथार्हं प्रसीदेयुरुपेक्षेरन्वा। अथवा न खल्वयमसमीक्ष्यकारी नयपथनियतवृत्तिरस्मत्स्वामी। तदहं देवस्य विवेकस्य देव्याश्च सुमतेः सबहुमानप्रसादेन धन्यो भविष्यामि। अत्र च,

प्रभावली

वासनाप्रकर्षो मनसि लग्नो भवति। अन्यत्र सुधाविलेपनम्। **रेखाशब्देन** चिन्त्यमानं भगवद्विग्रहादि ध्येयवस्तूच्यते। तस्य सूक्ष्मत्वं विशुद्धमनोग्राह्यत्वम्। **सूत्रपातो** नाम ध्येयवस्तुबोधकावगमः। चित्रे चित्रस्थितिहेतुर्गुणपातः। **वर्णः**; विग्रहश्यामलत्वादिः। **स्निग्धत्वं** मनोहरत्वम्। अन्यत्र नीलपीतत्वादेः रम्यता। **विशेषः**; वर्णविशेषः। **तत्तदर्हः**; लक्ष्मीतत्पतिविग्रहार्हः। अतो **नः शिल्पविद्याफलं** शिल्पज्ञानफलं परिपक्वं जातमिति शङ्के॥ २॥

स्वतःसिद्धशक्तीनां केषांचित् शिक्षाप्रकर्षोऽभ्युच्चये हेतुः। स्वशक्तिरेव प्रधानहेतुरित्याह—**आजानेति**। तत्र संमतिं दर्शयति—**वदन्ति हीति**। वस्तूनां शक्तिः **प्रतिनियता**; प्रतिवस्तु पृथङ् नियता। वस्तुशक्तिप्रयुक्तं हस्तकौशलं सर्वशिल्पिसाधारणम्। स्वस्याधिक्यमाह—**मम पुनरिति**। **आलेखनीयानाम्**; आलेखनविषयाणाम्। **अद्य यावद्** एतत्पर्यन्तम्। **ईदृशम्**; दृष्टसमम्। प्रत्यक्षसमानाकारकौशलं दृश्यते। **किं प्रतिपत्स्यते**; साध्विति वा, असाध्विति वा किं ज्ञास्यति। **देवः**; विवेकः। यथार्हं साधुनि प्रसीदेरन्, असाधुन्युपेक्षेरन्वा। यथार्हं स्वगुणानुगुणं साधुन्येव प्रसीदेरन् उपेक्षेरन्वा। विवेकस्त्वसमीक्ष्यकारी न भवतीत्याह—**अथवेति**। **नयपथे**; न्यायमार्गे। **बहुमानं**

[1] अत्र "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः" इति वचनमनुसंधेयम्.

विश्वप्रीणनविश्वकर्मरचनाचातुर्यकातर्यदैः
शिल्पैः कल्पयतीव मण्डनमसौ चेतःस्थितेर्मण्डपः ।
[1]रत्नस्तम्भभुवोऽपि रश्मय इमे सोपानगोपानसी-
मध्यं यत्र गवाक्षयन्ति [2]विहितप्रत्यग्रचित्रक्रमाः ॥ ३ ॥

(नेपथ्ये)

कः कोऽत्र भोः ?

संस्कारः—(श्रुत्वा सहर्षम्) किमासीदति शिल्पशालां व्यवसायदत्तहस्तः सुमतिसहायो विवेकः ? तदहं यथोचितपरिजनकृत्ये वर्तिष्ये ।

(इति निष्क्रान्तः)

शुद्धविष्कम्भः



प्रभाविलासः

विश्वेति । चेतःस्थितेः; हृदयपुण्डरीकवर्तिनो हरेः । विहितप्रत्यग्रचित्रक्रमाः; विहिताः कृताः प्रत्यग्राः नूतनाः चित्रक्रमाः आतान वितानरूपेणाश्चर्यप्रसरपर्यायाः । अत्र भ्रान्तिमदलंकारो व्यज्यते ॥ ३ ॥

शुद्धविष्कम्भः



**प्रभावली**

पारितोषिकदानं, तत्सहितेन प्रसादेन । दहराकाशमण्डपं प्रस्तौति—**विश्वेति** । **अयं मण्डपः विश्वेषां** प्रीतिकारणं **यद्विश्वकर्मणो** देवशिल्पिनः शिल्पचातुर्यं, तस्य **कातर्यदैः** अपजयप्रदैः **शिल्पैः** रचनाविशेषैः **चेतसि स्थितिर्यस्य** तस्यान्तर्यामिणो भगवतः **मण्डनं** शोभां **जनयतीव** । यत्र मण्डपे **रत्नस्तम्भसंभवा इमे रश्मयः विहितप्रत्यग्रचित्रक्रमाः** अपूर्वचित्रार्पणक्रमो विहितो यैस्ते सन्तः, सोपानसहितायाः **गोपानस्याः** वलभ्याः **मध्यं गवाक्षयन्ति** ॥ ३ ॥

**कः कोऽत्र भोः** इत्यन्तः स्थितस्य विवेकस्य वचनम । बहिः स्थितः

[1] अत्र हृदयमेव मण्डपः । तत्र रत्नस्तम्भाः ज्ञानभक्तिवैराग्यादयोऽभिप्रेताः.

[2] विहितप्रत्यक्ष—ख.

(ततः प्रविशति विवेकः सुमतिर्व्यवसायश्च)

**व्यवसायः**— इत इतो देवः। इयं सा सर्वाश्चर्यसमुच्चयालोकनकुतूहलाहूतपुरुहूतपुरपुरंध्रीपरिष्कृतखल्लूरिकोपान्तभागा बहिरन्तश्च लम्बितामन्दमकरन्दपरिमलमन्दारदामचित्रिता चित्रशाला; यत्र च परस्परप्रतिफलनादलिखितापि भित्तिर्लिखितेवावभासते।

(सर्वे प्रवेशं नाटयन्ति)

**व्यवसायः**—(चित्रशालां दर्शयन्)आलोकयतु देवो देवी च। इह हि,

### प्रभाविलासः

तत इत्यादि। **खल्लूरिका**; गृहपुरोभागः। **यत्रेति**; अत्र भ्रान्ति-

### प्रभावली

संस्कारः श्रुत्वा। **आसीदति**; आगच्छति। अनेनोपरि वक्ष्यमाणाङ्कप्रधानपात्रं सूच्यते।

**शुद्धविष्कम्भः**



इत इत इति; पश्यत्विति शेषः। शालायाः सर्वाश्चर्यसमुच्चयरूपत्वात् तद्विलोकनकुतूहलेनाहूताः याः **स्वर्गपुरंध्र्यः** अप्सरसः, ताभिरलंकृतः, **खल्लूरिका** मुखमण्डपं मुखशाला, तस्या **उपान्तभागः** उभयपार्श्वसमीपप्रदेशो यस्याः। बहिरन्तश्च लम्बितानि यानि अमन्दपरिमलमन्दारकुसुमदामानि तैः चित्रिता। शालाया अतिशयं वर्णयति—**यत्रेति**। भित्तीनां परस्परप्रतिफलनात् वस्तुतोऽलिखितापि। अत्र भवत्प्रीत्यै संस्कारशिल्पी विश्वचित्रं लिखितवानित्याह—

**परिचयमहिमानं प्राप्य संजातभूमा**
**दिविषदनुविधेयो दिव्यसंस्कारशिल्पी ।**
**व्यलिखदनघरूपं विश्वमेतद्यथाव-**
**च्चिरगतमपि दृश्यं चिन्तनाचित्रभित्तौ ॥ ४ ॥**

अपिच,

**प्रमाणप्रत्ययादत्र कल्पितान्यविकल्पतः ।**
**अपि भूतानि भावीनि भवन्तीव [1]भवन्ति नः ॥ ५ ॥**

प्रभाविलासः

मदलंकारः । **परिचयेति । दिविषदनुविधेयः ;** स्वर्गवासिनामनुसरणीयः । **चिरगतमपि दृश्यमिति ;** "चिरनिर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितम्" इति वचनं व्यञ्जितम् ॥ ४ ॥

**प्रमाणेति । प्रमाणप्रत्ययात् ;** प्रमाणदार्ढ्यादित्यर्थः । **अविकल्पतः ;** असंशयात् । **भूतानि ;** अतीतानि । **भावीन्यपि ;** भविष्यन्त्यपि । **भवन्तीव ;** वर्तमानानीव **भवन्ति** ॥ ५ ॥

**प्रभावली**

**परिचयेति ।** दिविषदः ; देवाः, इन्द्रियाणि ; "देवा वैकारिका दश" इत्यादेः, **अनुविधेयाः** अनुसरणीयाः यस्य सः । अनुभवस्येन्द्रियाधीनत्वात्तत्कार्यस्य संस्कारस्यापीन्द्रियाधीनत्वमिति भावः । यद्वा दिविषदो भगवन्मत्स्याद्यवताराः । अनेन तच्चिन्तनानि लक्ष्यन्ते । तेषां संस्काराधीनत्वात्तदनुविधेयत्वम् । **दिव्यः संस्काराख्यः शिल्पी** परिचयातिशयं प्राप्य संजातदृढिमा सन् अनघं रूपं यस्य तत् **विश्वं चिरगतमपि** यथा **दृश्यं** स्फुटं प्रत्यक्षं भवति, तथा **चिन्तनाख्यचित्रभित्तौ यथावत् व्यलिखत्** ॥ ४ ॥

पुनरप्यत्रातिशयमाह—**प्रमाणेति । प्रमाणप्रत्ययात् ;** अनुभवावेदकप्रमाणविश्वासात् । **अत्र ;** भित्तौ । **कल्पितानि ;** लिखितानि । **भूतानि भावीन्यपि**

[1] विभान्ति नः इति प्रभावलीपाठः

**राजा**—(विश्वतो दृष्टिं प्रसारयन्) देवि, दृश्यतामिदमपूर्वमद्भुतम्, यस्य पुनः स्वेन विना नोपमानान्तरमुपलभामहे। अस्ति किंचित्। तथाहि—

**परिमितमपरिमितानामास्पदमेतत्प्रपञ्चचित्राणाम्।**
**दहरगगनाभिधानं दिव्यं पुरुषं निदर्शयति ॥ ६ ॥**

(विमृश्य) अथवा, जठरविवरविन्यस्तसमस्तवस्तुजातस्य कल्पान्तबालकस्य कल्पयति कल्पनाम्। अपिच,

**नैतद्बाह्यैस्तूलिकावर्णकाद्यैः क्लृप्तं चित्रं किंतु संतोषलिप्ताम्।**
**नानाकारां भावनामेव शिल्पी शिल्पव्याजान्नूनमत्रोज्जगार ॥७॥**

**प्रभाविलासः**

**परिमितमिति। दहरगगनाभिधानम्**; दहराकाशशब्दवाच्यं परं ब्रह्म "दहरोऽस्मिन्नन्तर आकाशः" इति श्रुतेः ॥ ६ ॥

**नैतदिति। संतोषः**; भगवद्विषयिणी प्रीतिः ॥ ७ ॥

**प्रभावली**

चित्राणि अविकल्पतः अविशेषेण भवन्तीव वर्तमानानीव नः विभान्ति; अतीतान्यपि प्रत्यक्षाणीव स्फुरन्तीत्यर्थः ॥ ५० ॥

दहराकाशस्योपमानान्तरं किंचिदस्तीत्याह—**परिमितमिति**। एतत् दहराकाशाभिधानम् अपरिमितानां प्रपञ्चचित्राणामास्पदं स्वस्य दिव्यं पुरुषं भगवन्तं निदर्शयति; उपमानत्वेन दर्शयति। दहराकाशस्थितो दिव्यपुरुषोऽपि हृदयपरिमितः अपरिमितप्रपञ्चाश्रयश्च भवति ॥ ६ ॥

दिव्यपुरुषस्य यदघटितघटनासामर्थ्यं तदस्य शिल्पिनोऽप्यस्तीत्याह—**जठरेति**। **कल्पनाम्**; अघटितघटनासामर्थ्यम्। अयं शिल्पी इदं चित्रं बाह्योपकरणैर्न लिखितवान्, किंतु स्वगतां भावनामेवोद्घाटितवानित्याह—**अपिचेति**। **एतत् चित्रम्**; जगद्रूपम्। **बाह्यैस्तूलिकावर्णकाद्यैः** तूलिका लेखिनी, वर्णका अग्रे मृदुतन्तुबद्धं श्वेतपीतादिलेखनद्रव्यं, तदाद्यैः **क्लृप्तं चित्रं न**। किंतु संतोषकल्पितां

सुमतिः—णाह अचिंतणिज्जमाहप्पाए[1] ईसरस्स विअ तुह सत्तीए इअरदुग्घडं सव्वं संघडिज्जइत्ति किं अच्चरिअं?

(नाथ, अचिन्तनीयमाहात्म्ययेश्वरस्येव तव शक्त्येतरदुर्घटं सर्वं संघट्यत इति किमाश्चर्यम्?)

राजा—अत्र किल [2]विश्वतश्चित्रे विश्वचित्रे,

अशुद्धसृष्टिविषयं भागं भवभृदाश्रयम्।
अधिकप्रतिकोटिस्थं दृष्टिस्तव दिदृक्षते॥ ८॥

प्रभाविलासः

**अशुद्धेति। अधिकप्रतिकोटिस्थम्;** निःसमाभ्यधिकहेयविरोधिभगवदाधारमिति भागविशेषणम्॥ ८॥

प्रभावली

नानाकारां भावनां चिन्तनामेव जगच्चित्ररूपेण उज्जगार उद्गीर्णवान्। **नूनम्;** सौष्ठवादेवमुत्प्रेक्षते॥ ७॥

णाह—नाथ। **अचिंतणिज्जमाहप्पाए**—अचिन्तनीयमाहात्म्यया। **ईसरस्स**—ईश्वरस्य। **विअ**-इव। **तुह**-तव। **सत्तीए**-शक्त्या। **इअरदुग्घडं**-इतरदुर्घटम्। **सव्वं**-सर्वम्। **संघडिज्जइत्ति**-संघट्यत इति। **किं अच्चरिअं**-किमाश्चर्यम्। **अशुद्धसृष्टेः** सकाशात् शुद्धसृष्टिविषये सुमतिं निवर्तयितुं सुमत्या अशुद्धशुद्धोभयसृष्टिविषयदिदृक्षामनुवदति—**अत्रेति**। सर्वप्रकारेणाप्यद्भुते विश्वरूपचित्रे। **अशुद्धेति**। **भवभृदाश्रयम्;** संसारिसंबन्धिनम्। **अशुद्धसृष्टिविषयम्;** अशुद्धाः बद्धाः, तेषां सृष्टिः, तद्विषयं चित्रभागम्। **अधिकप्रतिकोटिस्थम्;** जीवादधिकभूते प्रतिकोटौ व्यूहविभवादिषु तिष्ठतीति तथा। शुद्धविषयमित्यर्थः। कर्मकृतसंबन्धाभावात् शुद्धत्वम्। भागं च; उभयमपीत्यर्थः। **तव दृष्टिः दिदृक्षते**॥८॥

[1] माहप्पस्स—ख. [2] विश्वतश्चित्रे omitted—क.

[1]अत्र च,

प्रवर्तयितुमिच्छतः प्रगुणवृत्तिमन्तर्दृशं
गुणत्रयविचित्रिता यवनिकेयमाच्छादिका ।
तदत्र [2]भवदुर्ज्वरज्वलनजन्मभूमौ त्वया
दिदृक्षणमितः परं दृढविलक्षया त्यज्यताम् ॥ ९ ॥

व्यवसायः—देवि, सम्यगिदमादिष्टं देवेन । तथाहि—

विविधविषयद्वीपारोहावरोहविसंस्थुल-
स्थितिभिरमुकैरन्योन्यस्मादुपस्थितसाध्वसैः ।
कमठमकरग्राहप्रायैरबुद्धिभिराश्रित-
स्त्रिगुणजलधिर्न द्रष्टव्यः समीहितसंयमैः[3] ॥ १० ॥

प्रभाविलासः

**प्रवर्तयितुमिति** । **गुणत्रयम्**; सत्त्वादिकम् । **तत्**; तस्मात्, आच्छादकत्वाद्धेतोः । **भवदुर्ज्वरः**; संसारतापः, स एव **ज्वलनः**, तस्य जन्मभूमौ । **दिदृक्षणम्**; दर्शनेच्छा । **दृढविलक्षया**; दृढवैमुख्येन; सुमति-विशेषणं वा । **त्यज्यतामिति**; अनेन संग्रहो नाम गर्भसंधेः षष्ठमङ्गमुक्तम्, "प्रस्तुतोपयोगि सामदानवचनं संग्रहः" इति लक्षणात् ॥ ९ ॥

**विविधेति** । **विसंस्थुलम्**; दन्तुरम् । **कमठः**; कूर्मः । **मकरः**;

प्रभावली

अत्राशुद्धसृष्टिविषयदिदृक्षा त्यज्यतामित्याह—**प्रवर्तयितुमिति** । **प्रगुण-वृत्तिम्**; प्रकृष्टो गुणः सत्त्वं, तत्र वृत्तिः वर्तनं यस्यास्ताम् । **अन्तर्दृशं** ज्ञानदृष्टिं **प्रवर्तयितुमिच्छतः** पुंसः **इयम्** अशुद्धसृष्टिः **गुणत्रयविचित्रितयवनिका** सती दृष्टेः **आच्छादिका** भवति । यवनिकापक्षे गुणत्रयं श्वेतनीलादि । **तत्**; तस्मात् । **अत्र**; उभयसृष्टिमध्ये । **भव** एव **दुर्जरः** दुःशमः **अनलः**, तस्य जन्मभूमौ । अशुद्धसृष्टावित्यर्थः । **इतः परं दिदृक्षणं** दर्शनेच्छा **दृढविलक्षया** गाढलज्जया **त्वया** पुरुषं मोचयन्त्या **त्यज्यताम्** ॥ ९ ॥

**आदिष्टम्**; उपदिष्टम् । बद्धजीवसहिता प्रकृतिर्विद्वद्भिर्न ध्येयेत्याह—**विवि-**

[1] अत्र तु—क. [2] भवदुर्जरेति प्रभावलीपाठः [3] साधकैः—ग.

**सुमतिः**—अय्यउत्त, ठिरणिबद्धाहिं वासणाहिं आकिट्ठा वि मह दिट्ठी [1]दाणिं तुह णिओएण पच्चाणिज्जइ ।

**प्रभाविलासः**

मत्स्यः । **ग्राहः**; नक्रः । **न द्रष्टव्य** इत्यनेनेदं स्मारितम्; यदाह शौनकः—

"आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥
यतस्ततो न ते ध्याने ध्यायिनामुपकारकाः ।
अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः ॥
तस्मादुद्भूतबोधाश्च ध्याने नैवोपकारकाः ।
नैसर्गिको न वै बोधस्तेषामेवान्यतो यतः ॥"

इति ।

"पूर्णं वर्षसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः ।
दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं चाभिमानिकाः ॥"

इत्यादि च ॥ १० ॥

**प्रभावली**

**घेति** । **विविधविषयाः** शब्दादयः, त एव द्वीपाः, तेषाम् **आरोहावरोहौ** संयोगवियोगौ, ताभ्यां **संस्थुला** चञ्चला स्थितिः येषां तैः । **प्राप्तभयैः**; प्रबलं दृष्ट्वा दुर्बलो बिभेति । समबलावन्योन्यस्मात् बिभीतः । कमठादिसदृशैः; दुर्बलहिंसकैरिति यावत् । **अबुद्धिभिः**; कृत्याकृत्यविवेकशून्यैः । **अमुकैः**; **बद्धैः** ब्रह्मरुद्रादिभिः । **आश्रितः त्रिगुणजलधिः समीहितसंयमैः** पुरुषसमाधिमिच्छद्भिरस्माभिः **न द्रष्टव्यः** । पुरुषसमाधौ न ध्यातव्य इति भावः । ब्रह्मविषयसंतन्यमानज्ञानस्य ध्यानत्वेन तदितरविषयज्ञाने सति ब्रह्मज्ञानविच्छेदान्न द्रष्टव्य इति भावः । समीहितसाधनैरिति वा पाठः ॥ १० ॥

**ठिरणिबद्धाहिं**—स्थिरनिबद्धाभिः । **वासणाहिं**-वासनाभिः । **आकिट्ठावि**-

[1] **एण्हिं—छ.**

(आर्यपुत्र, स्थिरनिबद्धाभिर्वासनाभिराकृष्टापि मम दृष्टिरिदानीं तव नियोगेन प्रत्यानीयते ।)

**व्यवसायः**—इतस्तर्हि शुद्धसृष्टिमये भगवतो विभूतिभागे देवेन देव्या च दत्तदृष्टिभ्यां भवितव्यम् । अत्र च,

**परव्यूहव्यूहान्तरपदविभक्तेषु बहुषु**
**त्रिधाम्नो रूपेषु स्थितिमनधिगम्यापि मनसः ।**
**अवैजात्यं बृन्दारकनरतिरश्चामभिनय-**
**त्यमुष्मिन्दृष्टिस्ते भवतु विभवव्यक्तिनिवहे ॥ ११ ॥**

प्रभाविलासः

**परेति** । **परः**; परव्योम्नि स्थितः । **व्यूहः**; तत्रैव संकर्षणादिः । **व्यूहान्तराणि**; केशवादिमूर्तयः । **अवैजात्यम्**; सादृश्यम् । **अभिनयति**; धृतवति । **दृष्टिर्भवतु**; अत्र,

"यादृशे वा मनः स्थैर्यं रूपे बध्नाति चक्रिणः ।
नृसिंहवामनादीनां तेष्वेकं परिचिन्तयेत् ॥"

इति वैष्णवधर्मोक्तिः स्मारिता ॥ ११ ॥

**प्रभावली**

आकृष्टापि । **मह**-मम । **दिट्ठी-दृष्टिः** । दाणिं-इदानीम् । तुह-तव । णिओएण-नियोगेन । **पच्चाणिज्जइ**-प्रत्यानीयते । **शुद्धसृष्टिमये**; शुद्धसृष्टिप्रचुरे । **अत्र**; शुद्धसृष्टौ च । परव्यूहव्यूहान्तराणां मनसा ध्यातुमशक्यत्वेऽपि विभवेषु दृष्टिर्दीयतामित्याह—**परेति** । परादिपदविभक्तेषु परादिपदवाच्येषु । यद्वा परः परवासुदेवः, व्यूहः व्यूहवासुदेवसंकर्षणप्रद्युम्नानिरुद्धाः; व्यूहान्तरं केशवादयः, पद्यत इति पदं स्वरूपम्, एवमादिस्वरूपतो विभक्तेषु **त्रिधाम्नः** भगवतः **रूपेषु मनसः** स्थितिर्न घटते, अपरिचितरूपत्वात् । **अनधिगम्यापि**; स्थित्यनधिगमेऽपीत्यर्थः । **बृन्दारकनरतिरश्चाम् अवैजात्यं** साजात्यम् **अभिनयति अमुष्मिन्** भगवतो **विभवव्यक्तिनिवहे** विभवावतारगणे **ते दृष्टिः भवतु** ॥११॥

राजा—देवि, उचितमेतदुत्प्रेक्षितं सेनापतिना। परिचितसजातीये ह्ययत्नलभ्यो भावबन्धः[1]।

व्यवसायः—देव, अवताररहस्यतत्त्ववेदिनामपुनर्जननेन परप्राप्तिरगीयत [2]स्वयमनघोपदेशेन परमपुरुषेण। अपि च,

[3]ईक्षणध्यानसंस्पर्शप्रमुखैः पोषयन्प्रजाः।
मत्स्यकूर्मविहंगादिविग्रहः प्रेक्ष्यते प्रभुः॥ १२॥

प्रभाविलासः

**अवतारेति**। अत्र "तस्य धीराः परिजानन्ति योनिम्" "यो जातमस्य महतो महिम्नवात्"

"जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन॥"

इत्यादिकमनुसंधेयम्। **ईक्षणेति**।

"ईक्षणध्यानसंस्पर्शैर्मत्स्यकूर्मविहंगमाः।
पुष्णन्ति स्वान्यपत्यानि तद्वत्पण्डितवृत्तयः॥"

इत्येतत् व्यञ्जितम्॥ १२॥

प्रभावली

**उत्प्रेक्षितम्**; विचारितम्। परिचितवस्तुसजातीये **भावबन्धः** मनसोऽवस्थानम्। अवताररहस्यवेदिनां देहावसाने मोक्षप्राप्तिरभिधीयत इत्याह—**अवतारेत्यादि**। ननु "कारणं तु ध्येयः" इति कारणावस्थस्यैव ध्येयत्वमुक्तम्; अवताराणां कार्यत्वात्कथं ध्येयत्वमित्यत आह—**अवतारेति**। मत्स्य-

[1] रागबन्धः—क.
[2] स्वेनैव परमपुरुषेण। अत्र च—क.
[3] अत्र,
"ईक्षणध्यानसंस्पर्शैर्मत्स्यकूर्मविहंगमाः।
पुष्यन्ति स्वान्यपत्यानि तथाहमपि पद्मज॥"
इति वचनमनुसंधेयम्।

अत्र च,

अनासीदद्दोषो जहदवधिषाड्गुण्यजलधि-
विहारस्वाच्छन्द्याद्विभुरिह दधानो विभवताम् ।
तिरश्चामप्येतैः कमठकिटिपाठीनपतग-
प्रकारैराकारैः परिबृढतमत्वं द्रढयति ॥ १३ ॥

प्रभाविलासः

**अनासीदद्दिति** । अनासीदन्तः अप्राप्ताः दोषाः यं सः । अनेन जन्मकृतदोषराहित्यं विवक्षितम्; "न सा कर्मनिमित्तजा" इत्यकर्मवश्यत्वश्रवणात । **जहदवधि**; अपरिच्छेद्यम । **षाड्गुण्यम्**; ज्ञानादिषट्कम् । तस्य जलधिः । **विहारेति**; "लीलया दधतः कलाः" इति स्मारितम् । **स्वाच्छन्द्यादिति**; "इच्छागृहीताभिमतोरुदेहः" इति स्मारितम् । **दधान इति**; "अजायमानो बहुधा विजायते" इति व्यञ्जितम् । **परिबृढतमत्वम्**; अप्राकृततमत्वम् । **द्रढयति**; अत्र

"न भूतसंघसंस्थानो देहोऽस्य परमात्मनः ।"
"न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवा ॥"

इत्यादि द्रष्टव्यम् । अत्र परिबृढतमत्वं न केवलमप्राकृतत्वादिना । वेदगिरिभूम्युद्धरणेनालौकिकचरितैश्चैश्वरत्वमेव प्रकटयतीति व्यज्यते ॥ १३ ॥

प्रभावली

कूर्मविहङ्गानां ध्येयत्वे युक्तिमाह—**ईक्षणेति** । **ईक्षणं** दर्शनं, **ध्यानं** मनसा चिन्तनं, **संस्पर्शनं** स्पर्शनम्; **प्रमुखशब्दात्** तत्तदवतारसिद्धाः कण्टकोद्धरणादयोऽसाधारणोपकाराः । विहंगादिरूपः **प्रेक्ष्यते** ध्यायते । **ईक्षणादिभिः** पोषकत्वादय उपपत्तयः ॥ १२ ॥

ननु मत्स्यादिशरीरे भगवतस्तत्तज्जातिकृतदोषप्रसक्तिरनिवार्येत्यत आह— **अनासीददिति**; अप्राप्तदोषः तत्तज्जातिदोषैरसंसृष्टः, स्वेच्छावतीर्णत्वात् । जहत् अवधिः यस्य तन्निरवधि । इदमुभयलिङ्गत्वं सर्वत्रानुवृत्तमिति भावः । **इह**; लीलाविभूतौ । लीलायाः स्वातन्त्र्यात्; स्वातन्त्र्यलीलयेत्यर्थः । विभवा-

राजा—अपारकारुण्यसंभवो ह्ययमशेषजनसंरक्षणाभिलाषिणः परमपुरुषस्यावतारगणः । तथाहि—

प्रणतदुरितप्राणाकृष्टिप्रयोगपटीयसः
प्रथितविविधप्रादुर्भावात्प्रभोरनुभावतः ।
जगति बलवन्मोहद्रोहाद्यमित्रशतावृते
जनिपथमहापान्थाः सर्वे जना जितकाशिनः ॥ १४ ॥

अपिच,

त्रातुं जगन्ति कृपया कल्पे कल्पे भवन्ति दिव्यानि ।
चरितानि चक्रपाणेः प्रवाहवृत्त्या परस्परप्राञ्चि[1] ॥ १५ ॥

प्रभाविलासः

**प्रणतेति** । प्रणतानां दुरितस्य प्राणाकृष्टिप्रयोगे पटीयसः समर्थान् । **अनुभावतः**; प्रभावात् । **जितकाशिनः**; जयेन प्रकाशन्ते ॥ १४ ॥

**त्रातुमिति** । **परस्परप्राञ्चि**; अन्योन्यं पश्चाद्भवन्त्यपि पुरोभवानि, अवतारप्रवाहस्यानादित्वात् ॥ १५ ॥

प्रभावली

वस्थां दधानः । **किटिः**; वराहः । **पाठीनः**; मत्स्यः । **पतगः**; पक्षी हंसः । प्रकारशब्दः प्रभृतिपरः; एवमाद्यैः । **तिरश्चामाकारैरपि** ईश्वरत्वं द्रढयति; तत्र तत्र ज्ञानोपदेशजगद्रक्षणादिकृत्यैरिति भावः ॥ १३ ॥

करुणामूलत्वादप्यवतारगण उपास्य इत्याह—**अपारेति** । **प्रणतेति** । **प्रणतानां दुरितस्य प्राणाकृष्टौ** प्राणापहाररूपे **प्रयोगे पटीयसः** समर्थस्य भगवतः **अनुभावतः प्रादुर्भावात्**; अनुभावः प्रभावः, तद्रूपात् प्रादुर्भावात् प्रादुर्भावबलात् **बलवद्भिः** । यद्वा बलवदित्यव्ययं सुष्ठुवाचकम् । **मोहक्रोधाद्यमित्रशतैः** आवृतेऽस्मिन् **जगति जनिपथमहापान्थाः** संसारमार्गे नित्यपान्थाः संसारिणः । **जितकाशिनः**; जितं जयः संसारजयः, तेन प्रकाशवन्तो भवन्ति ॥ १४ ॥

कृपामूलत्वं जगद्रक्षणहेतुत्वं च दर्शयत्यवताराणाम्—**अपिचेति** ।

[1] परस्परं प्राञ्चि—क.

व्यवसायः—(विस्मयावेशमभिनयन्)

**मयस्त्वष्टान्यो वा विपुलमहिमा विश्वसृडपि**
**स्वशक्त्येदं चित्रं किमपि न विधातुं कृतमुखः ।**
**अखण्डब्रह्माण्डप्रथमतमशिल्पी स भगवान्**
**स्वयं पद्माजानिर्व्यलिखदिह शिल्पं स्वविषयम् ॥ १६ ॥**

अत्र च जलधिमधिकरणीकृत्य दर्शितास्त्रयोऽवताराः । तत्र [1]तावदिममवलोकयतु देवो देवी च । इदं हि,

### प्रभाविलासः

**मय इति । विश्वसृट्**; चतुर्मुखः । **कृतमुखः**; कुशलः । **पद्माकान्त इति**; तस्या लीलार्थं व्यलिखदिति व्यज्यते ॥ १६ ॥

### प्रभावली

**चरितानि**; अवतारचरित्राणि । **प्रवाहवृत्त्या** प्रभावप्रकाशनेन परस्परं प्रचीनभूतानि । सर्वाण्यपि प्रभावप्रकाशकानीत्यर्थः ॥ १९ ॥

**विस्मयावेशम्**; विस्मयस्पर्शम् । शुद्धसृष्टिवर्गविषयमिदं चित्रं भगवद्विषयमिदं चित्रं भगवद्व्यतिरिक्तेन केनापि विलेखयितुं न शक्यते ; स्वविषयं चित्रं स्वयमेव व्यलिखदित्याह—**मय इति** । **मयः**; असुरशिल्पी । **त्वष्टा**; देवशिल्पी । **अन्यो वा**; अयं संसारशिल्पी वा । एतेभ्योऽधिकमहिमा ब्रह्मापि स्वसामर्थ्येन **इदं** शुद्धसृष्टिरूपं **चित्रं किमपि** किंचिदपि **विधातुं** लेखितुं स्रष्टुमित्यर्थः, **न कृतमुखः** समर्थः स्यात । अपि तु अखिलब्रह्माण्डस्य **प्रथमतमशिल्पी** ब्रह्मणः पूर्वं महदादिसृष्टिशिल्पी यः, **स भगवानेव स्वविषयं शिल्पं** चित्रं **स्वयमेव व्यलिखत्** । लेखनं सृष्टिः । शुद्धसृष्टिरीश्वरकर्तृका, न ब्रह्मादिसृष्टिविषयभूतेत्यर्थः ॥ १६ ॥

**अधिकरणीकृत्य**; आधारीकृत्य । **त्रयोऽवताराः**; मत्स्यकूर्मवराहाः ।

[1] तावदादिममवलोकयतु—ख.

**निर्मग्नश्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणै-**
**रन्तस्तन्वदिवारविन्दगहनान्यौदन्वतीनामपाम्[1] ।**
**निष्प्रत्यूहतरङ्गरिङ्गणमिथःप्रत्यूढपाथश्छटा-**
**डोलारोहसदोहलं भगवतो मात्स्यं वपुर्दृश्यते ॥ १७ ॥**

**राजा—देवि, पश्य पश्य त्वदक्षिसारूप्येणाभिव्यक्तं[2]** भगवतो रूपम् ।

**सुमतिः—(दृष्ट्वा स्वगतम्) माणुसस्स जोइणो माणुस-**

प्रभाविलासः

**निर्मग्नेति । निर्मग्नानां** प्रलयार्णवे महासुरगृहीतानां **श्रुतीनां जालस्य मार्गणदशयाम्** अन्वेषणदशायां **दत्तक्षणैः** दत्तावसरैः । "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः । **औदन्वतीनाम्**; प्रलयार्णवसंबन्धिनीनाम् । **अरविन्दगहनानि**; कमलषण्डानि । **निष्प्रत्यूहानाम्** अविच्छिन्नानां **तरङ्गाणां रिङ्गणेन** स्खलनेन **मिथःप्रत्यूढस्य** परस्परप्रतिघातवतः **पाथसः** जलस्य **छटा** समूहः, सैव **डोला**, तत्रा**रोहणे सदोहलं** साभिलाषम ॥ १७ ॥

प्रभावली

**इमम्**; मत्स्यावतारम । **इदम्**; मात्स्यं वपुः । **निर्मग्नेति । निर्मग्नस्य** जलधौ नितरां मग्नस्य **श्रुतिजालस्य** वीक्षणावस्थायां दत्तोत्सवैः आत्तकुतूहलैः **वीक्षणैः औदन्वतीनाम् अपाम् अन्तः** समुद्रमध्ये **अरविन्दगहनानि** सरोजकाननानि **तन्वदिव** सृजदिव । **निष्प्रत्यूहं** यथा तथा **तरङ्गाणां रिङ्गणं**, तेन **मिथः प्रत्यूढानां** परस्परप्रतिहतानां **पाथसां छटैव डोला**, **तदारोहे सदोहलं** सकौतुकं **मात्स्यं** मत्स्यसंबन्धि **वपुः** दिव्यं शरीरं **दृश्यते** चित्रे ॥ १७ ॥

**सारूप्यम्**; सादृश्यम् । **माणुसस्स**-मानुषस्य । **जोइणो**-योगिनः ।

[1] सर्वावतारेष्वपि भगवतः पुण्डरीकाक्षत्वानपायात् मत्स्यावतारेऽपि अरविन्दगहनानीत्युक्तिः । "मत्स्यः कमललोचनः" इति ह्युक्तम् ।

[2] त्वदक्षिसारूप्यमभिव्यनक्ति—ख.

सरिच्छे चित्तसंगो संपाअणिज्जो। (प्रकाशम्) अय्यउत्त, एदेण विअ तुए साअरणिमग्गा वेदा विअ मोहंधआरणिमग्गा जणा उद्धरिऊण रक्खिज्जंति। किं णाम परमपुरिसस्स एआरिसाइ रूवंतराइ वि होंति?

(मानुषस्य योगिनो मानुषसदृशे चित्तसङ्गः संपादनीयः। आर्यपुत्र, एतेनेव त्वया सागरनिमग्ना वेदा इव मोहान्धकारनिमग्ना जना उद्धृत्य रक्ष्यन्ते। किं नाम परमपुरुषस्यैतादृशानि रूपान्तराण्यपि भवन्ति?)

व्यवसायः—भवन्त्येव। तेष्वेतदेकमवलोक्यताम्—

**आखण्डलीयमजरामरमाधिराज्यं**
**त्रैयम्बकं सुभगशेखरमुत्तमाङ्गम्।**
**औदन्वतं प्रियतरं स्वगृहं[1] यतोऽभूत्**
**स्वाधार एष कमठो विधृताद्रिमन्थः॥ १८॥**

**प्रभाविलासः**

**आखण्डलीयमिति।** **औदन्वतम्**; रत्नाकरभवम्। **स्वगृहम्**;

**प्रभावली**

**माणुससरिच्छे**-मानुषसदृशे। **चित्तसंगो**-चित्तसङ्गः। **संपाअणिज्जो**-संपादनीयः। **एदेण विअ**-एतेनेव। **तुए**- त्वया। **साअरणिमग्गा विअ**-सागरनिमग्ना इव। **मोहंधआरणिमग्गा**-मोहान्धकारनिमग्नाः। **वेदा**-वेदाः। **उद्धरिऊण**-उद्धृत्य। **रक्खिज्जंति**-रक्ष्यन्ते। **किं णाम**-किं नाम। **परमपुरिसस्स**-परमपुरुषस्य। **एआरिसाइ**-एतादृशानि। **रूवंतराइ**-रूपान्तराणि। **वि**-अपि। **होंति**-भवन्ति। **एतदेकं**; कूर्मरूपम्। **आखण्डलीयमिति**। **यतः**; कूर्मात् हेतोः। **आखण्डलीयमाधिराज्यम्**; ऐन्द्रमाधिपत्यम्। **अजरामरम्**; आसीत्; अमृतोत्पादना-

[1] प्रियतरं स्वगृहम्—श्वशुरगृहमित्यपि स्वारसिकोऽर्थः

इयं चात्र तद्विषया शिल्पिनैव लिखिता श्लोकाक्षरावली—

अव्यासुर्भुवनत्रयीमनिभृतं कण्डूयनैरद्रिणा
निद्राणस्य परस्य कूर्मवपुषो निश्वासवातोर्मयः ।
यद्विक्षेपणसंस्कृतोदधिपयःप्रेङ्खोलपर्यङ्किका-
नित्यारोहणनिर्वृतो [1]विहरते देवः सहैव श्रिया ॥ १९ ॥

### प्रभाविलासः

स्वकलत्रम् । "दारेषु च गृहम्" इति कोशः । अत्र पादत्रयेण क्रमेणामृतचन्द्रश्रियामुत्पत्तिर्व्यज्यते ॥ १८ ॥

**अव्यासुरिति** । **अनिभृतम्**; प्रौढं यथा तथा । **अद्रिणा**; मन्दराचलेन । **कण्डूयनैर्निद्राणस्येति** लीलया धारणं व्यज्यते । **येषां** निश्वासानां **विक्षेपणेन** नोदनेन **संस्कृतस्य** चलितस्य **उदधेः** समुद्रस्य **पयांस्येव** **प्रेङ्खोलपर्यङ्किका** डोलापर्यङ्कः, तत्र **नित्यारोहणेन** **निर्वृतः** सुखितः ॥ १९ ॥

### प्रभावली

दिति भावः । **त्रैयम्बकं**; त्र्यम्बकसंबन्धि । **उत्तमाङ्गं**; शिरः । **सुभगशेखरम्**; शोभनशिरोभूषणयुक्तमभूत्; चन्द्रोत्पादनात् । **औदन्वतं** च **स्वगृहं** वासस्थानमतिशयितप्रियमासीत्; लक्ष्मीजननादिति भावः । स्वस्य स्वयमेव आधारः । धृतो मन्दराद्रिरेव मन्थः येन, स एष कमठो भाति ॥ १८ ॥

**शिल्पिना**; स्वेनैव लिखिता । **अव्यासुरिति** । **अनिभृतम्**; उद्धतं यथा तथा । **अद्रिणा**; मन्दराचलेन । जातैः **कण्डूयनैः**; कण्डूत्यपनयनैः । निद्राशीलस्य परमपुरुषस्य कूर्मरूपिणः **निश्वासवातोर्मयः** निश्वासवातपरंपराः **भुवनत्रयीम्** **अव्यासुः** रक्षन्तु । **येषां** वातोर्मीणां **विक्षेपणेन** नोदनेन **संस्कृतं** संततचलितम् **उदधिपय** एव **प्रेङ्खोलपर्यङ्किका** डोलायमानपर्यङ्कः, तस्यां **नित्यारोहणेन** सुखितः सन् स एव कूर्मरूपी **देवः** **श्रिया** **सह** रूपान्तरेण **विहरते** क्रीडति ॥ १९ ॥

[1] विजयते—क.

**राजा**—स्वकारणभूतमेनमप्रत्यभिजज्ञिवांसं[1] प्रजापतिं प्रति "पूर्वमेवाहमिहासम्" इति वादी सोऽयं पुरुषः।

**सुमतिः**—अय्यउत्त, लच्छीसअंवरणजोग्गतारिससोउमल्ल-णिहिणो[2] कहं एआरिसं कठिणत्तणं आसि ?

(आर्यपुत्र, लक्ष्मीस्वयंवरणयोग्यतादृशसौकुमार्यनिधेः कथमेतादृशं कठिनत्वमासीत् ?)

**राजा**—किं किं न कारयति कार्यगौरवम् ?

**प्रभाविलासः**

[3]**प्रत्यभिजज्ञिवांसम्**; प्रत्यभिज्ञानेन निश्चिन्वानम्। **सोऽयं पुरुष इति**; "तत्पुरुषस्य पुरुषत्वम्" इत्यारभ्य पुरुषसूक्तप्रतिपाद्यतया

**प्रभावली**

कूर्मावतारविषयमौपनिषदं वृत्तान्तं दर्शयति—**स्वकारणभूतमिति**। **स्व-कारणत्वेन**; स्वशब्देन प्रजापतिरुच्यते, स्वोत्पादकत्वेन भूतमेनं कूर्मरूपिणम् **अतथा** स्वजनितत्वेन प्रत्यभिज्ञातवन्तं **प्रजापतिम्**; "स तपोऽतप्यत। स तपस्तप्त्वा। शरीरमधूनुत। तस्य यन्मांसमासीत्। ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन्। ये नखाः। ते वैखानसाः। ये वालाः। ते वालखिल्याः। यो रसः। सोऽपाम्। अन्तरतः कूर्मं भूतं सर्पन्तम्। तमब्रवीत्। मम वै त्वङ्मांसा। समभूत्।" इति वदन्तं प्रजापतिं प्रतीत्यर्थः। **पूर्वमेवाहमिहासमिति वादी सोऽयं पुरुष इति**; "नेत्यब्रवीत्। पूर्वमेवाहमिहासमिति। तत्पुरुषस्य पुरुषत्वम्।" इति श्रुतिप्रतिपादितः सोऽयं कूर्मरूपी परमपुरुष इत्यर्थः। **लच्छीसअंवरणजोग्ग**-लक्ष्मीस्वयंवरणयोग्य। **तारिससोउमल्ल**-तादृशसौकुमार्य। **निहिणो**; निधेः। **कहं**-कथम्। **एआरिसं**-एतादृशम्। **कठिणत्तणं**-कठिनत्वम्।

[1] प्रत्यभिजज्ञिवांसं—ख. ग; अतथा प्रत्यभिजज्ञिवांसमिति प्रभावलीपाठः

[2] मंगलेक्कणिहिणो—क.

[3] एतत्पाठपक्षे स्वकारणभूतमिति स्वः कारणभूतः यस्येति बहुव्रीहिः। एनं स्वकारणकं प्रत्यभिजज्ञिवांसमित्यर्थो बोध्यः। अथवा प्रत्यभिजज्ञिवांसं प्रत्यभिजिज्ञासुमित्यर्थः

व्यवसायः—देव, अत्यद्भुतेयं भगवतः कूर्मरूपस्यामृतमथनारम्भभाविन्यवस्था । यथा—

**क्वचिद्वाहाधीशः क्वचिदमरदन्तावलपतिः**
**क्वचित्प्रालेयांशुः क्वचिदमृतविच्छर्दितमिति ।**
**अतिक्षोभे सिन्धोरयमनघनिद्रोद्धृतगिरि-[1]**
**विषादं लेखानां[2] विघटयति वैकुण्ठकमठः ॥ २० ॥**

**सुमतिः**—अय्यउत्त, तुमम्मि विअ इमम्मि वि अमिअलाहे भारो पडिट्ठिओ ।

(आर्यपुत्र, त्वयीवास्मिन्नप्यमृतलाभे भारः प्रतिष्ठितः ।)

**प्रभाविलासः**

प्रत्यभिज्ञायमानत्वं व्यज्यते । **क्वचिदिति** । **वाहाधीशः**; उच्चैःश्रवाः । **अमृतविच्छर्दितम्**; अमृतोद्गारः । अत्र विच्छर्दितमिति स्वर्गभोगनिमित्तामृतस्य हेयत्वलक्षणया शान्तरसो व्यज्यत इति न जुगुप्साश्लीलतादोषः । **लेखानाम्**; देवानाम् । वैकुण्ठ एव कमठः ॥ २० ॥

**प्रभावली**

**आसि**-आसीत् । अमृतमथनभाविन्यवस्था । अद्भुतत्वं स्पष्टयति—**यथेति** । **क्वचित्**; कुत्रापि । **वाहाधीशः**; उच्चैःश्रवा उत्पन्नः । **अमरदन्तावलपतिः**; ऐरावतः; **प्रालेयांशुः**; चन्द्रः । **अमृतरूपं विच्छर्दितम्**; अमृतरूपोद्गारः । अत्रोद्गारनिरूपणमन्यत्राप्युद्गाररूपत्वं द्योतयति । इत्येवंप्रकारेण **सिन्धोरतिक्षोभे**; उद्गारपर्यन्तक्षोभे जातेऽपि । **अयं वैकुण्ठकमठः** अयत्नेन लीलया **धृतमन्दरः** कण्डूयनसुखेन अक्षीणनिद्रः सन् **देवानां विषादम्** अमृतालाभजनितं **विघटयति** ॥ २० ॥

**तुमंमि विअ**-त्वयीव । **इमंमि वि**-अस्मिन्नपि । **अमिअलाहे**-अमृतलाभे ; एकत्र पीयूषलाभः । अन्यत्र मोक्षलाभः । तत्र यो भारः तत्र । पडिट्ठिओ-

[1] निद्रो धृतगिरिः—क. [2] देवानां—क.

राजा—प्रिये, मम खल्वीदृशभारवहने त्वमप्यर्धभागिनी ।

व्यवसायः—इतश्च दीयतां दृष्टिर्देवेन ;

आरादाकर एष कौस्तुभमणेर्वारी मरुद्दन्तिनः
क्रीडाशेखरशिल्पकृत्पुरभिदो गञ्जागृहं पाशिनः ।
प्राचीनाङ्कुरपालिका सुरतरोरालक्ष्यतामद्भुतः
स्वैराहारमहानसः सुमनसां शुद्धान्तशय्या हरेः ॥ २१ ॥

राजा—(सकौतुकमवलोक्य) देवि, दृश्यतां स एष त्रिगुणपरिणतिरूपोऽपि परमपुरुषपरिग्रहात्परिशुद्धतरः पारावारः । अपि च सुरभिसुरद्रुमचिन्तामणिप्रभृतिपात्रसात्करणजनितहर्षप्रकर्षस्ताण्डवोद्यत इवायमकूपारस्तरङ्गमण्डलेन ।

प्रभाविलासः

**अमृतम्**; मोक्षः, सुधा च । **आरादिति** । **आकरः**; खनिः । **वारी**; गजबन्धनम् । **गञ्जागृहम्**; मदिरागृहम् । **पाशिनः**; वरुणस्य । **प्राचीनाङ्कुरपालिका**; प्राक्तनबीजावापस्थाली । **महानसः**; पाकस्थानम्, अमृतोत्पत्तिस्थानत्वात् ॥ २१ ॥

प्रभावली

प्रतिष्ठितः । समुद्रमपि पश्येत्याह-**इतश्चेति** । **इतश्च**; अत्रापि समुद्रेऽपि । तं वर्णयति—**आरादिति** । **आरात्**; समीपे । एषः; समुद्रः आलक्ष्यताम् । कीदृशः? **कौस्तुभमणेः** **आकरः**; प्रादुर्भावस्थानम् । **मरुद्दन्तिनः**; ऐरावतस्य । **वारि**; गजबन्धनम् । **पुरभिदः**; रुद्रस्य लीलाशिरोभूषणकृत् । **पाशिनः**; वरुणस्य । **गञ्जागृहम्**; मदिरास्थानम् । **सुरतरोः** **प्राचीनाङ्कुरपालिका**; प्राक्तनाङ्कुरस्य पालिका, अङ्कुरार्पणपात्रम् । **सुमनसां** **स्वैराहारगृहम्**; महानस इत्यर्थः । **हरेः** **शुद्धान्तशय्या**; अवरोधशयनम् ॥ २१ ॥

त्रिगुणस्य प्रकृतेः परिणामरूपोऽपि । तमुत्प्रेक्ष्यते—**अयमकूपारः** **तरङ्गमण्डलेन ताण्डवोद्यत इव दृश्यते** । कुत इत्यत्राह—**सुरभीति** । **सुरभिः**;

सुमतिः—एव्वं एव्व इमं पेक्खंताणं वि हिअअं ।

(एवमेवेमं पश्यतामपि हृदयम् ।)

व्यवसायः—निशाम्यन्तामिह ;

इतरेतरसंनिकर्षवन्तः
क्रमनिम्नोन्नतयो महोर्मिभेदाः ।
परितो वितताः पयःपयोधेः
स्फटिकारोहणविभ्रमं वहन्ति ॥ २२ ॥

अपिच,

इयमत्र विश्वजननी समुत्थिता
कमला विकासिकमलोदरस्थिता ।
मुरमर्दनस्य भुजमध्यपीठिका-
मधिरुह्य रक्षति जगन्ति वीक्षणैः ॥ २३ ॥

प्रभाविलासः

**एवमेव**; ताण्डवोद्यतमित्यर्थः । **इतरेति** । पयःपयोधेरित्येकं पदम् । **स्फटिकारोहणविभ्रमम्**; स्फटिकसोपानविलासम् ॥ २२ ॥

**इयमिति** । **अत्र**; सागरे । **विकासिकमलोदरस्थिता** सती **समुत्थिता कमला** लक्ष्मीः ॥ २३ ॥

प्रभावली

कामधेनुः । प्रभृतिशब्देनामृतादयो गृह्यन्ते । एतेषां पात्रसात्कृत्या सत्पात्रदानेन **जनितहर्षप्रकर्षः** । हेतुगर्भमिदम् । प्रकर्षत्वादित्यर्थः । **एवमेवेमं प्रेक्षमाणानामपि**; ताण्डवोद्यतत्वमित्येतदत्राप्यनुषज्यते । **निशाम्यन्ताम्**; दृश्यन्ताम् । **इह**; समुद्रे । अन्योन्यं सामीप्यवन्तः क्रमेण निम्नोन्नतिमन्तः **पयःपयोधेः** क्षीरसमुद्रस्य **महोर्मयः** स्फटिकसोपानविलासं वहन्ति ॥ २२ ॥

अत्र लक्ष्मीरपि समुत्पन्नेत्याह—**इयमिति** । **समुत्थिता**; **विकासिकमलोदरस्थिता** सत्याविर्भूता ॥ २३ ॥

राजा—(विलोक्य सानन्दम्)

कल्याणानामविकलनिधिः कापि कारुण्यसीमा
नित्यामोदा निगमवचसां मौलिमन्दारमाला ।
संपद्दिव्या मधुविजयिनः संनिधत्तां सदा मे
सैषा देवी सकलभुवनप्रार्थनाकामधेनुः ॥ २४ ॥

(अञ्जलिं बद्ध्वा)

सेवे देवि त्रिदशमहिलामौलिमालार्चितं ते
सिद्धिक्षेत्रं शमितविपदां संपदां पादपद्मम् ।
यस्मिन्नीषन्नमितशिरसो यापयित्वा शरीरं
वर्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः ॥ २५ ॥

प्रभाविलासः

**कल्याणानामिति** । "मङ्गलानां च मङ्गलम्" इति सकलमङ्गलास्पदत्वेन प्रसिद्धस्यापि भगवतः "यस्य सा जनकात्मजा" इत्युक्तरीत्या तत्संबन्धवशादतिशयितमङ्गलत्वमित्यभिप्रेत्य **अविकलनिधिरित्युक्तम्** । प्रायेण कृपा मुक्त्यैश्वर्यहेतुः, व्याजसापेक्षा, अतिपरतन्त्रा च । इयं तूभयविभूतिहेतुत्वादिनोक्तविलक्षणेति **कापीत्युक्तम्** । **नित्यामोदा**; नित्यहर्षा नित्यपरिमला च, "आमोदो गन्धहर्षयोः" इत्युक्तत्वात् । **निगमेत्यादि**; यत्संबन्धेन वेदान्तानां तत्त्वविचिकित्सातरणमिति भावः । **दिव्येति**; लीलासंपद्वैलक्षण्यम् । कामधेनुः कतिपयप्रार्थितप्रदात्री ; इयं तु न तथेत्युक्तं **सकलेति**। तेन ब्रह्मादीनामीश्वरत्वं तत्कटाक्षविशेषायत्तमित्युक्तं भवति ॥२४॥

**सेवे देवीति** । **त्रिदशमहिलाः**; वाणीशर्वाणीन्द्राणीप्रभृतयः ।

प्रभावली

तस्याः संनिधिमाशास्ते—**कल्याणानामिति** । **अविकलनिधिः**; पूर्णमास्पदम् । **कारुण्यसीमा**; कारुण्यस्य परा काष्ठा, अस्या भगवतोऽप्यतिशयितकारुण्यत्वात् । उपनिषद्वचसां नित्यपरिमला कबरीमन्दारमाला । लक्ष्म्याः प्रतिपादनादेवोपनिषदां परिमलितत्वम् । मधुजयिनः ; दिव्या संपत् । **सैषा देवी मम सदा संनिधत्ताम्** ॥ २४ ॥

आदरातिशयात्पुनरपि तां सेवते—**सेवे इति** । त्रिदशानां महिलाः

(सुमतिं विलोक्य) देवि, इयं सा [1]निखिललोकजननी जलधिराजदुहिता जनार्दनवल्लभा देवी ; दुःसहापराधभीतानामपि यत्पुरस्कारिणामसौ भगवानधिगम्यतमो भवति । अत्र च,

**सैवाकृतिस्तव त एव गुणानुभावाः**
**स्यादेव सागरसुता लिखिता त्वमेव ।**
**शिञ्जानमञ्जुमणिनूपुरमेखलस्ते**
**संचार एष चतुरो यदि नान्तरायः ॥ २६ ॥**

### प्रभाविलासः

**यापयित्वा ;** विसृज्य ॥ २५ ॥

**सैवेति । अन्तरायः ;** भेदक इत्यर्थः । अत्र नूपुरसंचारं विना शोभनत्वप्रतीतेः रम्यतारूपविनोक्तिरलंकारः ।

"विना संबन्धि यत्किंचिद्यत्रान्यस्य परा भवेत् ।
रम्यतारम्यता वा स्यात्सा विनोक्तिरिति स्मृता ॥"

### प्रभावली

महिष्यः, तासां मौलिमालाभिरर्चितम् । **शमितविपदाम् ;** शमिता विपदो यासां तासां **संपदां सिद्धिक्षेत्रं ते पादपद्मम् । यस्मिन् ;** पादपद्मे । **ईषन्नमितशिरसः ;** प्रपन्ना इत्यर्थः । **शरीरं सुसुखं गमयित्वा देहान्ते वासुदेवस्य विततमसि पदे श्रीवैकुण्ठे धन्याः सन्तो वर्तिष्यन्ते** ॥ २९ ॥

एवमुपायत्वौपयिकाकारमुक्त्वा पुरुषकारत्वोपयुक्तान् गुणान् दर्शयति— **निखिललोकजननीत्यादिना । यत्पुरस्कारिणाम् ;** पुरुषकारत्वेन पुरस्कुर्वताम् अत्यन्तमधिगम्यो भवति । लिखितायाः श्रियस्तव च संचारमात्रे भेदः ; अन्यत्समानमिति सुमतिं प्रशंसति—**सैवेति । सैवाकृतिः ;** हे सुमते, तव लिखितायाः सागरसुताया या कृतिः, सैव । गुणाः श्यामत्वादयः, अनुभावः प्रभावश्च । तवापि त एव गुणानुभावाः । तस्मात् **लिखिता सागरसुता त्वमेव**

[1] सकललोकजननी जनार्दनवल्लभा—ख.

**सुमतिः**—अय्यउत्त, एदेण विअड्ढवअणेण अप्पाणं एव्व सिरिवल्लहसरिच्छं पआसेसि ।

(आर्यपुत्र, एतेन विदग्धवचनेनात्मानमेव श्रीवल्लभसदृशं प्रकाशयसि ।)

**व्यवसायः**—देवि, पठन्ति खल्विमं भवद्भ्यां प्रतिपादितमर्थं पौराणिकाः—

"देवतिर्यङ्मनुष्येषु पुंनामा भगवान्हरिः ।
स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम् ॥"

इति ।

**प्रभाविलासः**

इति लक्षणत् । यद्युपनिबन्धेनातिशयोक्त्यलंकारभेदश्च । उक्तं च वीरनारायणीये—

"उपमानस्य निर्देशो निगीर्णे प्रकृते तु यः ।
प्रकृतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ।
कार्यकारणयोर्यश्च व्युत्क्रमस्तुल्यकालता ।
या स्याद‌तिशयोक्तिः सा प्रोक्तैवं पञ्चधा बुधैः ॥"

इति ॥ २६ ॥

**प्रभावली**

**स्यात्**; सैवेत्यर्थः । किंचिद्भेदकं वदति—**शिञ्जानेति** । क्वणन्तौ मञ्जू मणिनूपुरश्च मणिमेखला च यस्मिन् सः । एष **चतुरः संचारः अन्तरायः भेदकः** यदि न, तदा त्वमेवेत्यर्थः ॥ २६ ॥

**देवतिर्यङ्मनुष्येषु** पुंवर्गविभूतिमान् **हरिः** । **लक्ष्मीस्तु** स्त्रीवर्गविभूतिमती । **अनयोः** हरिलक्ष्मीविभूत्योः **परम्** अतिरिक्तमत्र किमपि नास्तीत्यर्थः । ननु स्त्रीपुंसयोर्लक्ष्मीनारायणाभ्यामनन्यत्वमेव तद्वचनार्थः किं न स्यादित्याशङ्क्य

राजा—सेनापते, उभयोर्विभूतिभूतमुभयविधं जगदित्युक्तं भवति ।

व्यवसायः—एवमेव ।

राजा—

**साधारण्ये सत्यपि स्वेच्छयैव द्वेधा विश्वं यद्विभूतिर्व्यभाजि ।**
**चूडाभागे दीप्यमानौ श्रुतीनां दिव्यावेतौ दंपती मे दयेताम् ॥२७॥**

आस्तां तावदेतत् । अपरमप्यैश्वरं रूपमभिपश्येम ।

व्यवसायः—देव, प्रदर्शितमिदं लक्ष्मीधरं रूपम् । भूधरमपि रूपं प्रदर्शयामि ।

### प्रभाविलासः

**साधारण्य इति;** सर्वस्य जगतः शेषत्वस्य श्रीश्रीशसाधारणत्वेऽपि, "लक्ष्म्या मम च शेषं हि विभूतिरुभयात्मिका" इति स्मरणात् । न चाद्वितीयश्रुतिहानिः, अग्नाविष्णवोरिव द्व्यधिष्ठानैकशेषित्वात् । लक्ष्म्यास्त्वेकोनशेषित्वेन सर्वशेषित्वस्येश्वर एव पर्यवसानाच्च ॥ २७ ॥

### प्रभावली

तात्पर्यार्थमाह—**उभयोरिति** । **उभयोः**; लक्ष्मीनारायणयोः । **उभयविधम्**; स्त्रीपुंसप्रकारम् । परत्वनिषेधस्तद्विभूतिभूतत्वात्, न तु तदनन्यत्वादिति भावः । **साधारण्ये इति** । विश्वं विभूतिद्वयरूपं साधारण्ये सत्यपि शेषत्वेनोभयोर्दंपत्योः समानत्वेऽपि, **स्वेच्छयैव** उभयोः संकल्परूपेच्छया **यद्विभूतित्वेन** ययोर्विभूतित्वेन **द्वेधा** व्यभाजि-पुरुषाः सर्वे हरेर्विभूतयः, स्त्रियस्तु श्रिय इति। एवम्; उक्तार्थपरत्वेन श्रुतीनां **चूडाभागे** उपनिषदि प्रतिपाद्यमानौ तौ **दंपती** मां दयाविषयं कुरुताम् । "अधीगर्थ—" इत्यादिना कर्मणि षष्ठी ॥ २७ ॥

**प्रदर्शितमिति** । संगतिः सूच्यते । लक्ष्मीधररूपदर्शनानन्तरं भूधररूपं

प्रवर्धमानात्प्रलयाम्बुराशेराविर्भवन्नादिवराह एषः ।
दंष्ट्रानुषक्तां धरणीं दधानो जम्बालरेखामिव केलिलग्नाम् ॥ २८ ॥

राजा—अहो महत्तरमद्भुततरं च महीधरमिदं रूपम् ।

(अञ्जलिं बद्ध्वा सहर्षभक्तिरोमाञ्चगद्गदम्[1])

क्वापि कल्पान्तवेशन्ते खुरदघ्ने समुद्धृताम् ।
वहते मेदिनीमुस्तां महते पोत्रिणे नमः ॥ २९ ॥

अपिच,

नम इदमजहत्सपर्याय पर्यायनिर्यासित[2]-
भ्रमदमितपयोधिवेलाविलोलाय कोलाकृते ।
पृथुविकटविटङ्कनिष्कम्पविष्कम्भविश्वंभरा-
भरभरणधुरीणघोणापरीणाहकोणाय ते ॥ ३० ॥

प्रभाविलासः

**प्रवर्धमानादिति** । **आदिवराह इति**; "पूर्वमेवाहमिहासम्" इति श्रुत्यर्थो व्यञ्जितः ॥ २८ ॥

**क्वापीति** । **वेशन्तः**; पल्वलम्; समुद्रो लक्ष्यते । **खुरदघ्ने**; खुरप्रमाणे ॥ २९ ॥

**नम इति** । **अजहत्सपर्याय**; नित्यपूज्याय । **पर्यायेण निर्या-**

प्रभावली

द्रष्टव्यमिति तद्दर्शयति—**प्रवर्धमानादिति** । **अम्बुराशेः** सकाशात् **प्रादुर्भवन्** दंष्ट्राकोटिलग्नां **जम्बालरेखामिव** स्थितां दंष्ट्रायां संसक्तां **धरणिं** धारयन् यो बभूव स एष इत्यन्वयः ॥ २८ ॥

**खुरप्रमाणे** प्रलयोदधौ समुद्धृतां मेदिनीरूपां मुस्तां तृणकन्दविशेषं **वहते महते पोत्रिणे** महावराहाय नमः । अत्रोदधेः पल्वलत्वेन रूपणम् ॥ २९ ॥

पुनरपि तन्महत्वं वर्णयन् नमस्यति—**नम** इति । भो वराहरूप, ते इदं

[1] गद्गदं omitted—क. ग.   [2] पर्यासित—क.

अयं खलु—

गोपायेदनिशं[1] जगन्ति कुहनापोत्री पवित्रीकृत-
ब्रह्माण्डः प्रलयोर्मिघोषगुरुभिर्घोणारवैर्घुर्घुरैः ।
यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्कम्पनित्यस्थिति-
र्ब्रह्मस्तम्बमसौदसौ भगवती मुस्तेव विश्वंभरा ॥ ३१ ॥

प्रभाविलासः

**सितायां** व्युदस्तायाम्, अत एव **भ्रमन्त्याम् अमितायां पयोधेः वेलायाम्** अभिवृद्धौ **विलोलाय । कोलाकृते ;** वराहरूप । "कोलः पोत्री किरिः किटिः" इत्यमरः । **पृथुनि विकटे** विशाले च **विटङ्के** कपोतपालिकायां निष्कम्पो निश्चलो यो **विष्कम्भः** तिर्यग्दारुविशेषः, तेनैव स्थितायाः **विश्वंभरायाः भरणे धुरीणः** घोणापरिणाहस्य घ्राणविस्तारस्य कोण एकदेशो यस्य तस्मै । "विकटः पृथुले रम्ये विशालविकलार्थयोः" इत्यमरः ॥ ३० ॥

**गोपायेदिति घुर्घुरैः ;** घुर्घुरानुकारवद्भिः घोणारवैः पवित्रीकृतब्रह्माण्ड इत्यन्वयः । यद्दंष्ट्राङ्कुरस्य कोटावग्रे गाढघटनया दृढघटनेन

प्रभावली

नमोऽस्तु । कीदृशाय? अत्यजत्पूजाय, नित्यं पूज्यमानाय । **पर्यायेण निर्यासितो** व्युदस्तः, अत एव **भ्रमन् अमितश्च**, स चासावुदधिश्च, तस्य **वेलायाम्** अम्बुविकारे, विलोलाय । यथा वराहो गर्तजले पतित्वा तत्पर्युदस्यति, पुनश्च गर्तादुत्तिष्ठति, तथायं क्रीडतीति भावः । पृथुः ; विशालः । **विकटः** ; विस्तृतः । विटङ्कः कपोतपोलिका, तस्या निष्कम्पः निश्चलो यो विष्कम्भः तिर्यग्दारुविशेषः, सेव स्थिता या विश्वंभरा, तस्याः भरस्य धारणे धुरीणः समर्थः, यो घोणापरीणाहकोणः नासिकाविस्तारैकदेशः नासिकाप्रदेशः यस्य तस्मै ॥ ३० ॥

अस्माज्जगद्रक्षणं प्रार्थयते—**गोपायेदिति । अनघम् ;** अघानि दोषा यथा न भवन्ति तथा । जगन्ति गोपायेत् । **कुहनापोत्री ;** कपटवराहः; स्वेच्छावराह इत्यर्थः । प्रलयसमुद्रतरङ्गध्वनिवत् गुरुभिः **घुर्घुरैः** श्रोत्रपथपरुषैः नासिकाध्वनिभिः **पवित्रीकृतो ब्रह्माण्डो** येन सः । यस्य **दंष्ट्राङ्कुरकोटौ** गाढं यथा

[1] अनघमिति प्रभावलीपाठः

(भूदेवीमवलोक्य सप्रणामम्)

पूर्वं वराहवपुषा पुरुषोत्तमेन
प्रीतेन भोगिसदने समुदीक्षितायाः ।
पादाहताः प्रलयवारिधयस्तवास-
न्नुद्वाहमङ्गलविधेरुचिता मृदङ्गाः ॥ ३२ ॥

अपिच,

संभावयन्मधुरिपुः प्रणयानुरोधा-
द्वक्षःस्थलेन वरुणालयराजकन्याम् ।
विश्वंभरे बहुमुखप्रतिपन्नभोगः
शेषात्मना तु भवतीं शिरसा दधाति ॥ ३३ ॥

**प्रभाविलासः**

निष्कम्पा नित्या स्थितिर्यस्याः सा । जगत्कन्दतया स्तम्बतोक्तिः । "एकोऽपि च प्ररोहैस्तु बहुभिः स्तम्ब इष्यते" इति ह्युक्तम् । असौत्—षूङ् "प्राणिप्रसवे" इति धातुः ॥ ३१ ॥

**पूर्वमिति** । निरीक्षणस्यैव सुमुहूर्तकर्तव्यतया समुदीक्षिताया इत्युक्तम् ॥ ३२ ॥

**संभावयन्निति** । **बहुमुखाः;** अनेकविधाः प्रतिपन्ना भोगाः

**प्रभावली**

तथा घटनया संश्लेषेण **निष्कम्पा नित्या स्थितिर्यस्याः सा** । **भगवती** क्षमादिगुणपरिपूर्णा । **विश्वंभरा मुस्तेव** मुस्ताख्यतृणविशेषकन्द इव **ब्रह्मस्तम्बपर्यन्तं** जगत् **असौत्** सूतवती ॥ ३१ ॥

भूदेवीं स्तौति—**पूर्वमिति** । **भोगिसदने** पाताले **प्रीतेन वराहवपुषा समुदीक्षितायाः तव उद्वाहः** उद्धरणं विवाहश्च, तद्रूपमङ्गलकर्मणि महावराहस्य **पादैः आहताः** प्रलयसमुद्राः योग्याः **मृदङ्गाः** आसन् ॥ ३२ ॥

लक्ष्म्या अप्यस्या भगवत्संभावनीयत्वमाह—**संभावयन्निति** । **मधुरिपुः**

**सुमतिः**—जह एसो महावराहो पलअण्णवणिमग्गं भूमिं उद्धरइ, तह अय्यउत्तो वि संसारसाअरणिमग्गं[1] पुरिसं उद्धरिज्ज। अण्णं वि भणामि। दिढअरदाढग्गदारिअहिरण्णक्खवच्छअड[2]-कठिणकवाडसंपुडोट्ठिअघणसोणिअणईपवाहघणघणाअंतघोणंतरस्स जण्णवराहस्स[3] विअ अय्यउत्तस्स जण्णणेउणं दट्ठुं उक्कंठिअम्हि।

(यथैष महावराहः प्रलयार्णवनिमग्नां भूमिमुद्धरति, तथार्यपुत्रोऽपि संसारसागरनिमग्नं पुरुषमुद्धरेत्। अन्यदपि भणामि। दृढतरदंष्ट्राग्रदारितहिरण्याक्षवक्षस्तटकठिनकवाटसंपुटोत्थितघनशोणित - नदीप्रवाहघणघणायमानघोणान्तरस्य यज्ञवराहस्येवार्यपुत्रस्य जन्यनैपुणं द्रष्टुमुत्कण्ठितास्मि।)

**प्रभाविलासः**

स्रक्चन्दनादयो यस्य सः। अन्यत्र बहुषु मुखेषु प्रतिपन्ना भोगाः फणा येन सः। **शेषात्मनेति**;

"पातालानामधश्चास्ते विष्णोर्या तामसी तनुः।
शेषाख्या यद्गुणान्वक्तुं न शक्ता दैत्यदानवाः॥"

इति स्मारितम्॥ ३३॥

**प्रभावली**

**प्रणयानुसारात् वरुणालयराजकन्यां लक्ष्मीं वक्षःस्थलेन संभावयन्, भो विश्वंभरे, भवतीं तु शेषस्वरूपेण बहुभिः मुखैः प्रतिपन्नः** प्राप्तः **भोगः** शरीरं तथा सन्; बहुधा प्राप्तसुखानुभवः सन्निति ध्वन्यते। **शिरसा दधाति**; वहति। युवयोः प्रणयानुसारेण लक्ष्मीं वक्षःस्थले धत्ते। त्वां तु शिरसा वहति। अतस्त्वमधिकसंभावनीयेत्यर्थः॥ ३३॥

**जह**-यथा। **एसो**-एषः। **महावराहो**-महावराहः। **पलअण्णवणिमग्गं**-प्रलयार्णवनिमग्नाम्। **भूमिं उद्धरइ**-उद्धरति। **तह**-तथा। **अय्यउत्तो**-आर्यपुत्रः। **वि**-अपि। भवानित्यर्थः। **संसारसाअरणिमग्गं**-संसारसागरनिमग्नम्। **पुरिसं**-पुरुषम्। **उद्धरिज्ज**-उद्धरतु। **अण्णं वि**-अन्यदपि। **भणामि**-भणामि। **दिढ**

[1] साअरगअं—क. [2] वक्खत्थल—क. [3] सेव्व—क.

**व्यवसायः**—देवि, सेत्स्यति मङ्गल्यनिधेर्भवत्या मान्यं समीहितम् ।

**राजा**—सेनापते, अपरमप्येतादृशमभिपश्येमाद्भुतं रूपम् ।

**व्यवसायः**—अस्तु तर्ह्ययमसौ प्रह्लादपरिरक्षिता दिव्य-नरसिंहो देवो दिदृक्षितव्यः । तेन चासौ जिघांसितो हिरण्याक्षानु-जन्मा हिरण्यो नाम दानवेन्द्रः ।

**कल्पान्तपावकनिभैस्तपसां प्रपञ्चै-**
**रुष्णालुरस्य समुपेत्य किल प्रसन्नः ।**
**दत्ते वरेऽभिलषिते प्रतिपन्नभीतिः**
**सौवस्तिकत्वमगमत्स्वयमेव वेधाः ॥ ३४ ॥**

प्रभाविलासः

**जन्यम्**; युद्धम् । "युद्धमायोधनं जन्यम्" इत्यमरः । **कल्पान्तेति** । **उष्णालुः**; परितप्तः । **वरे दत्ते**; स्वेनेति शेषः । **सौवस्तिकः**; स्वस्तिवाचनिकः ॥ ३४ ॥

प्रभावली

**अरदाढग्गदारिअ**-दृढतरदंष्ट्राप्रदारित । **हिरण्णक्खवक्खत्थलकठिण**-हिरण्याक्ष-वक्षःस्थलकठिन। **कवाडसंपुडोट्ठिअ**-कवाटसंपुटोत्थित। **घणशोणिअणईपवाह**-घनशोणितनदीप्रवाह । **घणघणायंत**-घनघनायमान। **घोणंतरस्स**-घोणान्तरस्य । **जण्णवराहस्स विअ**-यज्ञवराहस्येव । **अय्यउत्तस्स**-आर्यपुत्रस्य भगवतः । **जण्णणेउणं**-जन्यनैपुणं । **दट्ठुं**-द्रष्टुम् । **उक्कंठिअम्हि**-उत्कण्ठितास्मि। **सेत्स्यति**; अचिरात्सिध्यति । **मङ्गलनिधेः मान्यं समीहितम्**; पूज्यमिष्टम् । **दिदृक्षितव्यः**-द्रष्टुमेषितव्यः । **जिघांसितः**; हन्तुमिष्टः । हिरण्यस्य दौष्ट्यं प्रकटयति—**कल्पान्तेति** । प्रलयाग्निसदृशैः अस्य तपोविस्तारैः **उष्णालुः** तस्य तैक्ष्ण्यमसह-मानः वेधाः **प्रसन्नः किल** । प्रसन्न इव ; किलेत्यपरमार्थे । **समुपेत्य** तदपेक्षिते **वरे दत्ते** तस्यौद्धत्यं दृष्ट्वा स्वयमेव तस्य सौवस्तिकत्वं प्रियवादित्वमगमत् ॥३४॥

अपिच,

दूरे हन्त गिरां दुरासदयशा दुर्वारगर्वानल
ज्वालालुण्ठितजम्भकण्टकबलारण्यो हिरण्योऽसुरः[1] ।
यस्यास्थानिकपादपीठविलुठत्कोटीरकोटीरवैः
स्वच्छन्दप्रसरं स्तुवन्ति चरितं सेवासु देवासुराः ॥ ३५ ॥

अनेन च परमपुरुषप्रशंसी कुमारः प्रह्लादः सोपालम्भमधिक्षिप्तः 'क नु ते पुरुषोत्तमः?' इति पृष्टः 'सर्वत्र' इति प्रत्यवादीत् ।

राजा—ततस्ततः ।

प्रभाविलासः

**दूर इति; लुण्ठितम्**; दग्धम् । **जम्भकण्टकः**; इन्द्रः । **कोटिः**; शतलक्षसंख्या । **स्वच्छन्दप्रसरम्**; स्वेच्छाप्रचारम् ॥ ३५ ॥

**क नु ते पुरुषोत्तम** इत्यनेन त्रोटकं नाम गर्भसंधेरष्टममङ्गमुक्तम् । "संरब्धवचनं यत्तु तत् त्रोटकमुदाहृतम्" इति लक्षणात् । यद्यपि सप्तमाङ्गमुक्त्वा तदनन्तरमष्टमाङ्गं निरूपणीयम्, तथापि "अङ्गानां च विपर्यासो रसानुगुणवर्णनम्" इति वचनानुसारेणैवं निरूपितमिति न

प्रभावली

**दूर इति** । **दुरासदयशाः**; अन्यैरलभ्यकीर्तिः । **दुर्वारः** यः **गर्वानलः**, तस्य **ज्वालाभिः लुण्ठितं** भग्नं **जम्भकण्टकबलारण्यम्** इन्द्रसेनारूपं वनं यस्य सः । **हिरण्यासुरः गिरां दूरे, हन्त**; वागगोचरदौष्ट्यः, हन्तेति खेदे । **आस्थानिके** आस्थानसंबन्धिनि **पादपीठे विलुठतां कोटीराणां** देवासुरसंबन्धिकिरीटानां **कोटीरवैः** अग्रप्रदेशध्वनिभिः **स्वच्छन्दप्रसरं** स्वच्छन्दगमनवत् **चरितं देवा असुराश्च स्तुवन्ति** । स वाचां दूर इत्यन्वयः ॥ ३९ ॥

**अनेन**; हिरण्यदानवेन । परमपुरुषमेव प्रशंसितुं शीलमस्यास्तीति सः, प्रह्लादनामा सनिन्दं परिभूतः 'क ते पुरुषोत्तमः' इति पृष्टः 'सर्वत्राप्यस्ति'

[1] हिरण्यासुरः—क.

व्यवसायः—

किमत्र हरिरित्यथ प्रकटितोपहासक्रमं
हिरण्यकरघट्टितात्सपदि जृम्भितः स्तम्भतः ।
पुरः स्फुरति संभ्रमस्फुटसटाच्छटाच्छोटन-
त्रुटद्घनघनध्वनिद्विगुणबृंहितः सिंहराट् ॥ ३६ ॥

अयं च,

विदारयति दारुणैर्बलभिदस्त्रभङ्गोद्भटां
सटाविधुतिसंभ्रमभ्रमितसप्तलोकस्थितिः ।
कुलाचलशिलातलद्रढिमडम्बरस्तम्भनीं
प्रभुर्द्विषदुरःस्थलीं नखरभृङ्गदम्भोलिभिः ॥ ३७ ॥

प्रभाविलासः

विरोधः । **किमत्रेति** । अत्र स्तम्भे किं हरिरस्तीति । **अथ**; उपक्रम एव । प्रकटितोपहासक्रमं यथा तथा **हिरण्यकरघट्टितात् स्तम्भतः** स्तम्भात् **जृम्भितः** प्रादुर्भूतः । संभ्रमेण स्फुटानां विकसितानां **सटानां** स्कन्धरोम्णां **छटानां** समूहानाम् **आच्छोटनेन** धूननेन **त्रुटतां** भिद्यमानानां **घनानां** मेघानां **घनेन** अधिकेन **ध्वनिना** द्विगुणं बृंहितं गर्जनं यस्य सः । अत्र टवर्गप्रचुरतया रूक्षवर्णानां वीररसानुगुण्यम् ॥ ३६ ॥

**विदारयतीति** । **बलभिदस्त्रम्**; वज्रायुधम् । **विधुतिः**; विधूननम् ॥ ३७ ॥

प्रभावली

इति प्रत्युक्तवान् । ततस्ततः; उच्यतामिति शेषः । **किमत्रेति** । **अथात्र** स्तम्भेऽपि किं **हरिरस्तीति प्रकटितः परिहासक्रमो** यस्मिंस्तद्यथा तथा, **हिरण्यकरेण घट्टितात्** ताडितात् **स्तम्भतः जृम्भितः** प्रादुर्भूतः सन् **पुरः स्फुरति** । कथं जृम्भित इत्यत्राह—**संभ्रमेति** । **स्फुटाः** विकसिताः **सटाः** स्कन्धरोमाणि, तासां **छटा** समूहः, तस्याः **छोटनं** धूननं, तेन **त्रुटतां** भज्यमानानां घनानां घनध्वनिभिः **द्विगुणबृंहितः** द्विगुणितं बृंहितं गर्जनं यस्य सः, सिंहराजः जृम्भितः स्फुरति ॥ ३६ ॥

अयं च हिरण्यवक्षो विदारयतीत्याह—**विदारयतीति** । **सटानां** विधूनन-संभ्रमेण **भ्रमिता** भ्रान्तिं प्रापिता **सप्तलोकानां स्थितिर्येन** सः । अयं **प्रभुः बलभिदः**

राजा—(सविस्मयम्) अहो महानयमद्भुतनरसिंहः ।

[1]दम्भोलिश्रेणिदीव्यत्खरनखरमुखक्षुण्णदैतेयवक्षो-
निष्ठ्यूतासृक्स्रवन्तीभरितदशदिशादर्शितापूर्वसंध्यः ।
स्वामिध्वंसप्रकुप्यत्सुररिपुपृतनास्तोमरूपं स एष
ब्रह्मस्तम्बैकचन्द्रो बहुभिरिह करैरन्धकारं निरुन्धे ॥ ३८ ॥

तदहमिह महामोहनिरासाय दुरितभङ्गमाशासे[2] ।

विकस्वरनखस्वरुक्षतहिरण्यवक्षःस्थली-
निरर्गलविनिर्गलद्रुधिरसिन्धुसंध्यायिताः ।
हरन्तु मदघं रमासहचरस्य लीलाहरे-
रहंप्रथमिकामिथःप्रकटिताहवा बाहवः ॥ ३९ ॥

प्रभाविलासः

**दम्भोलीति** । **खरनखराः**; कठिननखाः । **निष्ठ्यूतम्**; निर्गतम् । अतिधवलतया चन्द्रत्वरूपणम् ॥ ३८ ॥

**विकस्वरेति** । **स्वरुः**; वज्रम् । **आहवः**; युद्धम् ॥ ३९ ॥

प्रभावली

अस्त्राणि वज्रादीनि, तेषां भञ्जनेन उद्भटाम् । कुलाचलस्य यत् शिलातलं, तस्य यो द्रढिमा दार्ढ्यं, तस्य यत् डम्बरं गर्जनं, तस्य स्तम्भनीं निवर्तयित्रीम्; ततोऽप्यतिकठिनामित्यर्थः । द्विषतः हिरण्याक्षस्य वक्षःस्थलीम् ॥ ३७ ॥

नृसिंहं चन्द्रत्वेन रूपयति—दम्भोलीति । ब्रह्मस्तम्बं जगत्, तस्य एकचन्द्रः मुख्यचन्द्रः; धवलत्वाच्चन्द्रत्वरूपणम् । दम्भोलिश्रेणिवत् दीव्यतां विलसतां खरनखराणां कठिननखानां मुखैः अग्रैः क्षुण्णात् दारितात् दैतेयवक्षसः सकाशात् निःसृताभिः शोणितनदीभिः पूर्णाः याः दश दिशाः, ताभिः दर्शिता अपूर्वा पूर्वमाविद्यमाना संध्या येन । चन्द्रोऽपि पश्चिमसंध्यां दर्शयति । स्वामिनः हिरण्यस्य ध्वंसेन प्रकुप्यतां सुररिपूणां या पृतना, तत्समूहरूपमन्धकारम् , इह बहुभिः करैः चन्द्रकिरणैः, तत्स्थानीयैः सहस्रहस्तैः रुन्धे निवर्तयति ॥ ३८ ॥

दुरितभङ्गं विघ्नाभावं प्रार्थये । विकस्वरेति । विकस्वराः विकसन

[1] घ adds the following stanza before this.

"स्थाणुसंततिकूटस्थां पितामहपितामहीम् ।
नमामि कांचन स्थूणां नरसिंहेन पुत्रिणीम् ॥"

[2] माशंसे—क. ख.

[1]व्यवसायः—देव, इयं पुनरस्मदभिमतमर्थमभिमुखयन्ती स्वयमेव भगवता भावनामात्रनिर्मितेव सुभगविन्यासशालिनी निखिलभयनिर्मूलनी श्लोकाक्षरपरंपरा ; यथा—

'प्रह्लादह्लादनानि प्रणतसुरगणप्राणनप्रीणनानि[2]
प्रत्यूढस्थेमभीमप्रलयघनघटाघोषणाडम्बराणि ।
क्षुभ्यत्सप्ताम्बुधीनि क्षुरपरुषनखक्रीडितक्षुण्णशत्रो-
रस्मद्भीतिव्यपोहं विदधतु नृहरेरट्टहासाद्भुतानि' ॥ ४० ॥

प्रभाविलासः

**भावना** ; संकल्पः । **विन्यासः** ; रचनाविशेषः । **प्रह्लादेति** । **आह्लादनानीति** ; "तद्यच्छ मन्युमसुरश्च हतस्त्वयाद्य मोदेत साधुरपि वृश्चिकसर्पहत्या" इति प्रह्लादवचनं स्मारितम् । **प्राणनप्रीणनानि** ; जीवनरक्षकाणि । **प्रत्यूढः** प्राप्तः स्थेमा स्थितिर्यस्य, स चासौ भीमप्रलयघनघटाघोषणाडम्बरः येषां तानि । "निःस्थेमानो दशाननकीर्तयः" इतिवत् प्रयोगसाधुत्वं द्रष्टव्यम् । यद्यपि "करिणां घटना घटा" इति घटा-

प्रभावली

शीलाः ये **नखा** एव **स्वरवः** वज्राः, तैः विदारितायाः **हिरण्यवक्षःस्थल्याः** सकाशात् **निरर्गलं** यथा तथा **विनिर्गलन्ती** या **रुधिरनदी**, तया संध्यावदाचरिताः । **हरेः** ; क्रीडानृसिंहस्य । अहंप्रथमिकया अहंपूर्विकया वृत्त्या मिथः **प्रकटिताहवाः** **बाहवः** सहस्रं मदघं पुरुषमोक्षणविघ्नरूपं दुरितं हरन्तु ॥ ३९ ॥

**अभिमुखयन्ती** ; सूचयन्ती । **भावनामात्रम्** ; संकल्पमात्रम् । शोभनरचनाशालिनी श्लोकस्य वर्णपरंपरा । **प्रह्लादेति** । प्रह्लादस्य संतोषकराणि ।

[1] व्यवसायः—देवि, पश्य पश्य ;
स्थाणुसंततिकूटस्थां पितामहपितामहीम् ।
नमामि कांचन स्थूणां नरसिंहेन पुत्रिणीम् ॥ इयं पुनः etc—ग.

[2] प्राणितप्रीणनानि—ग.

राजा—(सहर्षमवलोकयति)

व्यवसायः—देव, इयं च काचित् । यथा—

'प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजै-
रव्यात् त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः ।
यत्प्रादुर्भवनादवन्ध्यजठरा याद्दच्छिकाद्वेधसां
या काचित्सहसा महासुरगृहस्थूणा[1] पितामह्यभूत्' ॥ ४१ ॥

प्रभाविलासः

शब्दस्य गजसमूहवाचित्वं, तथाप्यत्रौचित्यात् समूहमात्रपरत्वं ज्ञेयम् । अत्राट्टहासाद्भुतानां प्रह्लादहर्षादिहेतुत्वोक्त्या कारकहेतुर्नामालंकारः,

"क्रियायाः कारकं हेतुर्मुख्यो गौण इति द्विधा ।
मुख्यहेतुर्द्विधा तत्र कारकज्ञापकक्रमात् ॥"

इति लक्षणात् ॥ ४० ॥

**प्रत्यादिष्टेति । प्रत्यादिष्टः** प्रत्याख्यातः **पुरातनप्रहरणानां** शङ्ख-चक्रादीनां ग्रामो यस्य सः । **अवन्ध्यजठरा;** सपुत्रा । **महासुरगृहे;**

प्रभावली

प्राणनं दत्वा प्रीणनानि प्रियंकराणि । प्रत्यूढस्थेमानः निरस्तस्थैर्याः भयंकर-प्रलयमेघसमूहगर्जितानामाडम्बराः यैस्तानि । क्षुरम्; शस्त्रम्, तद्वत् परुषाणां नखानां क्रीडितेन चूर्णीकृतशत्रोः । नृहरेः अट्टहासानाम् अद्भुतानि अस्माकं महामोहात् प्राप्ताया भीतेः व्यपोहं विदधतु ॥ ४० ॥

**काचित्;** श्लोकपरंपरेति शेषः । **प्रत्यादिष्टेति । क्षणमात्रं पाणिजैः** नखैः **प्रत्यादिष्टः** तिरस्कृतः **पुरातनानि** यानि **प्रहरणानि** तेषां ग्रामः समूहः

[1] प्रभाविलासरीत्या 'महासुरगृहे स्थूणा' इति पाठः प्रतिभाति, तदा तु "स्थूणोर्णे नपुंसके च । गृहशशाभ्यां क्लीबे" इति लिङ्गानुशासनविरोधशङ्काया अप्यनवकाशः । अन्यथा "लिङ्गमशिष्यं लोकाश्रयत्वात्" इति भगवत्पतञ्जलिवचनेन प्रकारान्तरेण वा महासुरगृहस्थूणेति क्लीबत्वमगत्योपपादनीयं स्यात् ।

**सुमतिः**—अय्यउत्त, एसो हिरण्णो विअ मोहमहासुरो पुरिससीहेण तुए पसमणिज्जो ।

(आर्यपुत्र, एष हिरण्य इव महामोहासुरः पुरुषसिंहेन त्वया प्रशमनीयः ।)

**व्यवसायः**—देव, कालोपपन्नमिह कर्तव्यं स्मारयति देवी। तदिह नातीवेदानीमत्र निहितदृष्टिभ्यां भवितव्यम्[1] । तथापि संक्षेपेण तु किंचिद्दर्शयामि । अयमिहासुरापहृतत्रैलोक्यप्रत्यानयनेन देवगणतोषणाय प्रवृत्तो दिव्यवामनः[2] । अमी च—

(इत्यर्धोक्ते)

**राजा**—तिष्ठ तिष्ठ सेनापते, यावदेतस्मादपि दिव्यवामनात् किमपि मङ्गलमाशासे । (सहर्षम् )

**प्रभाविलासः**

हिरण्यगृहे । **स्थूणा** ; स्तम्भः । अनन्ताण्डस्थितचतुर्मुखापेक्षया वेधसामिति बहुवचनोक्तिः ॥ ४१ ॥

**प्रभावली**

येन सः । तत्स्थाने नखराण्येव स्वीकृतवानित्यर्थः । **अकुण्ठमहिमा** ; अप्रतिहतपराक्रमः । **वैकुण्ठाख्यः कण्ठीरवः** सिंहः । **यस्य यादृच्छिकात् प्रादुर्भावात् अवन्ध्यजठरा** सफलोदरा **या काचित् महासुरग्रहस्य स्थूणा** स्तम्भः **सहसा** अतर्कितं यथा तथा **वेधसां** पितामहसमूहस्य पितामह्यभूत् ॥ ४१ ॥

एष हिरण्य इव महामोहासुरः पुरुषसिंहेन त्वया प्रशमनीयः । **कालोपपन्नम्** ; कालोचितम् । युवाभ्यामिति शेषः । **इतिर्वाक्यान्ते** । **प्रत्यानयनम्** ; प्रत्याहरणम् । **अर्धोक्ते** ; अमी च भृगुरघुयदुवंशसंभवास्त्रयो रामा इति वाक्ये

[1] भवितव्यमिति—इति प्रभवलीपाठः [2] मानवः—क.

**व्रीडाविद्धवदान्यदानवयशोनासीरधाटीभट-**
**स्त्रैयक्षं मकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः ।**
**यत्प्रस्तावसमुच्छ्रितध्वजपटीवृत्तान्तसिद्धान्तिभिः**
**स्रोतोभिः सुरसिन्धुरष्टसु दिशासौधेषु दोधूयते ॥ ४२ ॥**

**सुमतिः**—देव, अस्स विअ तुम्ह वि पडिहअपडिपक्खस्स भाईरइव्व जसप्पवाहो पडिदिसं संवड्ढइ ।

(देव, अस्येव तवापि प्रतिहतप्रतिपक्षस्य भागीरथीव यशः-प्रवाहः प्रतिदिशं संवर्धते ।)

**प्रभाविलासः**

**व्रीडेति** । महावदान्यस्य त्रिपदप्रदानमनुचितमिति व्रीडाविद्धेत्युक्तिः । **त्रैयक्षम्**; शिवसंबन्धि । **पुनन्निति**; "यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवः शिवोऽभूत्" इति भागवतवचनं स्मारितम् । **विक्रमः**; पादेनोत्क्रमणम् । "विक्रमः क्रमणे शौर्ये" इति निघण्टुः । यस्य **विक्रमस्य प्रस्तावे** प्रारम्भे **समुच्छ्रितध्वजपटीवृत्तान्तस्य सिद्धान्तिभिः** स्थापकैः **स्रोतोभिः** सीतालकनन्दाप्रभृतिभिः प्रवाहैः । **दोधूयते**; "धूञ् कम्पने" इति धातोर्यङि रूपम् ॥ ४२ ॥

**प्रभावली**

विवक्षिते । **एतस्मात्**; दिव्यवामनात् । **व्रीडेति** । अल्पं याचितवानिति व्रीडया विद्धः । **वदान्य** इति हेतुगर्भविशेषणम्, वदान्यत्वादित्यर्थः । स चासौ **दानवः** बलिः, तस्य **यशसः नासीरधाट्यां** वर्तमानो **भटः** । यशःप्रसरणात् पूर्वमेव त्रैलोक्यमाक्रान्तवानित्यर्थः । **त्रैयक्षम्**; रुद्रसंबन्धि । **पुनन्**; परिशुद्धं कुर्वन्, गङ्गास्रोतसेति भावः । त्रिविक्रमपदसंबन्धी **विक्रमः** पादविक्षेपः **नः अवतु** । **यस्य** विक्रमस्य **प्रस्तावे** प्रारम्भे समुच्छ्रितानां **ध्वजपटीनां वृत्तान्तस्य सिद्धान्तिभिः** प्रतिष्ठापकैः; ध्वजपटसदृशैरित्यर्थः; **स्रोतोभिः सुरसिन्धुः अष्टसु दिगन्तहर्म्येषु दोधूयते** भृशं कम्पते ॥ ४२ ॥

**व्यवसायः**—अमी च, भृगुरघुयदुवंशसंभवाः प्रबलतरदुष्टनिरसनेन परित्रातलोक[1]त्रयास्त्रयो रामाः। एष पुनरेतेषु बहुमुखपुण्यजनबाधनोऽपि[2] परित्रातपुण्यजनो मध्यमो रामः। अनेन किल कोसलसुताकुमारभावकञ्चुकितकारणाकारेण, कौमारकेलिगोपायितकौशिकाध्वरेण, रणाध्वरधुर्यभव्यदिव्यास्त्रशालिना, प्रणतजनविमतविमथनदुर्ललितदोर्ललितेन, मैथिलनगरसुलोचनालोचनचकोरचन्द्रेण,

**प्रभाविलासः**

जामदग्न्यरामस्य पूर्वमेव प्रस्तुततया तमुपेक्ष्य मध्यमराममाह—**एष इति। बहुमुखपुण्यजनः**; दशमुखः। **परित्रातपुण्यजनः**; रक्षितसाधुजनः, "निवासवृक्षः साधूनाम्" इत्युक्तत्वात्। अनेनेत्यारभ्य रामायणषट्काण्डचर्यं संक्षेपेण दर्शयति। कञ्चुकितकारणाकारेण; आच्छादितपरतत्त्वस्वरूपेण।

"स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः।
अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः॥"

इति ह्युक्तम्। **गोपायितम्**; रक्षितम्। **कौशिकः**; विश्वामित्रः। कौशिकादस्त्रप्राप्तिं सूचयति—**रणेति**। **विमताः**; सुबाहुमारीचप्रभृतयः।

**प्रभावली**

**एतेषु**; रामेषु। **बहुमुखो** दशमुखः यः **पुण्यजनः** राक्षसः रावणः, **तद्बाधनः**। अनेकविधा ये पुण्यजनाः सुकृतिन इत्यपि भासते। तत्र विरोधद्योतकोऽपिशब्दः। **परित्राताः सुकृतिजनाः** विभीषणादयः येन। **मध्यमो रामः**। अस्य चरित्रं सर्वमापादचूडं संक्षेपतोऽनुसंधत्ते—**अनेनेति**। **कुमारभावेन** पिहितः **कारणाकारः** जगत्कारणत्वरूपं परत्वं येन। **कौमारकेल्या गोपायितः**। **रणः** भावी खरादिसंबन्धी, स एव **अध्वरः**, तत्र **धुर्याणि** निर्वाहकाणि **भव्यानि** अनुकूलानि। **विमताः**; विरोधिनः, तेषां **विमथने**

[1] त्रय omitted—क.   [2] बाधनेनापि—क.

दिनकरकुलकमलदिवाकरेण, खण्डपरशुकोदण्डप्रकाण्डखण्डनशौण्ड-भुजदण्डेन, भृगुपतिसुगतिविहतिकरनतपरुडिषुपरिघेण, पितृवचन-परिपालनप्रतिज्ञावज्ञातयौवराज्येन, दण्डकतपोवनजङ्गमपारिजातेन, खरतरखरतरुषण्डखण्डनचण्डपवनेन, द्विसप्तरक्षःसहस्रनलवनविलोलन-महाकलभेन, महितमहामृथदर्शनमुदितमैथिलीदृढपरिरम्भणविरोपित-विकटवीरव्रणेन, मारीचमायामृगचर्मपरिकर्मितनिर्भरदर्भास्तरणेन, [1]गृध्रराजदेहदिधक्षालक्षितभक्तजनदाक्षिण्येन, अवन्ध्यमहिममुनि-

प्रभाविलासः

**सुलोचनाः**; स्त्रियः । **खण्डपरशुः**; रुद्रः । **कोदण्डः**; धनुः । **शौण्डः**; समर्थः । **भृगुपतिः**; परशुरामः । **खरतरः**; कठिनतरः । **खरः**; राक्षसः । **नलवनम्**; तृणसमूहः । **कलभः**; गजशावः ।

"तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् ।
बभूव हृष्टा वैदेही भर्तारं परिषस्वजे ॥"

इति वचनमनुसंधायाह—**महितेति** । **दिधक्षा**; ब्रह्ममेधसंस्कारः । **लक्षित-**

प्रभावली

उद्धतः । **मैथिलः**; जनकः । **लोचनान्येव चकोरपक्षिणः** । **खण्डपरशुः** रुद्रः, तस्य कोदण्डम् । **शौण्डः**; समर्थः । **भृगुपतेः सुगतिः**; सुकृतफलम् । **नतप-रुट्**; नतपर्वकः । **परिघः**; अर्गला । **अवज्ञातम्**; अनादृतम् । **जङ्गमपारि-जातः**; चरः कल्पवृक्षः । **खर एव तरुः** । **द्विसप्त**; चतुर्दश । **नलवनम्**; नलाख्यतृणानां वनम् । **कलभः**; त्रिंशद्वर्षगजः । **मृथम्**; युद्धम् । **परिरम्भणम्**; आश्लेषः । **विरोपितम्**; चिकित्सितम् । **विकटम्**; प्रकटं **वीरव्रणम्** । **परि-कर्मितम्**; अलंकृतम् । **निर्भरम्**; परिपूर्णम् । **दिधक्षा**; दहनेच्छा, तया लक्षितं प्रकाशितं दाक्षिण्यम् । **अवन्ध्यः** सफलः । **मुनयः**; शबरीगुरवः ।

[1] देह omitted—क.

जनभजनमुषितकलुषशबरीमोक्षसाक्षिभूतेन, प्रभञ्जनतनय[1]भवुकभाषितरञ्जितहृदयेन,[2] तरणिसुतशरणागतिपरतन्त्रितस्वातन्त्र्येण, विपुलभुजमूलनिबिडनिपीडितरावणरणरणकजनक[3]चतुरुदधिविहरणचतुरकपिपतिहृदयविशालशिलातलदारणदारुणशिलीमुखेन, विमतसहोदररक्षःपरिग्रहसंरम्भविजृम्भितसर्वेश्वरभावेन, सकृत्प्रपन्नसंरक्षणदीक्षितेन,

प्रभाविलासः

**म्**; दर्शितम्। **मुनिभजनम्**; यतिशुश्रुषा। **भवुकभाषितानि**; अपशब्दादिदोषरहितानि वचांसि। तदुक्तम्—

"बहु व्याहरतानेन न किंचिदपशब्दितम्।
तस्माद्व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्॥"

इत्यादि। **तरणिसुतः**; सुग्रीवः। वालिनं विशिनष्टि—**विपुलेति**। **कपिपतिः**; वाली। **दारणम्**; भेदनम्। **विमतसहोदररक्षःपदैः**

"रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः।
तस्याहमनुजो भ्राता विभीषण इति श्रुतः॥"

इति स्मारितम्। **जृम्भितसर्वेश्वरभावेनेति**;

"पिशाचान् दानवान् यक्षान् ये चान्ये भुवि राक्षसाः।
अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर॥"

प्रभावली

**प्रभञ्जनः**; वायुः। **भवुकम्**; कुशलम्। **रञ्जितम्**; वशीकृतम्। **तरणिसुतः**; सुग्रीवः। **परतन्त्रितम्**; वशीकृतम। **भुजमूलम्**; कक्षः। **रणरणकम्**; भयम्। **कपिपतिः**; वाली। **विमतः**; शत्रुः रावणः। **सहोदरः**; विभीषणः। **परिग्रहे** यः संरम्भः तेन प्रकाशिता "सकृदेव प्रपन्नाय" इति श्लोकार्थनिष्ठा।

[1] भावुक—क. [2] रञ्जितेन—ख. [3] जनककपिपति—क. ख.

कपिकुलकरतलतुलितगिरिनिकरसाधितसेतुपथसीम[1]सीमन्तितसमुद्रेण, लङ्कावरोधवेपथुलास्यलीलोपदेशदेशिकेन, विशङ्कटविशिखविताडनविघटितमकुटविह्वलविश्रवस्तनयविश्रमसमयविश्राणनविख्यातविक्रमेण, कुम्भकर्णकुलगिरिदलनदम्भोलिना, मघवजिदभिहननकृदनुजसाक्षिकराक्षसद्वन्द्वयुद्धेन, निखिलजगदनवरतभयजनकदशवदनलपनदशकलवनजनितकदनरजनिचरयुवतिजनविलपनवचनविख्यापितपारम्येण,

### प्रभाविलासः

इति श्रीरामोक्तिः स्मारिता । **सकृत्प्रपन्नेति**; "सकृदेव प्रपन्नाय" इति विवृतम् । **सर्वजनेति**; "सर्वभूतेभ्यः" इति पदं व्याख्यातम् । **दीक्षितेनेति**; "व्रतं मम" इति व्याख्यातम् । **साधितः**; रचितः । अत्र भयानकशृङ्गारयोः समावेशः । **अवरोधः**; अन्तःपुरजनः । **विश्रवस्तनयस्य**; रावणस्य । **विश्रमसमयविश्राणनम्**; विश्रमकालवितरणम् । तेन **विख्यातविक्रमेण**; प्रसिद्धपराक्रमेण । अनेन

"गच्छानुजानामि रणार्दितस्त्वं प्रविश्य रात्रिंचरराज लङ्काम् ।
आश्वास्य निर्याहि रथी च धन्वी तदा बलं द्रक्ष्यसि मे रथस्थः ॥"

इति स्मारितम् । **मघवजित्**; इन्द्रजित् । **लपनदशकलवनेति** स्तबकवृन्तच्छेदनसाम्यं व्यज्यते । **रजनिचरयुवतिः**; मन्दोदरी । तया हि स्वपतिहननेन वज्रहस्तादिषु सुबहुवारं निर्जितेषु सामर्थ्याभावमनुमाय परिशेषप्रमाणेन नारायणावतार एव श्रीराम इति परतत्त्वं निर्णीतम् । तदुक्तम्—

### प्रभावली

**तुलितः**; क्षिप्तः । **सीमन्तितः**; विभक्तः । **मघवजित्**; इन्द्रजित् । **दशवदनस्य**; रावणस्य । **लपनदशकम्**; वदनदशकम् । **लवनेन** जनितं **यत्कदनं**

[1] सीम omitted—घ.

विभीषणवशंवदीकृतलङ्कैश्वर्येण, पुष्पकरभसगोष्पदीकृतगगनमहार्णवेन, प्रतिज्ञार्णवतरणकृतक्षणभरतमनोरथसिंहासनाधिरूढेन, दिव्यभौमायोध्याधिदैवतेन, जानकीसहधर्मचारिणा, सर्वधर्मसमाराधनीयेन, सनातनधर्मेण, साकेतजनपदजनिधनिकजङ्गमतदितरजन्तुजातदिव्यगतिदानदर्शितनित्यनिःसीमवैभवेन, भगवता, भक्तजनभद्रारामेण, [1]श्रीरामभद्रेण विश्वमेतत्सनाथीकृतम् ।

## प्रभाविलासः

"व्यक्तमेष महायोगी महतः परमो महान् ।
तमसः परमो धाता शङ्खचक्रगदाधरः ।
श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ॥"

इति । अत्र लिङ्गतोऽर्थोहनादनुमानं माम गर्भसंधेः सप्तममङ्गमुक्तम्, "अभ्यूहो लिङ्गतः सम्यगनुमानमितीरितम्" इति लक्षणात् । यद्यपि प्रधानकथानुसारेणाङ्गवर्णनं युक्तं, तथापि दशरूपके "चातुर्वर्ण्यसमाहारो वर्णसंहार इष्यते" इति वदता प्रधानकथानुसारित्वमनियतमित्यभिप्रेतमिति न दोषः । **प्रतिज्ञेति**; भरतप्रतिज्ञा विवक्षिता । **साकेतम्**;

## प्रभावली

दुःखम् । **वशंवदम्**; परवशम् । **तरणेन कृतोत्सवो भरतः**, तस्य **मनोरथेन** संभावितं प्रार्थितं यद्राज्य**सिंहासनं** तदारूढः । **दिव्या**; वैकुण्ठलोकगता । **भौमा**; भूमिगता । या **अयोध्या**, तयोः **अधिदैवतम्**; उभयत्रापि समप्रीतिनेति भावः । **जानक्या सहैव** शरणागतिधर्माचरणशीलेन । **सर्वधर्माः**; प्रवृत्तिनिवृत्तिरूपाः । **सनातनधर्मेण**; नित्योपायभूतेन । **साकेतजनपदम्**; अयोध्या, तत्र **जनिः** जन्म, तदेव धनं येषां ते जनिधनिकाः । **तदितरत्**; स्थावरम् । **जन्तुजातस्य**

[1] श्रीमता.

**राजा**—(सहर्षविस्फारिताक्षमवलोकयन्)

**पारावारपयोविशोषणकलापारीणकालानल-**
**ज्वालाजालविहारहारिविशिखव्यापारघोरक्रमः ।**
**सर्वावस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती**
**धर्मो विग्रहवानधर्मविरतिं[1] धन्वी स तन्वीत नः ॥ ४३ ॥**

**प्रभाविलासः**

अयोध्या । **तदितरत्**; स्थावरम् । **भद्रारामेण**; मङ्गलावासेन । **पारावारेति**; **पारावारस्य** समुद्रस्य **पयोविशोषणमेव** कला, तत्र **पारीणस्य** कालानलस्य ज्वालाजालविहारं हरतीति तथोक्तः । स चासौ **विशिखश्च**, तस्य **व्यापारे घोरः** भयंकरः **क्रमः** संचारः यस्य सः । अनेन "सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवंगमाः" इति स्मारितम् । **धर्मो विग्रहवानिति**; "रामो विग्रहवान् धर्मः" इति स्मारितम् । **धन्वी**; प्रशस्तचापः; "मण्डलीकृतकार्मुकः" इति ह्युक्तम् ॥ ४३ ॥

**प्रभावली**

**दिव्यगतिदानेन** । **भक्तजनानां यानि भद्राणि तदास्पदेन** । **श्रीमता**; सीतासमेतेन । **सनाथीकृतम्** । अस्मादप्यमङ्गलविरतिमाशास्ते—**पारावारेति** । **पारावारस्य पयोविशोषणकलायां पारीणः** समर्थः यः **कालानलः**, तस्य यत् **ज्वालाजालं**, तस्य यो विहारः विलासः, तद्वत् हारी मनोहरः यो विशिखव्यापारः बाणक्रिया, तस्य घोरः क्रमो यस्य स तथोक्तः । **सर्वावस्थायां यत्सकृत्प्रपन्नजनतासंरक्षणं**, तदेव मुख्यं प्रधानं व्रतं तद्वान् । सर्वावस्थशब्दः प्रपन्नजनताविशेषणं वा । **विग्रहवान्** धर्म इति स्थितः । "रामो विग्रहवान् धर्मः" इत्युक्तेः । नः अधर्मात् विरतान् करोतु ॥ ४३ ॥

[1] विरतान् इति प्रभावलीपाठः

**सुमतिः**—देव्व, णलसेतुकत्तुणा इमिणेव्व धम्मसेतुसंठावएण तुए वि धम्मिअजणो कअद्धीकरिज्जइ ।

(देव, नलसेतुकर्त्रानेनेव धर्मसेतुसंस्थापकेन त्वयापि धार्मिकजनः कृतार्थीक्रियते ।)

**व्यवसायः**—देव, अयं पुनराप्रादुर्भावमनुगतपररूपः समस्तनिगमान्तसारगीतोपनिषदाचार्यो भगवान् वासुदेवः ।

**कंसध्वंसैकवीरो दनुजभरहतक्षोणिदुर्जातबन्धु-**
**गोपीनां प्राणमित्रं गुरुसुतपुनरुज्जीवनोदारकीर्तिः ।**
**नाथो वृष्ण्यन्धकादेर्नरकपुरवधूपत्रभङ्गापहारी**
**पाञ्चालीवल्लभानां प्रथनमुखसुहृत्पञ्चमाम्नायसारः ॥ ४४ ॥**

**प्रभाविलासः**

**अनुगतपररूपः**; अनुवर्तमानशङ्खचक्रादिविशिष्टाप्राकृतविग्रहः । **कंसेति** । एकशब्दः संख्यावाची । **दनुजभटैः** जरासंधादिभिः **हतायाः** पीडितायाः **क्षोणेः** भुवः **दुर्जातबन्धुः** आपद्बन्धुः । "दुर्जातं व्यसनं प्रोक्तम्" इति निघण्टुः । राज्ञामेव कर्मणा दनुजत्वमुक्तम्—

**प्रभावली**

[1]अस्य श्रीरामचन्द्रस्य संभावनीयं दशाविशेषमनुभवति—**कृपे इति** । भो रामस्य कृपे, दीनजनानां सर्वाभीष्टप्रदे । रघुधुरीणयन्त्या त्वया **सकृद्दीक्षणमात्रेण** तत्क्षणे । **प्रकृष्टेत्यादि** । सेतुना सरित्पतिः दक्षिणसमुद्रः द्वेधा व्यभज्यत । **णलसेतुकत्तुणा**-नलसेतुकर्त्रा । **इमेणेव्व**-अनेनेव । **धम्मसेतुसंठावएण**-धर्मसेतुसंस्थापकेन । तुए वि-त्वयापि ; **धम्मिअजणो**-धार्मिकजनः । **कअद्धीकरिज्जइ**-कृतार्थीक्रियते । प्रादुर्भावमारभ्यानुवर्तमानपरत्वाकारो **वासुदेवः** । **कंस इति** । **दनुजभरेण हता या क्षोणी** तस्या **दुर्जातम्** आपत्, तत्र

[1] अस्या व्याख्यायाः मूलश्लोकः दयाशतके सप्ताशीतितमः श्लोकः । परं तु सः मूलकोशेष्वत्र न पठ्यते ।

प्रभाविलासः

" भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः ।
आक्रान्ता भूरिभारेण ब्रह्माणं शरणं ययौ ॥"

इति श्रीभागवतोक्तेः । **गोपीनां प्राणमित्रमिति**; गोपेष्ववियुक्तेषु सत्स्वेव यद्विश्लेषेण प्राणानपि गोप्यस्त्यजन्तीति भावः । तच्च चिन्तयन्तीप्रभृतिषु प्रसिद्धम् । **गुरुः**; सांदीपिनिः । तस्य सुतस्य पुनरुज्जीवनेन महती दातृत्वकीर्तिर्यस्य सः । अनेन

" तत्पाञ्चजन्यमापूर्य गत्वा यमपुरं ततः ।
हरिर्बलश्च भगवान् जित्वा वैवस्वतं यमम् ॥
तं बालं यातनासंस्थं यथापूर्वशरीरिणम् ।
प्रीत्यै प्रदत्तवान् कृष्णो बलश्च बलिनां वरः ॥"

इति स्मारितम् । **नाथो वृष्ण्यन्धकादेरिति**;

" भगवानपि विश्वात्मा विदित्वा कंसजं भयम् ।
यदूनां निजनाथानां योगमायां समादिशत् ॥"

इत्यवतारप्रयोजनं दर्शितम् । **नरकः**; नरकासुरः । **पत्रभङ्गापहारी**; वैधव्यसंपादक इत्यर्थः ।

" गोविन्देति यदाक्रन्दत्कृष्णा मां दूरवासिनम् ।
ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति ॥"

इति कृष्णाऋणापाकरणार्थमेव धर्मादिरक्षणमिति व्यञ्जयितुं **पाञ्चाली-ग्रहणम्** । धर्मादिष्वेकस्मिन्नपि विपन्ने पाञ्चाल्या एवामङ्गलमिति सर्वरक्षण-

प्रभावली

**बन्धुः** । **गुरुसुतस्य पुनरुज्जीवनेन उदारा कीर्तिर्यस्य** । **वृष्णयः अन्धकाश्च यदुवंश्यभेदाः** । **नरकासुरस्य पुरम्** । **पत्रभङ्गः**; तिलकं, पत्रलेखा वा । **प्रथन-**

अमुना किल पूतनाशकटयमलार्जुनारिष्टप्रलम्बधेनुककालिय-केशिकुवलयापीडचाणूरमुष्टिकादिदुष्टजनमर्दनेन गोपालकुलसंवर्धनाय समुद्धृतो गोवर्धनः ।

राजा—(सहर्षमवलोक्य)

**निकटेषु निशामयामि नित्यं निगमान्तैरधुनापि मृग्यमाणम् ।**
**यमलार्जुनदृष्टबालकेलिं यमुनासाक्षिकयौवनं युवानम् ॥ ४५ ॥**

**प्रभाविलासः**

मावश्यकमिति बहुवचननिर्देशः । पञ्चस्वस्याविशेषेण सौहार्दं दर्शयितुं वल्लभग्रहणम् । सहासनभोजनसंलापादिषु सुहृत्त्वं सर्वसुलभमिति तद्व्या-वृत्तिमाह—**प्रथनेति** । तत्राप्यनुयात्रादिव्यावृत्तये मुखसुहृदित्युक्तिः । **पञ्चमाम्नायस्य;** भारतस्य, "भारतः पञ्चमो वेदः" इति स्मरणात् । **सारः;** महावाक्यतात्पर्यविषयः । तदुक्तम्—

"वेदे रामायणे चैव पुराणे भारते तथा ।
आदौ च मध्ये चान्ते च विष्णुः सर्वत्र गीयते ॥"

इति । यद्वा "भारते भगवद्गीता" इति पञ्चमाम्नायसारभूतगीतोपनिषत्प्रतिपाद्य इत्यर्थः ॥ ४४ ॥

**निकटेष्विति** । **अधुनापि मृग्यमाणमिति**; "यतो वाचो निवर्तन्ते" इति वर्तमानप्रयोगो व्याख्यातः । यमलार्जुनाभ्यां दृष्टा

**प्रभावली**

**मुखे;** युद्धारम्भे; **सुहृत्;** सारथ्यकरणात् । **पञ्चमाम्नायः;** पञ्चमवेदः गीता, तस्याः सारार्थभूतः ॥ ४४ ॥

एतद्व्यापरस्यापरिमितत्वादतिसंक्षेपेण तत्र किंचिद्दर्शयन् गोवर्धनोद्धरणं प्राधान्यतो दर्शयति—**अमुना किलेति** । **अरिष्टो** वृषभासुरः । **धेनुकः** । प्रलम्ब-

व्यवसायः—इयं पुनरिह वासुदेवस्य वामतो वर्णपरंपरा—

'जयति ललितवृत्तिं शिक्षितो वल्लवीनां
शिथिलवलयशिञ्जाशीतलैर्हस्ततालैः ।
अखिलभुवनरक्षागोपवेषस्य विष्णो-
रधरमणिसुधायामंशवान्वंशनालः' ॥ ४६ ॥

**प्रभाविलासः**

बालकेलिर्यस्य तम् । यमुनातीरे गोपिकाजनैः स्वैरसंचारेण **यमुनासाक्षिके-** त्युक्तम् । **युवानमिति;** नित्ययौवनमित्यर्थः, "यः पूर्व्याय वेधसे नवीयसे" इति श्रुतेः ॥ ४५ ॥

**जयतीति; शिथिलवलयानां** स्वर्णसूक्ष्मकाचादीनां **शिञ्जाभिः** ध्वनिभिः **शीतलैः** । शिथिलेति शिञ्जासौकर्यं दर्शितम् । क्षणविश्लेषासहनं च व्यज्यते । **शीतलैरिति** श्रोतृजनाह्लादकत्वम् । **हस्ततालैः ललितवृत्तिं** सुकुमाराङ्गनृत्तभेदं **शिक्षितः** ॥ ४६ ॥

**प्रभावली**

धेनुकयोर्बलदेवमर्दितत्वेऽपि **कृष्णेनैव** तद्द्वारा कृतमिति मत्वा तथोक्तिः । **वर्धनाय;** संरक्षणाय । **गोवर्धनः;** पर्वत इति शेषः । प्रत्यक्षत एनं द्रष्टुं महाभाग्यमासी- दित्यभिप्रायेणाह—**निकटेति** । **निकटेषु;** समीपदेशेषु । **निशामयामि;** पश्यामि । अहो भाग्यमिति भावः । **नित्यम्** अधुनापि **निगमान्तैः मृग्यमाणम्;** अन्विष्य- माणम् । यमुना साक्षिणी यद्यौवनस्य; तत्तीरे यौवनविहाराणां विहितत्वात् ॥४५॥

**वामतः;** वामपार्श्वे । **वल्लवीनां** यानि शिथिलवलयानि, तेषां **शिञ्जाभिः** ध्वनिभिर्हेतुभिः, **शीतलैः** सुश्रवैः **हस्ततालैः ललितवृत्तिं** कोमलां गीतवृत्तिं **शिक्षितः** । **अधरमणिः;** कृष्णस्याधररत्नम् । तद्वक्त्रोद्भूतायां **सुधायामंशवान्;** गोपीभिः सहानेनापि पीतत्वादिति भावः । **वंशनालः;** मुरली **जयति** ॥ ४६ ॥

इयं चापरा—

'फक्कत्कौरवपट्टणप्रभृतयः प्रास्तप्रलम्बादय-
स्तालाङ्कस्य तथाविधा विहृतयस्तन्वन्तु भद्राणि नः ।
क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणै-
राकौमारकमस्वदन्त जगते कृष्णस्य ताः केलयः' ॥ ४७ ॥

इति ।

प्रभाविलासः

**फक्कदिति । फक्कनं** नीचैर्गमनम् । "फक्क नीचैर्गतौ" इति धातुः । **कौरवपट्टणम्;** हास्तिनपुरम् । **प्रभृतिशब्देन** यमुनादिसंग्रहः । तदुक्तम्—

"इत्युक्त्वा मदरक्ताक्षः कर्षणाधोमुखं हलम् ।
प्राकारवप्रे विन्यस्य चकर्ष मुसलायुधः ॥
आघूर्णितं तत्सहसा ततो वै हास्तिनं पुरम् ।
दृष्ट्वा संभ्रमहृदयाश्चुक्रुशुः पौरकौरवाः ॥"

इति । **प्रलम्बः;** राक्षसः । आदिपदेन द्विविदादयः । **शर्करया क्षीरमिवापृथग्भूताः** परस्परमेलनेनातिस्वाद्याः ॥ ४७ ॥

प्रभावली

**अपरा;** वर्णपरंपरेति शेषः । **फक्कदिति । कौरवपट्टणम्;** हास्तिनपुरम् । **प्रभृतिशब्दः;** तदुपवनादिग्राहकः । "फक्क नीचैर्गतौ" इति धातुः । **फक्कन्तः** नीचैः पतन्तः **कौरवपट्टणप्रभृतयः** याभिस्ताः । **प्रास्ताः** निरस्ताः **प्रलम्बादयः,** आदिशब्देन द्विविदादयः, याभिः । **तालाङ्कस्य;** बलरामस्य । **तथाविधाः;** तथात्वेन पुराणप्रसिद्धाः । **विहृतयः नः भद्राणि तन्वन्तु । याभिः;** विहृतिभिः । **अपृथग्भूताः कृष्णस्य ताः केलयः** बाललीलाः । किमिव? **शर्करया अपृथग्भूतं क्षीरमिव । प्रभूतैः गुणैः;** बलदेवविहृतिसंसृष्टया पूर्वतोऽप्यधिकायमानगुणैः सौलभ्यादिभिः । **जगते;** पश्यते जनाय । **अस्वदन्त;** स्वादुतमा अभूवन् । **आकौमारकम्;** कृष्णस्य बाललीलामारभ्य ॥ ४७ ॥

सुमतिः—अय्यउत्त, अवणिभारुद्धरणप्पवुत्तं जउधुरंधरं विअ तुमं वि संसिइभअभरणीसेसधंसणसंणद्धं अइरा एव्व कअकज्जं पेक्खिस्सं ।

(आर्यपुत्र, अवनिभारोद्धरणप्रवृत्तं यदुधुरंधरमिव त्वामपि संसृतिभयभरनिःशेषध्वंसनसंनद्धमचिरादेव कृतकार्यं प्रेक्षिष्ये ।)

व्यवसायः—सत्यमेतत् । [1]आलक्ष्यतामयं पुनरखिलदोषनिर्मूलनः कल्की ।

राजा—(विलोक्य)

भाविन्या दशया भवन्निह भवध्वंसाय नः कल्पतां
कल्की विष्णुयशःसुतः कलिकथाकालुष्यकूलंकषः ।
निःशेषक्षतकण्टके क्षितितले धाराजलौघैर्ध्रुवं
धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंशधाराधरः ॥ ४८ ॥

प्रभाविलासः

भाविन्येति । भाविन्या; भविष्यन्त्या । दशया; अवस्थया, अवतारेणेति यावत् । कल्की; कल्को नामाश्वजातिविशेषः, "ताम्रत्वक्सित-

प्रभावली

अय्यउत्त-आर्यपुत्र । अवणिभारुद्धरणप्पवुत्तं-अवनिभारोद्धरणप्रवृत्तम् । जउधुरंधरं विअ-यदुधुरंधरमिव । तुमं वि-त्वामपि । संसिइभअभरणीसेसधंसणसंणद्धं-संसृतिभयभरनिःशेषध्वंसनसंनद्धम् । अइरा एव्व-अचिरादेव । कअकज्जं-कृतकार्यम् । पेक्खिस्सं-प्रेक्षिष्ये । कल्की; कल्कः श्वेताश्वः, सोऽस्यास्तीति कल्की । अस्मादभिलषितं प्रार्थयते—भाविन्येति । भाविन्या;

[1] राजा—(साञ्जलिबन्धम्)
वन्दे बृन्दावनचरं वल्लवीजनवल्लभम् ।
जयन्तीसंभवं धाम वैजयन्तीविभूषणम् ॥ व्यवसायः—added before—ग.

**व्यवसायः**—देव, इत्थं किल भगवतः कतिचिदवतारभेदा दर्शिताः। कति कति [1]भवन्ति भूता भाविनश्च भगवतः स्वच्छन्दावताराः। अमीषां चातिशयवर्णने निगमान्तवन्दिनोऽपि निवृत्तव्यापाराः। अपिच,

**प्रभाविलासः**

केशवालतनुजः" इति तल्लक्षणम्। विष्णुयशा नाम कश्चित् ब्राह्मणः, तस्य सुतः;

"शम्बलग्राममुख्यस्य ब्राह्मणस्य महात्मनः।
भवने विष्णुयशसः कल्की प्रादुर्भविष्यति ॥"

इति स्मरणात्। **कलिकथा**; पापकथा। **निस्त्रिंशः**; खड्गः। **धारा**; खड्गाग्रम्। छिन्नकण्टकलतादिके क्षेत्रे बीजं सम्यगङ्कुरतीति प्रसिद्धिः॥४८॥

**प्रभावली**

भविष्यन्त्या **दशया कल्की** अश्ववान् **भवन्** वर्तमानः **कल्की नः भवध्वंसाय कल्पताम्**। कीदृशः? **विष्णुयशसः** शम्बलग्रामवासिनो विष्णुयशोनामकब्राह्मणस्य **सुतः**। **कलिकथा**; कलियुगप्रस्तावः, कलिमधिकृत्य यानि कालुष्याण्युक्तानि "अट्टशूला जनपदाः" इत्यादीनि, तेषां समूलोच्छेदकः। पुनः कीदृशः? **यन्निस्त्रिंशधाराधरः**; यस्य खड्गरूपो मेघः। निःशेषं यथा तथा **क्षता** नाशिताः **कण्टकाः**, क्षुद्रशत्रवः तरुकण्टकाश्च यत्र तस्मिन्। **क्षितितले खड्गधारा** एव **जलौघाः** तैः। **कार्तयुगं धर्मम्**; निवृत्तिधर्मम्। **ध्रुवं प्ररोहयति**; अङ्कुरयति। मेघश्च निःशेषं छिन्नशुष्कदग्धकण्टकक्षेत्रे धारारूपैर्जलैरङ्कुरं प्रवर्तयति ॥ ४८ ॥

**कति कति सन्ति**; बहवः सन्ति। **स्वच्छन्दावताराः**; स्वेच्छावताराः। **अमीषाम्**; अवताराणाम्। **निवृत्तव्यापाराः**; "यतो वाचो निवर्तन्ते" इत्युक्तेः। तेषु दशावतारमात्रमपि नित्यं जल्पन्तः कृतकृत्या इत्याह—

[1] भवन्तो—ग.

इच्छामीन विहारकच्छप महापोत्रिन्यदृच्छाहरे
रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् ।
क्रीडावल्लव कल्कवाहनदशाकल्किन्निति[1] प्रत्यहं
जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघपण्यापणाः ॥ ४९ ॥

प्रभाविलासः

**इच्छेति** । मकरतादिपरिग्रहेऽपि राक्षससंहारसंभवे स्वतन्त्रेच्छया मत्स्यतेति वक्तुम् **इच्छामीनेत्युक्तम्** । "कण्डूयनैरद्रिणा निद्राणस्य" इति न्यायेन मन्दरधारणस्य विहारनिमित्ततया **विहारकच्छपेत्युक्तिः** । "रोमान्तःस्था मुनयः स्तुवन्ति" इत्यपरिच्छिन्नविग्रहतया **महापोत्रिन्नित्युक्तम्** । नृसिंहस्याकस्मिकत्वेन **यदृच्छेत्युक्तम्** । स्वनिर्दिष्टेन्द्रपदाद्याक्रमणेऽपि बलेर्धार्मिकत्वेन नातिपीडामकरोदिति **रक्षावामनेत्युक्तम्** । एकैकशः समूलघातेऽप्यनिवृत्तरोषतया **रोषरामेत्युक्तम्** । आर्द्रापराधिनो रावणकाकादेर्दृष्टमात्रवध्यत्वेऽपि कारुणिकतया वधान्निवृत्त इति **करुणाकाकुत्स्थेत्युक्तिः** । हलेन पुरोत्पाटनादिकं लीलामात्रमिति **हेलाहलिन्नित्युक्तम्** । यमुनातीरे गोपालगोपिकादिभिः क्रीडानिमित्तं वल्लभत्वम्, इच्छामात्रेणैव दुष्टनिग्रहसंभवादिति वक्तुं **क्रीडावल्लवेत्युक्तिः** । **कल्कवाहनदशाकल्किन्निति**; युगपदेव सकलदुर्वृत्तनिग्रहावतारस्य नातिचिरस्थायित्वं

प्रभावली

**अपिचेति** । भो **इच्छामीन**; स्वेच्छावतीर्णमीन । विहारेणावतीर्ण **महाकच्छप** कूर्म । **महापोत्रिन्**; महावराह । यदृच्छया नृसिंहरूपं प्राप्त । लोकरक्षणायावतीर्ण रोषाविष्टराम । भो करुणाविष्टकाकुत्स्थराम । हेलयावतीर्णहलिन् यदुराम । क्रीडयावतीर्णवल्लव । **कल्कः** श्वेताश्वविशेषः । "ताम्रत्वक्सितवालकेशतनुजः

[1] दशाकल्पिन्निति पाठान्तरम् ।

**तेषु चैतेषु भगवदवतारेषु निराशिषः पुरुषस्य यथाभिमत-मेकमालम्बनं निर्धारणीयं महाराजेन ।**

**राजा**—सेनापते, साधीयः संचिन्तितम् । तदहं संप्रति,

**विशुद्धे विश्वरूपस्य यत्र क्वचन विग्रहे ।**
**समाधिजननीं पुंसः साधयिष्यामि भावनाम् ॥ ५० ॥**

प्रभाविलासः

च व्यज्यते । सर्वत्र इच्छामीनेत्यादिना कर्मनिमित्तकत्वव्यावृत्तिरभिप्रेता । **प्रत्यहं जल्पन्त इति ;** सायं प्रातः संध्यासु दशावतारस्तोत्रपठनं नित्यमिति व्यज्यते ॥ ४९ ॥

**समाधिजननीं भावनाम् ;** तत्स्वरूपसाक्षात्कारजनकं ज्ञानम् ;

"तस्यैव कल्पनाहीनस्वरूपग्रहणं हि यत् ।
मनसा ध्याननिष्पाद्यं समाधिः साभिधीयते ॥"

इति स्मरणात् ॥ ५० ॥

**प्रभावली**

कल्कः" इति लक्षणात् । कल्को वाहनं यस्य स तथोक्तः । तस्य दशा कलियुगान्तः । तस्यामवतीर्णकल्किरूप । इति प्रत्यहं **जल्पन्तः पुरुषाः पुण्या-नामोघा एव पण्यानि** विक्रयद्रव्याणि, **तेषामापणाः** निषद्यास्थानानि भूत्वा **स्वसंचारेण भुवनं पुनन्ति** ॥ ४९ ॥

उत्तरकृत्यं राज्ञे निवेदयति—तेष्विति । **यथाभिमतम् ;** यत्र तवाभिरुचितं **तदेकमालम्बनं निर्धारणीयं** मुमुक्षोः **पुरुषस्य ;** भवतीति शेषः । **साधीयः ;** अतिसमीचीनम् । **तत ;** तस्मात् । **विशुद्ध इति । विश्वरूपस्य ;** जगच्छरीरिणः । **यत्र क्वचन विशुद्धे विग्रहे ;** विशुद्धशब्देन बुद्धादिरूपव्यावृत्तिः । समाधिहेतु-भूतां **भावनाम् ; समाधिः** साक्षात्कारः, तज्जननीं चिन्तनां **साधयिष्यामि** ॥५०॥

न चात्रास्माकमतिभारः । यतः,

**पदकमलनतानां भासमानः प्रमाणैः**
**प्रणिहितरुचिभेदः प्राच्यसंस्कारशक्त्या ।**
**प्रभुरयमनुकम्पानिघ्ननिर्विघ्नलीलः**
**परिकलयति रूपं भावनालम्बनार्हम् ॥ ५१ ॥**

तदिह कृतं शिल्पदर्शनेन । दीयतां शिल्पाधिकारिणः संस्कारस्यास्मत्प्रसादोचितमभिमतं पारितोषिकम् ।

व्यवसायः—यदाज्ञापयति देवः ।

राजा—सेनापते, बलवदभियुक्ता वयं संत्वरेमहि समनन्तरकरणीयाय ।

(इति निष्क्रान्ताः सर्वे)

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदये शुभाश्रयनिर्धारणं नाम सप्तमोऽङ्कः ।



**प्रभाविलासः**

**पदकमलेति । प्रणिहितरुचिभेद इति ;** निर्दिष्टविग्रहेषु यथारुचि व्यवस्थया विकल्प उक्तः । **निघ्नः** ; आयत्तः ॥ ५१ ॥

**इत्यात्रेयाहोबिलाचार्यविरचिते संकल्पसूर्योदयव्याख्याने प्रभाविलासाख्याने शुभाश्रयनिर्धारणं नाम सप्तमोऽङ्कः ।**



**प्रभावली**

अत्र चाप्यस्माकमतिभारो नास्तीत्याह—न चात्रेति । तत्र हेतुमाह **—यत इति । पदेति । प्रमाणैः** आगमैः मनसि **भासमानः प्राच्यसंस्कार-**

## प्रभावली

**शक्त्या प्रणिहितरुचिभेदः** ; प्रवर्तितरुचिभेदः । यस्य यस्मिन् विग्रहे पूर्ववासना, तस्य तस्मिन् रुचिविशेषं प्रवर्तयति भगवानिति भावः । **अनुकम्पाया अधीना निर्विघ्ना लीला** यस्य सः । **रूपम्** ; स्वं विग्रहम् । **पदकमलनतानाम्** ; आश्रितानाम् । **भावनायाः** ; ध्यानस्य । आलम्बनार्हम् ; विषयस्यार्हम् । **परिकलयति** ; चित्ते करोतीत्यर्थः ॥ ९१ ॥

**कृतम्** ; अलं चित्रदर्शनेन । **पारितोषिकम्** ; परितोषप्रयुक्तं देयवस्तु । उत्कण्ठाया बलवत्तामाह—**बलवदिति** । **बलवता** महामोहेन **अभियुक्ताः** कृतस्पर्धाः **अनन्तरकृत्याय** संत्वरेमहीति ॥

इति श्रीनृसिंहराजाचार्यकृतसंकल्पसूर्योदयव्याख्यायां
प्रभावल्यां शुभाश्रयनिर्धारणं नाम सप्तमोऽङ्कः ।

---

# अष्टमोऽङ्कः

## मिश्रविष्कम्भः

(ततः प्रविशत्यभिनिवेशः)

अभिनिवेशः—(स्वसामर्थ्यं बहुमत्य)

हृष्यन्ति व्यसनेषु सप्तसु मुधारब्धेषु मत्प्रेरिताः[1]
प्रारब्धं न परित्यजन्ति च मुहुः प्रत्यूहवात्याहताः ।
नानादुःखभयानकेऽपि न जहत्यर्थे पुमर्थे रतिं
मोहस्याभिनिवेश एकदृगहं कोशाधिकारे स्थितः ॥ १ ॥

### प्रभाविलासः

तत इत्यादि । **अभिनिवेशः**; प्राप्तैश्वर्यभङ्गभीतिः । **हृष्यन्तीति** । **सप्तसु व्यसनेषु**;

"स्त्रीद्यूतमृगयामद्यवाक्पारुष्योग्रदण्डताः ।
अनुपायव्ययश्चेति राज्ञां व्यसनसप्तकम् ॥"

### प्रभावली

**अभिनिवेशः**; विषयासक्तिः । स्वसामर्थ्योक्तिपूर्वकं स्वाधिकारं वर्णयति— **हृष्यन्तीति** । **मत्प्रेरिताः**; अभिनिवेशग्रस्ताः पुरुषाः । **मुधा**; व्यर्थमेव । **आरब्धेषु**; क्रियमाणेषु । **सप्तसु व्यसनेषु**; स्त्रीद्यूतपानमृगयावाक्पारुष्यदण्डपारुष्यादिषु । **हृष्यन्ति**; सज्जन्ते । मुहुर्मुहुः प्रत्यूहा एव वात्याः, ताभिः **आहता** अपि **प्रारब्धं** कार्यं न **परित्यजन्ति** । चस्त्वपिशब्दार्थः । **नानादुःखैः**; "राजतः सलिलादग्नेश्चोरतः स्वजनादपि । भयमर्थवतां नित्यम्"

[1] मत्प्रेक्षिताः—ख.

अपिच, लोभोऽपि महामोहसर्वस्वभूतो मामेव दर्शितसौभ्रात्रं सहायीकृत्य सर्वत्र विजयते। यतः,

**अवसादप्रसङ्गेषु स्वयमुत्तम्भनोद्यतः।**
**अहमार्यस्य लोभस्य भ्राता चरमसंभवः॥ २॥**

**प्रभाविलासः**

इत्युक्तलक्षणेषु। **नानेति;** आर्जनरक्षणादिषु। तदुक्तम्—

"अर्थस्य साधने सिद्धावुत्कर्षे रक्षणे व्यये।
नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम्।
स्तेयं हिंसानृतं दम्भः कामक्रोधौ स्मयो मदः।
खेदो वैरमविश्वास एतानि व्यसनानि च।
एते पञ्चदशानर्था अर्थमूला मता नृणाम्।
तस्मादनर्थमर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत्॥"

इति। **एकदृक्;** एकत्र दत्तदृष्टिः। एकनेत्र इति च व्यज्यते॥ १॥

**अवसादेति।** **अवसादः;** विपत्तिः। **चरमसंभवः;** कनीयान्॥ २॥

**प्रभावली**

"अर्थानामार्जने दुःखम्" इत्याद्युक्तेः। भयंकरेऽप्यर्थपुरुषार्थे **रतिं** प्रीतिं **न जहति।** **एकदृक्;** एकत्रैव दृष्टिः यस्य; अन्यत्र काण इत्यर्थः; "एकेन हीनः काणः स्यात्" इत्युक्तेः। **अभिनिवेशोऽहं** महामोहस्य कोशगृहरक्षणे अधिकारे **स्थितः॥ १॥**

लोभोऽप्यग्रजो मदवष्टम्भादेव सर्वत्र विजयीत्याह—**लोभोऽपीति।** **सौभ्रात्रेण** वर्तमानं **मामेव** अवष्टभ्येत्यर्थः। तत्र हेतुमाह—**यत इति।** **अवसादेति।** **अहमार्यस्य** ज्येष्ठस्य **लोभस्य चरमसंभवो भ्राता;** कनिष्ठ इत्यर्थः, लोभानन्तरमभिनिवेशस्योत्पत्तेः। लोभस्य **अवसादप्रसङ्गेषु** क्षयाव-

(विचिन्त्य) अहो महत्सांपरायिकमुपस्थितमास्माकस्यान्ववायस्य; यदिह विवेकेन प्रथममध्यात्मविद्यामशिक्ष्यत पुरुषः; यच्चासौ मतान्तरदौर्बल्यप्रकाशनेन परब्रह्मप्रकाशके शास्त्रे प्रशमितश्रद्धावैकल्यः; यदपि च सपरिकरे मोक्षोपाये संमुखीकृतः; विमुखीकृताश्च कामक्रोधादयः; विमृष्टं च किमपि संयमस्थानम्; अवधारितं च धारणायाः शुभमालम्बनम्; [1]प्रारिप्सितश्च शमदमवैराग्यादिपरिकर्मितः सालम्बनो महायोगः।

(दीर्घं निश्वस्य सविषादम्)

प्रभाविलासः

**सांपरायिकम्;** व्यसनम्। **आस्माकस्य;** अस्मत्संबन्धिनः। **धारणाया इति।** तल्लक्षणमाह शौनकः—

"शुभे ह्येकत्र विषये चेतसो यत्तु धारणम्।
निश्चलत्वाच्च सा सद्भिर्धारणेत्यभिधीयते ॥"

इति। सैव धारणा निरन्तरस्मृतिसंतानात्मिका योग उच्यते, "पौनःपुन्येन तत्रैव विषये सैव धारणा। ध्यानाख्यां लभते राजन्" इति स्मरणात्।

प्रभावली

सरेषु कृशताप्रसङ्गेषु **स्वयमुत्तम्भने** उद्यतः; द्रव्येष्वभिनिवेशाल्लोभो वर्धत इत्यर्थः ॥ २ ॥

**सांपरायिकम्;** युद्धम्। **उपस्थितम्;** संनिहितम्। **आस्माकस्य;** अस्मत्संबन्धिनः कुलस्य। तदेव दर्शयति—**यदिहेत्यादिना।** अत्र प्रथमाङ्कात् प्रभृत्येतदङ्कपर्यन्तमनूद्यते। तत्र **यदिहेत्यनेन** प्रथमाङ्कार्थः। **यच्चासाविति** द्वितीयाङ्कार्थः। **यदपि चेति** तृतीयाङ्कार्थः। **विमुखीकृता इति** चतुर्थपञ्चमाङ्कार्थः। **विमृष्टमिति** षष्ठाङ्कार्थः। **अवधारितं चेति** सप्तमाङ्कार्थः। **प्रारिप्सितश्चेति** सप्तमाङ्कान्तिमवाक्यार्थः। **मतान्तराणाम्;** वेदान्तव्यतिरिक्तानाम्।

[1] विज्ञातश्च—छ.

**विजिग्ये यैरिदं स्त्रीभिर्विजिताभिर्जगत्त्रयम् ।**
**त एव सुभटाः ख्याताः स्त्रीभिरेव जिगीषिताः ॥ ३ ॥**

(नेपथ्ये)

अलिअं एव्व भणइ भावो, जं इत्थिआहिं जिईसिआ महामोहसेणिअ[1]धुरंधरेत्ति ।

(अलीकमेव भणति भावः, यत् स्त्रीभिरेव जिगीषिता महामोहसैनिकधुरंधरा इति ।)

प्रभाविलासः

योगो ध्यानमिति पर्यायः । **विजिग्ये यैरिति** । **यैः** कामादिभिः कर्तृभिः **स्वविजिताभिः स्त्रीभिः** साधनभूताभिः **इदं जगत्त्रयं विजिग्ये** जितं, **त एव सुभटाः स्त्रीभिर्विजिगीषिताः** । अत्र "इन्द्रियाणि पुरा जित्वा जितं त्रिभुवनं त्वया" इति मन्दोदरीवचनं व्यञ्जितम् ॥ ३ ॥

प्रभावली

**शास्त्रे**; वेदान्ते । **प्रशमितं श्रद्धाया** आदरस्य **वैकल्यं** यस्य सः । **संमुखीकृतः**; अभिमुखीकृतः । **विमृष्टम्**; विचारितं, निर्णीतमित्यर्थः । **शुभमालम्बनम्**; शुभाश्रयः । **प्रारिप्सितः**; प्रारब्धुमिष्टश्च । **सालम्बनः**; शुभाश्रयविशिष्टः । निरालम्बनाद्योगात् सालम्बनस्य श्रैष्ठ्यमुक्तम्—"सालम्बनो महायोगः" इति । तदप्यनेन समभिव्याहारेण सूचितम् । वक्ष्यमाणचिन्तया विषादः । चिन्तामेव दर्शयति—**विजिग्य इति** । कामक्रोधादिभिः **स्त्रीभिः इदं जगत्त्रयं** विजितम् । **त एव सुभटाः**; सुभटत्वेन प्रख्याताः कामक्रोधादयः । **स्त्रीभिः**; जुगुप्साक्षान्त्यादिभिः स्त्रीभिरेव । **जिगीषिताः**; जेतुमिष्टा इति ॥३॥

**नेपथ्ये अलिअमित्यादि**; अभिनिवेशभार्याया दुर्वासनाया वचनम् । **अलिअं** एव्व-अलीकमेव । **भावो भणइ**-भावो भणति । **जं**-यत् । **इत्थिआहिं**-स्त्रीभिः । **जिईसिआ**-जिगीषिताः । **महामोहसेणिअधुरंधरा इत्ति**-महामोहसैनिक-

[1] सेणा—क; सेण्ण—ख. छ.

अभिनिवेशः—(कर्णं दत्वा सरोषहासम्) कासौ रण्डा ? या मामप्यलीकवादिनं मन्यते ।

(पुनर्नेपथ्ये)

एदेण वि तुह अलिअभासिअं पडिट्ठाविअं; जं उअरग्गिसक्खिअं तुए गहिअपाणिं परपुरिसदंसणविमुहिं मं रण्डेत्ति भणसि ।

(एतेनापि तवालीकभाषितं प्रतिष्ठापितम्; यत्पुनरुदराग्निसाक्षिकं त्वया गृहीतपाणिं परपुरुषदर्शनविमुखीं मां रण्डेति भणसि ।

अभिनिवेशः—किमसावस्मद्गेहिनी दुर्वासना ? शान्तं पापम्, शान्तं पापम् । अद्य पुनरियमुपसृत्य[1] क्षान्तपरिवादा सत्यवादिनं मां संभावयतु ।

(ततः प्रविशति दुर्वासना)

दुर्वासना—अय्यउत्त, इअम्हि। अहअं दुम्मइचलणसेवा-

प्रभाविलासः

**अलीकवादिनम्**; असत्यवादिनम् । **परपुरुषः**; सर्वेश्वर इति व्यज्यते । **अस्मद्गेहिनी**; मम भार्या । **तितिक्षया**; क्षान्त्या । **आत्म-**

प्रभावली

धुरंधरा इति । **रण्डा**; विधवा, व्यभिचारिणी । **मामपि**; सत्यवादिनमपीति भावः । **अलीकम्**; अनृतम् । **एदेण वि**-अनेन वचनेनापि । **तुह**-ते । **अलिअभासिअं**-अलीकभाषितम् । **पडिट्ठाविअं**-प्रतिष्ठापितम् । **जं**-यत् । **उअरग्गिसक्खिअं**-उदराग्निसाक्षिकम् । **तुए**-त्वया । **गहिअपाणिं**-गृहीतपाणिम् । **परपुरिसदंसणविमुहिं**-परपुरुषदर्शनविमुखीम् । **मं**-माम् । **रण्डेत्ति**-रण्डेति । **भणसि**-भणसि । **इयम्**; दुर्वासना । मत्समीपमागत्य मदीयः परिवादः क्षान्तो यया सा सती । **संभावयतु**; पूजयतु । **इअह्मि**; इयमस्मि । **अहअं**-अहम् ।

[1] अभिसृत्य—क. ख.

रसपरवसहिअआ अण्णाअलोअवुत्तंदा पुच्छम्मि—के पुरिसा काहिं इत्थिआहिं जिईसिआ ?

(आर्यपुत्र, इयमस्मि । अहं दुर्मतिचरणसेवारसपरवशहृदया अज्ञातलोकवृत्तान्ता पृच्छामि—के पुरुषाः काभिः स्त्रीभिर्जिगीषिताः ?)

**अभिनिवेशः**—प्रिये, कामो जुगुप्सया, कोपस्तितिक्षया, लोभस्तुष्ट्या, अहंकार आत्मविद्यया । एवमन्येऽपि ।

**दुर्वासना**—किं उच्चाहमेत्तेण कज्जं संघडइ ? हदासा खु एदा सलहीओ[1] विअ अप्पविणासणे सअं पउत्ता ।

(किमुत्साहमात्रेण कार्यं संघटते ? हताशाः खल्वेताः शलभ्य[2] इवात्मविनाशने स्वयं प्रवृत्ताः ।)

**अभिनिवेशः**—अहमप्येवमध्यवस्यामि । अथापि यदृच्छा-

### प्रभाविलासः

**विद्यया ;** आत्मज्ञानेन । **दुरवधरम् ;** दुर्निर्धरम् । **उत्पश्यामि ;** उत्प्रेक्षे ।

### प्रभावली

**दुम्मइचलणसेवारसपरवसहिअआ**-दुर्मतिचरणसेवारसपरवशहृदया । **अण्णाअलोअवुत्तंदा**-अज्ञातलोकवृत्तान्ता । **पुच्छम्मि**-पृच्छामि । **के पुरिसा**-के पुरुषाः । **काहिं**-काभिः । **इत्थिआहिं**-स्त्रीभिः । **जिईसिआ**-जिगीषिता इति । **जुगुप्सा ;** कुत्सा । **तितिक्षा ;** क्षान्तिः । अनहमि देहादावहंबुद्धिः **अहंकारः** । **आत्मविद्या ;** आत्मज्ञानम् । **अन्येऽपि ;** दर्पादयः, अधिकदृष्ट्यादिभिरित्यर्थः । **किं उच्चाहमेत्तेण**-किमुत्साहमात्रेण । **कज्जं संघडइ**-कार्यं संघटते । **हदासा खु**-हताशाः खलु । **एदा**-एताः । **सलहीओविअ**-शलभ्य इव । **अप्पविणासणे**-

[1] सलहाओ—छ.

[2] शलभाः—छ.

देवी किमाचरेदिति दुरवधरम्। शलभीनिपाते प्रदीपोऽपि कदाचिद्वि-नाशमधिगच्छति।

**दुर्वासना**—(सविषादम्) जइ एव्वं महामोहपेरंताणं अम्ह-पहूणं विणासो होज्ज।

(यद्येवं महामोहपर्यन्तानामस्मत्प्रभूणां विनाशो भवेत्।)

**अभिनिवेशः**—(सभ्रूक्षेपं विचिन्त्य) प्रिये, मया तु जीवितव्यमेव सर्वथा। अत्र चोपायमेवमुत्पश्यामि। भोगसंचय-रूपान्महामोहकोशगृहान्निर्गत्य मुमुक्षापुरस्कारेण विवेकमाश्रितः[1] समाध्यभिनिवेश इति सविशेषणगृहीतनामकश्चिरं जीविष्यामि।

**दुर्वासना**—णाह, अहं उण तुम्ह पिआ कहं होम्मि?

(नाथ, अहं पुनस्तव प्रिया कथं भवामि?)

**अभिनिवेशः**—प्रिये किं भीरुरसि? त्वमपि दुरन्वयं परित्यज्य मामेष परिचरन्ती सुसंगता चिरं जीविष्यसि।

प्रभाविलासः

**कोशगृहात्**; धनगृहात्। **मुमुक्षा**; मोक्षेच्छा। **दुरन्वयम्**; दुरित्युप-

प्रभावली

आत्मविनाशने। सअं पवुत्ता-स्वयं प्रवृत्ताः। **एवम्**; त्वयोक्तप्रकारेण। **यदृच्छा-देवी**; कर्मानुगुणा भगवल्लीला। कदाचित्प्रतीपमपि फलतीत्याह—**शलभीति**। प्रदीपस्थानीयाः कामादयः। **जइ एव्वं**-यद्येवम्। **महामोहपेरंताणं**; महामोह-पर्यन्तानाम्। **अम्हपहूणं**-अस्मत्प्रभूणाम्। **विणासो**-विनाशः। **होज्ज**-भवेत्। **क्षेपः**; चलनम्। **जीवनोपायः** द्रव्यम्। **तत् उत्पश्यामि**; उत्प्रेक्षे। **भोगाः**; ऐहिकसुखदुःखसाधनानि। **मुमुक्षापुरस्कारेण**; मोक्षेच्छां पुरस्कृत्य। **समाधौ**

[1] विवेकाश्रयः—ख.

**दुर्वासना**—महंतो पसादो अय्यउत्तस्स ; जं चिरसेविअस्स रण्णो महामोहस्स विणासे वि सअं जीविऊण जीविअसमं मं वि रक्खिदुं अहिणिविससि ।

(महान् प्रसाद आर्यपुत्रस्य ; यच्चिरसेवितस्य राज्ञो महामोहस्य विनाशेऽपि स्वयं जीवित्वा जीवितसमां मामपि रक्षितुमभिनिविशसे ।)

**अभिनिवेशः**—न केवलं मे जीवितसमा त्वम् ; जीवितेश्वरी[1] खल्वसि ।

**दुर्वासना** धण्णिआ खु एसा संवुत्तम्हि ; जं एव्वं संभावेसि ।

(धन्या खल्वेषा संवृत्तास्मि ; यदेवं संभावयसि ।)

## प्रभाविलासः

सर्गान्वयम् । **सुसंगता** ; सु इत्युपसर्गसंगता । **जीवितेश्वरी** ; प्राणेश्वरी ।

## प्रभावली

अभिनिवेशः । **सविशेषणं** यथा तथा । **णाह**-नाथ । **अहं उण**-अहं पुनः । **तुम्ह**-तव । **पिआ**-प्रिया । **कहं**-कथम् । **होम्मि**-भविष्यामि । **भीरुरसि** ; बिभेषीत्यर्थः । **दुरन्वयम्** ; दुष्टसंबन्धमित्येकोऽर्थः, दुरित्युपसर्गान्वयं च । **परिचरन्ती** ; अनुवर्तमाना । **सुसंगता** ; सुष्ठु मया संगतेत्येकोऽर्थः । सु इत्युपसर्गसंगता च ; सुवासना सतीत्यर्थः । **महंतो पसादो अय्यउत्तस्स**-महान् प्रसाद आर्यपुत्रस्य । **जं**-यत् । **चिरसेविअस्स**-चिरसेवितस्य । **रण्णो**-राज्ञः । **महामोहस्स**-महामोहस्य । **विणासे वि**-विनाशेऽपि । **सअं**-स्वयम् । **जीविअसमं**-जीवितसमाम् । **मं वि**-मामपि । **रक्खिदुं**-रक्षितुम् । **अहिणिविससि**-अभिनिविशसे । **धण्णिआ खु**-धन्याः खलु । **एसा**-एषा । **संवुत्तम्हि**-संवृत्तास्मि ।

[1] ईशधातोरौणादिके वरटि टित्वात् ङीपि रूपम् .

अभिनिवेशः—(सर्वतोऽलोक्य विचिन्त्य साशङ्कम्)

पश्यामि दारुणान् दिव्यान्तरिक्षभौमानुत्पातान्—

गृध्रास्तोरणशैल[1]शृङ्गमभितोऽगृह्णन्नभोमण्डलं
वात्यामण्डलखण्डितध्वजपटीशून्यानि सैन्यानि नः ।
शूलप्रासकृपाणमुद्गरधनुःक्रूरैर्मुहुः किंकरै-
र्दृश्यन्ते परिवारिता इव दिशः संवर्तसंवर्तकैः ॥ ४ ॥

आः कष्टम्;

निवृत्तिधर्मः पर्येति नाम्ना लोकेषु नारदः ।
अयं च तुम्बुरुस्तौ च प्रणिधी मोहवैरिणः ॥ ५ ॥

**प्रभाविलासः**

**गृध्रा इति । प्रासः**; कुन्तः ॥ ४ ॥

**निवृत्तीति । पर्येति**; परिक्रामति । **प्रणिधी**; चरौ ॥ ५ ॥

**प्रभावली**

**जं-यत् । एव्वं-एवम् । संभावेसि-संभावयसि ।** मामिति शेषः । **दारुणान्**; क्रूरान् । **दिव्यान्तरिक्षभौमानुत्पातान्**; दुर्निमित्तानि । तदेव दर्शयति—**गृध्रा इति । तोरणशैलशृङ्गम्**; तोरणस्य बहिर्द्वारस्थापितदारुविशेषस्य यत् शृङ्खलशृङ्गम् । तदभिमतः **नभोमण्डलं गृध्रा** आवव्रुरित्यर्थः । **नः सैन्यानि वात्या** वातसमूहः, तस्य **मण्डलेन** आवर्तनेन **खण्डिताभिः ध्वजपटीभिः शून्यानि** जातानि । **शूलाद्यायुधैः** ये **क्रूराः**, तैः यम**किंकरैः**, **संवर्तस्य** प्रलयस्य **प्रवर्तकैः दिशः परिवारिता इव मुहुः दृश्यन्ते** ॥ ४ ॥

**निवृत्तिधर्मः**; मोक्षधर्मः । **नाम्ना नारद** इत्युक्तः । नारदरूपेण **लोके** परिभ्रमति । **अयं** नारदः **तुम्बुरुश्च** तावुभौ । **मोहवैरिणः**; विवेकस्य । **प्रणिधी**; चारौ । अत एव तयोः परिक्रमणं विवेकप्रयुक्तमिति भावः ॥ ५ ॥

[1] शूल—ग.

तयोरपि प्रविष्टश्चायं त्रिभुवनविदूषको नारदः श्वेतवायस इव राजधानीम्। कलहकुतूहलं [1]चास्य स्वलक्षणम्। विप्रलम्भवशंवदश्च वीराभिमानी देवो महामोहः। न जाने भवितव्यतावैभवेन किं भविष्यतीति[2]। अथवा यदेव भविष्यति तदेव तथा। आत्मच्छायेव खलु नियतिरलङ्घनीया। अहह महामोहविजयलक्ष्मि, नूनमिदानीं संशयमापन्नासि।

(नेपथ्ये)

छत्रैरुत्तभ्यतां द्यौर्दश झटिति दिशश्चामरैराव्रियन्तां
संवर्तोदन्वदूर्मिध्वनिमुखरमुखस्ताड्यतां वाद्यवर्गः।
काल्यन्तां लोकपालाः क्षणरुचिपटलीविभ्रमैर्हेमवेत्रैः[3]
क्रुद्धः संनह्यतेऽसौ घटयितुमचिरादाहवं मोहवीरः॥ ६ ॥

प्रभाविलासः

श्वेतवायसो महोत्पात इति शाकुनाः। **स्वलक्षणम्**; स्वरूपम्। **छत्रैरिति**। **संवर्तः**; प्रलयः। **उदन्वान्**; समुद्रः॥ ६ ॥

प्रभावली

**तयोरपि** मध्ये त्रिभुवनपरिहासकः श्वेतवायसः अनर्थसूचकः। महामोहस्य **राजधानीं** प्रकृतिमण्डलीम्। कलहाभिलाषः तस्य **स्वलक्षणं** स्वरूपम्। विप्रलम्भपरवशश्च। **भवितव्यता**; विधिः। **यदेव भविष्यति तत्तथैव**; तथाविधमेव। **छत्रैरिति** महामोहसौविदल्लवचनम्। **द्यौः**; आकाशः। **छत्रैः उत्तभ्यताम्**; उत्क्षिप्य ध्रियताम्। **झटिति दश दिशः चामरैः आव्रियन्ताम्**; आवृताः क्रियन्ताम्। **संवर्तोदन्वान्**; प्रलयसमुद्रः। तदूर्मिध्वनिवत् **मुखरमुखः वाद्यवर्गः** वाद्यताम्। **क्षणरुचयः**; विद्युतः। तत्पटलविभ्रम इव विभ्रमो येषां तैः **स्वर्णवेत्रैः** संमर्दाभावाय **लोकपालाः** अपसार्यन्ताम्। इदं सर्वं किमर्थमित्यत

[1] तस्य—ग. [2] इति omitted—छ. [3] वेत्रदण्डैः—क.

अभिनिवेशः—(कर्णं दत्त्वा) किं देवो महामोहः स्वयमेव समराय संनह्यति ? (सभयविषादम्) प्रिये, महदत्याहितम् ।

अमुष्मिन्दिवसे श्वो वा नूनं नियतिवैभवात् ।
अमोहमविवेकं वा जगदेतद्भविष्यति ॥ ७ ॥

तदसावस्माकमवधानस्य प्रधानावसरः । अद्य खलु विविधभोगभाण्डागारलुण्टाकानां संसारकण्टकानां विवेकसैन्यनासीरवीराणामतिधीराणां शमदमादीनां प्रचारमुपरोद्धुं पदवीषु प्रतिपदमयःशङ्कवः प्रतिष्ठापनीयाः । अन्यदपि चैवं समयोचितं सर्वमनुष्ठातव्यम् ।

(इति सभयसंभ्रमं सभार्यो निष्क्रान्तः)

मिश्रविष्कम्भः



सभयेति । उत्पातदर्शनविनाशस्मरणाभ्यां भयविषादौ । अमुष्मिन्निति । अमोहमविवेकं वेति ; " अरावणमरामं वा " इति समाधिः ॥७॥

अयःशङ्कवः ; कालायसशल्यानि ।

मिश्रविष्कम्भः



आह—क्रुद्ध इति । विवेकादिभ्यः क्रुद्धो मोहवीरः तैः अचिरात् आहवं घटयितुं कर्तुं संनह्यते ॥ ६ ॥

मोहादीनां किं भविष्यतीति चिन्तया विषादः । अत्याहितम् ; महाभीतिः ; वर्तत इति शेषः । अमुष्मिन्निति । अद्य वा श्वो वा विधिवशात् अवश्यमिदं जगत् मोहरहितं विवेकरहितं वा भविष्यति ॥ ७ ॥

असौ ; कालः । स्वकृत्यमाह—अद्य खल्वित्यादिना । भाण्डागारम् ; कोशगृहम् । तस्य-लुण्टाकाः ; चोराः । कण्टकाः ; विरोधिनः । नासीरो-

(ततः प्रविशति महामोहो दुर्मतिर्नारदश्च)

**महामोहः**—भगवन्, धन्याः खलु वयमिदानीं संवृत्ताः; यद्भगवतः पितामहस्य प्रियसुतेन चतुर्दशभुवनवैचित्र्यदर्शिना सकललोकपालमौलिमालोपलालितपादपङ्कजेन भगवता [1]संभावितेयं मायाभिधाना मदीया राजधानी।

**नारदः**—राजन्, अनितरसाधारणं भावत्कमाश्चर्यमनुभावमनुभवितारो वयमेव धन्याः।

**महामोहः**—देवि, दीयतामस्मै देवर्षये पाद्यमर्घ्यं मधुपर्कश्च।

**दुर्मतिः**—([2]सविनयमुपसृत्य) भअवं, इदं पज्जं; एदं अग्घं; इमो महुपक्को।

(भगवन्, इदं पाद्यम्; एतदर्घ्यम्; अयं मधुपर्कः)

**प्रभाविलासः**

अथ गर्भसंधेर्नवममङ्गमसंरब्धवचनात्मकमधिबलं निरूपयति—**धन्याः खल्वित्यादि**। तदुक्तम्—"त्रोटकस्यान्यथाभावं ब्रुवतेऽधिबलं

**प्रभावली**

ऽग्रभागः। **नासीरवीराः**; अग्रगामिनः। संचारं निवर्तयितुं, **पदभ्यः** वर्णाश्रमधर्माः, पदे पदे **अयःशङ्कवः** आयसकीलाः, तत्तद्देवतामात्रविषयत्वदेवतान्तरविषयत्वादिबुद्धयः प्रक्षेप्तव्याः।

**मिश्रविष्कम्भः**

---

**धन्याः**; भाग्यवन्तः। **संवृत्ताः**; संजाताः। **मायाभिधाना**; प्रकृतिनामिका। **असाधारणं** भवदीयमाश्चर्यस्वभावम् **अनुभवितारः** अनुभवन्तः। **भअवं**-भगवन्। **इदं पज्जं**-इदं पाद्यम। **एदं अग्घं**-एतदर्घ्यम्। **इमो महुपक्को**-अयं

[1] संमानितेयं—क. [2] सरभसमुपसृत्य—ख.

नारदः—(हस्तेन वारयन्) संपन्नो ममासौ सत्कारः। अद्य खल्वौपवस्तं मया व्रतमङ्गीकृतम्। यावदिह तुलसीवनवासिनीं द्वादशीं संभावयामि, तावन्न किंचित्कुतश्चित्प्रतिगृह्णामि।

महामोहः—भगवन्, अत्यद्भुतमनोहरोऽयं भवत्स्वभावः। तथाहि—

लास्यान्विता च ललिता च गतिस्त्वदीया
मञ्जुस्वना बहुगुणा च विभाति वीणा।
देहश्च दर्शयति चान्द्रमसीमभिख्यां
प्राप्तोऽसि नस्त्वमिह भोगसमृद्धिहेतुः॥ ८॥

## प्रभाविलासः

बुधाः" इति। अद्य खल्विति। औपवस्तम्; उपवासः। अत्रोपवासेनास्पृश्यतोपगूहनप्रतीतेः मीलनं नामालंकारो व्यज्यते, "मीलनं वस्तुना यत्र वस्त्वन्तरनिगूहनम्" इति लक्षणात्। लास्येति। शृङ्गाररसोद्दीपननृत्तगीतादिसमाधिना स्तुतेर्भगवद्गुणानुभवविपरीतं कलयसीत्युक्तम्॥ ८॥

## प्रभावली

मधुपर्कः। संपन्नः; संजात एव। अद्य; एकादश्याम्। औपवस्तं व्रतम्; उपवासव्रतम्। तुलसीवनवासिनीम्; तुलसी अभिमानिदेवता द्वादश्याः। अतः तद्वनवासिनीत्युच्यते। द्वादशीसंभावनं द्वादश्यां तुलसीभिर्हरिसमर्चनम्। कञ्चित् कुतश्चित् किमपि न प्रतिगृह्णामि। स्वतः सात्त्विकं नारदं स्वयं तामसो राजा संभोगहेतुत्वेन वर्णयति—लास्यान्वितेति। भगवन्, त्वदीया गतिः सुभगा नृत्तवती मनोहरा च भवति। वीणा च बहुगुणत्वात् मञ्जुस्वना भवति। देहः चान्द्रमसीमभिख्यां प्रकाशयति। एवं त्वं नः भोगसमृद्धिहेतुः सन् इह प्राप्तोऽसि॥ ८॥

**नारदः**—(स्वगतम्) मूढस्वभावोऽसौ विश्वमपि विपरीतं कल्पयति। हन्त, विजितमस्मन्मनोरथेन। (प्रकाशम्) महाराज, त्वमेव खल्वत्यद्भुतः। यदुत पुष्कर[1]पलाशवन्निर्लेपस्वभावं पुरुषमनन्तान् भोगाननुभावयसि। अपिच,

**प्रत्यूढोत्सेकनम्रप्रतिभटमकुटीपादपीठीसनाथं**
**दुर्दान्तद्वेषिदन्तावलरदनपदं भाति भद्रासनं ते।**
**त्वत्संनाहप्रसङ्गप्रथमदुहितरं भीतिमेवाद्रियन्ते[2]**
**लोकालोकोपरोधप्रतिहतगतयो लोकपालावरोधाः॥ ९॥**

प्रभाविलासः

**प्रत्यूढेति। प्रत्यूढोत्सेकाः;** निरस्तगर्वाः। अत एव **नम्राः**, ते च ते **प्रतिभटाश्च,** तेषां **मकुटयः** किरीटानि, तान्येव **पादपीठी,** तया **सनाथं** सहितम्। **दुर्दान्ताः;** मत्ताः। **रदनाः;** दन्ताः। **प्रथमदुहितरम्;** प्रथमोत्पन्नाम्। **लोकालोकः;** चक्रवालः। **उपरोधः;** प्रतिबन्धः॥ ९॥

**प्रभावली**

मूढस्वभावत्वादिति हेतुगर्भमिदम्। लोकं विपरीतत्वेन भावयति; सात्त्विकं मां राजसत्वेन भावयति। हन्तेति हर्षे। मूढत्वादस्य मम मनोरथः सफलो भविष्यतीत्यर्थः। अहं यद्वदामि तत्सर्वं श्रोष्यतीति भावः। अत्यद्भुतत्वमुपपादयति—**यदुतेति**। अबाश्लेषरहितपुष्करपलाशवत् स्वतोऽलेपस्वभावं प्रकृतिभोगाननुभावयसि। कार्यार्थं महामोहं प्रशंसति—**अपिचेत्यादिना**। भो राजन्, **भद्रासनम्;** सिंहासनम्। **प्रत्यूढोत्सेकाः;** अवरोपितगर्वाः। सेवने **नम्राश्च प्रतिभटाः,** तेषां **मकुट्य** एव **पादपीठ्यः,** ताभिः संहितम्। तन्मकुटान्येव ते सिंहासनपादपीठानीत्यर्थः। दुर्दान्ता ये **द्वेषिणां** दन्तावलाः, **तद्दन्तानामास्पदं,** तैरेव **कृतत्वात्**। किंच, **लोकपालानामवरोधा** महिष्यः, **त्वत्संनाहप्रसङ्गेन लोकालोकपर्वतस्य उपरोधेन** ततो बहिर्गन्तुमशक्यत्वात् **प्रतिहतगतयः** **सन्तः संनाहप्रसङ्गस्य प्रथमपुत्रीम्;** प्रथमं भयं जायते, पश्चात्पलायनोद्योगादिकमिति प्रथमजातां **भीतिमेवाद्रियन्ते**। सदा भीतिं न परित्यजतीत्यर्थः॥ ९॥

[1] पलाशवदलेप—ग. [2] आश्रयन्ते—छ.

(नेपथ्ये)

भोः भोः प्रतिहारिन्, अयमहमागतो देवस्य महामोहद्रुहो विवेकस्य दृष्टप्रत्ययो नाम दूतः। आवेद्यतां महाराजाय।

(प्रविश्य)

प्रतिहारी—देव, प्रतिरुद्धप्रवेशस्तिष्ठति बाह्यद्वारे विवेकदूतः।

**महामोहः**—प्रवेश्यताम्।

**प्रतिहारी**—यदादिशति देवः।

(इति निष्क्रान्तः)

(ततः प्रविशति दूतः)

दूतः—(मोहसमीपे नारदमवलोक्य स्वगतम्) अयमसौ चण्डालसदनवापिकायां चन्द्र इव प्रतिबिम्बितः समीक्ष्यते देवर्षिविप्रलम्भचक्रवर्ती। अस्तु; असावपि साहायकमाचरिष्यति।

नरदः—(दूरतो दूतं निर्दिशन्) महाराज,

[1]चलघुरुघुरुमालाश्लेषवाचालजङ्घः
शर इव निरपायश्चारुचण्डातकश्रीः।
अयमिह रुचिराभिः स्रग्भिरुन्नद्धमौलि-
स्त्वरितमुपसमेति स्वेदभिन्नः सुगन्धिः॥ १०॥

**प्रभाविलासः**

चलेति। घुरुघुरवः; सूक्ष्मघण्टाः। चण्डातकम्; अर्धोरुकम्॥१०॥

**प्रभावली**

अथ विवेकदूतागमनं प्रस्तौति—**नेपथ्ये भो भो** इत्यादि। **प्रतिहारिन्**; कञ्चुकिन्। **दृष्टप्रत्ययः**; दृष्टविषयप्रत्ययः। प्रतिबिम्बितश्चन्द्र इव समीक्ष्यते। **विप्रलम्भचक्रवर्ती**; वञ्चनायामद्वितीयः। **साहायकम्**; सहायकृत्यं चरिष्यति। दूत आगच्छतीत्याह—**चलेति**। द्रुतगमनवशात् **चलायाः घुरुघुरुमालायाः**

[1] चलदुरुघुरु—छ.

तदयं कोऽसाविति विचारणीयः, उपचरणीयश्च ।

महामोहः—आस्तामुपचारः; विचारणीयस्तावत् ।

दूतः—(उपसृत्य) इदं महाराजविवेकस्य शासनम् ।

(इति भूर्जपत्रं दर्शयति)

महामोहः—(अपवार्य) किं महामोहोऽपि केनचिच्छासनीयः?

नारदः—महाराज, किं परीक्षया परिजनोपचाराणाम्?

महामोहः—भद्र, असंस्तुतयुष्मद्द्वीपलिपयो वयम्; तत्स्वयमेव वाचय ।

दूतः—(उद्घाट्य वाचयति) 'स्वस्ति श्रीश्वेतद्वीपविहारमण्डपिकामातस्थुषा विबुधमहितवृत्तिना महाराजविवेकेन महामोहाय संदिश्यते । प्रसिद्धं खल्विदम्—"नीचाः कलहमिच्छन्ति संधिमिच्छन्ति साधवः" इति' ।

महामोहः—किमतः? स्वनैच्यमेवैतेन सूचयति ।

**प्रभावली**

जङ्घादेशे दूतैर्बध्यमानायाः आश्लेषेण वाचाले शब्दायमाने जङ्घे यस्य सः । **निरपायः**; अपायो गतिमान्द्यम् । बाण इव शीघ्रगतिः । **चण्डातकम्**; अर्धोरुकम् । चार्वी चण्डातकस्य श्रीर्यस्य । स्वेदैः संबद्धः । ऊर्ध्वमालित्वात् सुगन्धिः । **उपसमेति**; आगच्छति ॥ १० ॥

**भूर्जपत्रम्**; भूर्जो नाम तरुः, तस्य पत्रे काकदवत् मध्या शासनानि लिखन्ति । **अपवार्य**; अनादृत्य । **परिजनाः**; भृत्याः । ते स्वामिन्युपचारवाचं प्रयुञ्जते । तत्र किं परीक्षया? **असंस्तुताः**; अपरिचिताः । **युष्मद्द्वीपशब्देन** श्वेतद्वीपादय उच्यन्ते । **उद्घाट्य**; कोशात् भूर्जपत्रमुद्धृत्य । **श्वेतद्वीप** एव **विहारमण्डपिका**, परमपदस्य विवेकराजधानीत्वात् । **विबुधैः** देवैः पूजितवृत्तिना । महाराजश्चासौ विवेकश्च, तेन आज्ञाप्यते । **इदम्**; वक्ष्यमाणम् । कलहो नीचाभिमतः । त्वमपि कलहमिच्छसि । साधूनामयं मार्गो न भवतीति । **किमतः**; किमनेन । एतेन; 'नीचाः कलहमिच्छन्ति' इत्यनेन । स्वस्यैव नीचत्वं

दुर्मतिः—भद्द, तदो तदो ।

(भद्र, ततस्ततः ।)

दूतः—(वाचयति) ‘ततश्च ;

दीयन्तामिह दक्षिणापथभुवो यावत्कलेरत्यय-
स्तत्र स्थावरतिर्यगंशमखिलं भुङ्क्ष्व त्वमप्यक्षतः ।
इत्थं नाम कुलक्षयोपशमनोपाये त्वया तस्थुषा
संधिः सत्यगिरामतुच्छमनसामच्छात्मनामस्तु नः’ ॥ ११ ॥

महामोहः—(सहस्तास्फालनं विहस्य) तदिदं सहस्रकिरणस्य तेजोवरदानं, वैश्रवणस्य वा किमप्यैश्वर्यप्रदानम् ; यदाजानसिद्ध-

## प्रभाविलासः

**असंस्तुताः**; अपरिचिताः । **दीयन्तामिति** । संधेः प्रत्यावृत्तिपरिहाराय सत्यगिरामित्युक्तम् । वाक्सत्यतामात्रव्यावृत्तये **अतुच्छमनसामि**त्युक्तिः । उभयत्र हेतुमाह—**अतुच्छात्मनामिति** ॥ ११ ॥

## प्रभावली

प्रकाशते । स्वयमेव नीचत्वात् कलहमिच्छति । **भद्द**-भद्र । **तदो तदो**-ततस्ततः । उपरि वाचयेत्यर्थः । **दीयन्तामिति** । **इह**; भूमौ । **यावत् कलेरत्ययः**; कलियुगावसानपर्यन्तम् । **दक्षिणापथभुवः**; भूशब्देन तत्स्था जना लक्ष्यन्ते । मम दीयन्ताम् । **तत्र**; दक्षिणापथे । तिर्यक्स्थावररूपमंशमखिलं कलियुगेऽपि **अक्षतस्त्वं भुङ्क्ष्व** । मनुष्यरूपमंशं मम विसृज । कृतयुगादिषु सर्वं मदीयमेव कलियुगे त्वमाक्रम्यानुभवसि । **इत्थम्**; मयोक्तप्रकारेण । **अस्मत्कुलक्षयोपशमनोपाये** मयोक्ते **तस्थुषा त्वया** सत्यवाचां **नः संधिरस्तु** । अन्यथा तत्फलं त्वमेवानुभविष्यसीति भावः ॥ ११ ॥

**तदिदम्**; मद्राज्यभूतदक्षिणापथे तिर्यक्स्थावररूपांशदानम् । **सूर्यस्य** तेजोवरदानवदपहास्यम् । सर्वधनाध्यक्षस्य कुबेरस्य कतिपयधनांशप्रदानवदिदं,

निरवधिकवैभवस्य मे विक्लबेन विवेकेन विभूतिविभागभोगलेशाभ्यनुज्ञानम् ।

**नारदः**—(सान्तर्हासं स्वगतम्) हन्त, समापतिता मम चक्षुषोः पारणा । सर्वथा चाहं विवेकमहामोहयोः संधिं प्रतिरोत्स्यामि । (मूर्धानमान्दोलयित्वा विषादमभिनयन् प्रकाशम्) अहह,

**भ्रूभङ्गेषु पृथग्विधेषु बलिनो यस्यायतन्ते जग-**
**न्त्यासंसारमलङ्घ्यशासनगतेराजन्म धीरात्मनः ।**
**ब्रह्मस्तम्बभटस्य मुक्तजनकद्रोहस्य मोहस्य ते**
**तस्यासीदितरेण संधिवचनं किं कस्य वा कथ्यते ॥ १२ ॥**

**प्रभाविलासः**

**पारणा**; तृप्तिः । **भ्रूभङ्गेष्विति** । पृथग्विधेषु विकृतेषु । **आयतन्ते**; अधीना भवन्ति ॥ १२ ॥

**प्रभावली**

यन्निरवधिकैश्वर्यस्य मे **विक्लबेन** कातरेण **विभूतिविभागे** स्थावरतिर्यगंशे मम **भोगाभ्यनुज्ञानम्** । **चक्षुषोः पारणा**; समरसंभ्रमः । **प्रतिरोत्स्यामि**; विहनिष्यामि । **आन्दोलयित्वा**; चालयित्वा । अहहेति शुचमनुकुर्वन् संधिं विहन्तुमुपक्रमते—**भ्रूभङ्गेष्विति** । **बलिनः**; बलवतः । **यस्य**; तव । **पृथग्विधेषु**; नानाविधेषु । **भ्रूभङ्गेषु**; भ्रूविक्षेपेषु । **जगन्ति**; ब्रह्मादयः । **आयतन्ते**; अधीना भवन्ति । संसरणपर्यन्तम् अलङ्घ्या शासनस्य गतिर्यस्य । जन्मनः प्रभृति धीरमनस्कस्य । **ब्रह्मस्तम्बः**; जगत्त्रयम्; तत्र भटशब्दवाच्यस्य । अन्येषां भटशब्दवाच्यत्वमौपचारिकमिति भावः । ब्रह्मा प्रजापतिः स्तम्बस्थानीयो यस्य जगतः, तत् ब्रह्मस्तम्बम् । **जनकस्य** पुरुषस्य विषये **द्रोहः** जिघांसा ऐश्वर्यनिरोधः, स मुक्तो येन सः । अनेन विवेकात् व्यावृत्तिः । विवेकस्य पितुः पुरुषस्यैश्वर्यानुभवविरोधित्वात् । मोहवीरस्य भ्रूभङ्गेष्वायतन्त इत्यन्वयः । **तस्य**; तादृशस्य ते । **इतरेण**; केनचित्, विवेकेनेत्यर्थः । **संधिवचनम्**; समाधानविषयं वचः । अभूत् । एवं सति **कस्य किं वा कथ्यते** ॥ १२ ॥

दुर्मतिः—अय्यउत्त, एव्वं मे राअकज्जं पडिभाइ—संधिव्ववदेसेण अम्हसआसं [1]आसाइज्जउ विवेओ। ता[2] जीवग्गाहं गहिऊण दिढपीडणिज्जो होज्ज।

(आर्यपुत्र, एवं मे राजकार्यं प्रतिभाति—संधिव्यपदेशेनास्मत्सकाशमासाद्यतां विवेकः। तत् जीवग्राहं गृहीत्वा दृढपीडनीयो भवेत्।)

महामोहः—(सोच्चैर्हासम्) मुग्धे, स्वप्नेऽप्येवंविधं [3]कातरवचनं मा वोचः। नन्वहं महामोहः। किमिदानीमन्यमेव[4]मामभिमन्यसे। अथवा न हि कदाचिदपि परिस्फुरन्ति प्रमदाजनानां राजकार्यगतयः। प्रिये, शृणु चैतन्महामोहस्य वीरव्रतम्—

क्रकचैः कृत्तदेहोऽपि दीपितोऽपि दवाग्निना।
न सूच्यग्रं प्रदास्यामि न संधास्यामि केनचित्॥ १३॥

प्रभाविलासः

क्रकचैरिति। अत्र दुर्योधनसमाधिः॥ १३॥

प्रभावली

एव्वं-एवम्। मे-मे। राअकज्जं-राजकार्यम्। पडिभाइ-प्रतिभाति। संधिव्ववदेसेण-संधिव्यपदेशेन। अम्हसआसं-अस्मत्सकाशम्। आसाइज्जउ आसाद्यताम्। विवेओ-विवेकः। ता-तत्। जीवग्गाहं-जीवग्राहम्। गहिऊण-गृहीत्वा। दिढपीडणिज्जो-दृढपीडनीयः। होज्ज-भवेत्। कातरवचनम्; ननु तस्य मे कुतो भीतिरिति भावः। अन्यमेव; महामोहादन्यं पुरुषमेव। गतयः; प्रवृत्तयः। एतत्; वक्ष्यमाणम्। क्रकचैरिति। सूच्यग्रम्; सूच्यग्रमात्रं वस्तु क्षेत्रं वा। केनचिदपि न संधिं करिष्यामि॥ १३॥

[1] आसज्जउ—क. [2] तं जीव—क.
[3] कातर्यवचनं—क. [4] अन्यमिव—क.

अथवा,

**नाहमस्मि महामोहो न च विश्वं जितं मया ।**
**विभूतिरमिता यस्य विभक्तव्यपदास्पदम् ॥ १४ ॥**

नारदः—(स्वगतम्) कलहकौतुकिनामस्माकं तपांसि परिणमन्ति । ननु स्वात्मावधिरियं महामोहस्य शवमुष्टिवद् गृहीतग्राहिता । (प्रकाशम्) देवि दुर्मते, परमकृत्यमध्यवसितं प्रियतमेन ते । अथ तु निर्धारणीयः संदेशवाक्यशेषः ।

महामोहः—(अनादरातिशयं नाटयन्) किं नश्छिन्नम्? शृणुमस्तावत् । दूत, ततस्ततः ।

दूतः—(वाचयति) 'ततश्च यदि नः संधिः, यथास्थानं पुनरवस्थास्यामहे । यदि विग्रहः, तदा तु

### प्रभाविलासः

**नाहमिति** । **विभूतिः**; ऐश्वर्यम् ॥ १४ ॥

### प्रभावली

स्वात्मानं निन्दति—**नाहमिति** । यस्य; मम । **अमिता विभूतिः**; ब्रह्माण्डम् । विभक्तव्यमिति पदस्य वाच्यमभवत् । यद्वा विभक्तव्यस्थानस्यास्पदमाश्रयः अभवत् । **सोऽहमिदानीं महामोह** एव न भवामि' । **विश्वं च मया जितमपि न** । कृच्छ्रे जातोऽस्मीति भावः ॥ १४ ॥

**स्वात्मावधिः**; स्वरूपावस्थितिपर्यन्ता । **प्रियतमेन**; महामोहेन । **परमकृत्यम्**; श्रेष्ठमेव कृत्यं निश्चितम् । परम् अकृत्यमिति गूढोऽर्थः । का नो हानिः? तावदिति वाक्यालंकारे । जगदमोहवर्गं करिष्यति विवेक इत्याह—

निष्कामक्रोधलोभं निपतितकुहनादम्भदर्पाभिमानं
निर्धूतेर्ष्याभ्यसूयामदविहृति जहन्मत्सरस्तम्भजाड्यम् ।
अद्य श्वो वा विदध्यादपि चरमयुगे विश्वमक्षुद्रसत्त्वं
वेलातीतप्रसर्पन्मधुमथनदयादत्तसेको विवेकः' ॥ १५ ॥

महामोहः—(सरोषसंरम्भं दन्तान् कटकटापयन्) भगवन्, आः कष्टम् । अश्रुतपूर्वमिदं श्रुतम् । वाचिकशेषस्तु भवतु वा, मा वा । कः कोऽत्र भोः ? हन्यतामयं वार्ताहरः ।

नारदः—राजन्, दूतः किल ।

महामोहः—तर्हि व्यङ्गीकृत्य निष्कास्यताम्[1] ।

### प्रभाविलासः

**निष्कामेति** । जाड्यस्तम्भयोरवस्थाभेदेन भेदः,

"हर्षाद्रागाद्भयाद् दुःखाद् द्वेषादेर्विस्मयाद्रुषः ।
विक्षेपाच्च भवेत् स्तम्भोऽनुभावाज्जाड्यमुच्यते ॥"

इत्युक्तत्वात् ॥ १५ ॥

**दन्तानिति**; रावणसमाधिः । "दन्तान् कटकटाय्य च" इति

### प्रभावली

**निष्कामेति** । वेलातीतं यथा तथा प्रसर्पन्ती या मधुमथनस्य दया, तया दत्ताभिषेको विवेकः चरमयुगेऽपि इदं विश्वं कामक्रोधलोभकुहनादर्पदम्भाभिमानेर्ष्याभ्यसूयामत्सरादिरहितं विदध्यात् । नात्र संशय ति भावः । निर्धूता ईर्ष्याभ्यसूययोर्मदेन विहृतिः यस्मात् । जहत् मत्सरः स्तम्भः जाड्यं च यस्मिन् । **अक्षुद्रसत्त्वम्**; मिश्रसत्त्वरहितम् ॥ १९ ॥

**कटकटापयन्**; कटकटारवविशिष्टान् कुर्वन् । पूर्वमश्रुतम् । **वार्ताहरः**;

[1] अपसार्यतामिति प्रभावलीपाठः

**दूतः**—स्वयमहमपसर्पामि। (इति तिरस्करिणीमास्थाय स्वगतम्) विदितवृत्तान्तशेषः प्रतिगमिष्यामि।

**नारदः**—(अनाहतदृष्टिरवलोकयन् इङ्गितेन दूतमभिनन्दति)

**महामोहः**—(सक्रोधनिर्वेदं समधिकताम्राक्षः पादेन पादपीठीमाहत्य दन्तेनाधरमापीडयन्)

**धिग्ब्रह्माण्डकरण्डगह्वरकुटीकर्पूरपूरं यशो**
**धिक्प्रह्वत्रिदशेन्द्रफालफलकस्पष्टोपमृष्टं पदम्।**
**धिग्दोर्विक्रममद्भुतं मम पुनर्धिग्वादमेवास्तु धिक्**
**सोढा वैरिकथामपि स्वयमहं नीचाय मह्यं नमः॥ १६॥**

### प्रभाविलासः

ह्युक्तम्। **व्यङ्गीकृत्येति**; आञ्जनेयसमाधिः। **धिगिति**। **करण्डम्**; दन्तादिनिर्मितं कर्पूरपूरकं वस्तु। **कुटी**; क्षुद्रगृहम्। **उपमृष्टम्**; स्पृष्टम्। **धिग्वादः**; धिगिति वचनम्॥ १६॥

### प्रभावली

दूतः। **तर्हि व्यङ्गीकृत्यापसार्यताम्**; विद्राव्यताम्। तिरस्करिण्यामन्तर्धाय अप्रतिहतदृष्टिः अवलोकयन्। **इङ्गितेन**; नयनादिचेष्टया। **निर्वेदः**; वैराग्यम्। **धिगिति**। **ब्रह्माण्डमेव करण्डम्** दन्तादिनिर्मितचिरण्टी, तस्य **गह्वरम्** अन्तःप्रदेशः, स एव **कुटी** गृहं, तत्र कर्पूराख्यं यत्पूरणद्रव्यं मम **यशः**, तत् **धिक्**। **प्रह्वानां त्रिदशेन्द्राणां** यानि **फालफलकानि**, तैः **स्पष्टं** यथा तथा **उपमृष्टम्** अपगतरजः क्रियमाणं मम पादकमलं धिक्। **अद्भुतं दोर्विक्रमं च** धिक्। मम पुनः योऽयं धिगिति वादः, तमपि धिक्। तद्वादस्यापि नाहमर्हं इत्यर्थः। **अहमपि**; किमप्यसहमानोऽपि। **स्वयं वैरिकथां** विवेकप्रसङ्गं **सोढास्मि**। अतो **नीचाय मह्यं नमः**॥ १६॥

(विचिन्त्य सनिश्वासम्) प्रिये, विपक्षप्रतार्यमाणं पितर-मनुचिन्त्य भृशं दूये ।

गतजलसेतुबन्धगजयूथपशौचकथा-
गगनतलानुलेपगणिकापरिणीतिनिभैः ।
व्यथितमतिर्विवेकहतकस्य विचारशतैः
कुलपतिरद्य नः कथमसौ भविता पुरुषः ॥ १७ ॥

नारदः—महाराज, किमत्र चिन्त्यते ? न कुतश्चिदप्ययमन्यथा भविष्यति ।

प्रभाविलासः

**गतजलेति** । बहुलतरव्यसनाभिभवात्पूर्वमेव मोचनीयः पुरुषः । अतिक्रान्तकाले स्वयमारम्भो निरर्थक इत्याशयेनाह—**गतजलेति** । अनभिसंहितकर्मादिना मनसो नैर्मल्येऽपि कर्मशक्तिमहिम्ना पुनर्दुरितधूसरितमेव मनो भवेदित्याशयेनाह—**गजयूथपेति** । अनादिभोगवासनावशेन भोगनिवृत्तौ रुचिरप्यसंभावितेत्याशयेनाह—**गगनतलेति** । चिरं विविधविषयगुणाकृष्टचेतसः सर्वव्यावृत्त्यैकत्र नियमनं हासास्पदमित्याह—**गणिकेति** । **कथं भविता**; भोगमोक्षपरिभ्रष्टः स्यादित्यर्थः ॥ १७ ॥

प्रभावली

**विपक्षैः**; विवेकादिभिः । **प्रतार्यमाणम्**; **वञ्च्यमानम्** । **गतजलेति** । गते जले सेतुबन्धः । गजयूथपविषयशौचस्य प्रसङ्गः । गगनतले योऽनुलेपः, तस्य गणिकाविवाहस्य च सदृशैः । निष्प्रयोजनैरित्यर्थः । **विवेकहतकस्य विचारशतैः**; निष्प्रयोजनैः आलोचनैः । **व्यथितमतिः नः कुलपतिः पुरुषः अद्य कथं भविता**; कामवस्थां गमिष्यति ॥ १७ ॥

**अयं पुरुषः**; **न कुतश्चिदप्यन्यथा भविष्यति**; अन्यप्रकारो न भवति ।

**महामोहः**—(सक्रोधकम्पम्) भगवन्, पापीयान् खल्वसावशेष[1]भोगनिर्मूलनोद्यतो विवेकहतकः। (आकाशे लक्ष्यं बद्ध्वा) आः पाप दुराचार विश्वविद्वेषदूषित मूढ विवेकापशद,

**[2]मोघारम्भक्षपितमनसा मोहवीरस्त्रिलोकी-**
**[3]वेलाभेदस्वरसरसिको विभ्रमप्राणमित्रम्।**
**ब्रह्मस्तम्बप्रसृतनिगमस्तोमशाखाविभङ्ग-**
**क्रीडाचण्डः कृपण भवता किं न दृष्टः श्रुतो वा॥ १८॥**

**प्रभाविलासः**

**मोघेति**। **त्रिलोक्या वेला**; वर्णाश्रमादिमर्यादा, तस्या **भेदे** भङ्गे स्वरसरसिकः। **विभ्रमः** अन्यथाख्यातिः। **ब्रह्मस्तम्बे** चतुर्मुखे **प्रसृतानां** नारायणोपदिष्टानाम्, "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः। निगमस्तोमानां वेदजालानामेव शाखानां विभङ्गक्रीडायां चण्डः॥ १८॥

**प्रभावली**

त्वत्तोऽप्ययं प्रतारयितुं न शक्यत इति भावः। अतिपापिष्ठः **पुरुषस्याशेषभोगनिर्मूलने** उद्युक्तः। **हतकः**; अपशदः। **लक्ष्यं बद्ध्वा**; विवेकस्थाने किमपि परिकल्प्य, तृणमन्तरतः कृत्वेति यावत्। सर्वेभ्यो विद्वेषेण दूषित। **त्रिलोक्याः** या **वेला** वेदोक्तविधिनिषेधव्यवस्था, तस्या **भङ्गे** स्वत एव **रसिकः** प्रीतिमान्। **विभ्रमः** विशेषभ्रमः विपरीतभ्रमः, तस्य प्राणप्रदमित्रम्। **ब्रह्मस्तम्बे** जगति **प्रसृताः** व्याप्ताः ये वेदाः, तेषां स्तोमस्य याः शाखाः; तासां विभङ्ग एव क्रीडा; तत्र चण्डः। महामोहवीरः **मोघारम्भक्षपितमनसा भवता किं न दृष्टः श्रुतो वा**। वेदशाखाभङ्गो नाम तदप्रामाण्यबुद्धिजननम्। न दृष्टः, न श्रुतश्च; अतस्त्वया हीनेन संधिप्रसङ्गः क्रियत इति भावः॥ १८॥

[1] अशेषजन—ग.
[2] मोहारम्भक्षुभित—ग.
[3] वेलाभङ्गेति प्रभावलीपाठः

**नारदः**—महाराज, न श्रुतं न दृष्टं वा केन भवदपदानम्? आसंसारं प्रसिद्धवैभवः खल्वसि।

**महामोहः**—(सक्रोधम्) भगवन्, इदमपि भवन्तमनुस्मारयामि—

पुरा किल निराकृतस्वपरभेदनिर्धारणे
रणे विहरता मया रदनयन्त्रितश्चन्द्रमाः।
अपर्वणि सुपर्वणामधिपतेः समक्षं क्षणा-
दरुंतुदविधुंतुदग्रसनवेदनामन्वभूत्॥ १९॥

प्रभाविलासः

**पुरेति**। निराकृतं **स्वपरयोः** योधप्रतिरोधयोः **भेदनिर्धारणं** भेदनिर्णयः यत्र तत्र। **रणे**; युद्धे। शूर्पणखापतिहनने रावणसमाधिः। **रदनयन्त्रितः**; दन्तखादितः। **अपर्वणि**; अपूर्णमासे। **सुपर्वणां** देवानाम्, **अधिपतेः** इन्द्रस्य। **समक्षम्**; सोऽप्यकिंचित्कर इति भावः। **अरुंतुदेति** ग्रसनविशेषणम्। एवं च योजना द्रष्टव्या—पुरा किल कृतयुगे निराकृतं स्वपरयोः इन्द्राहल्ययोः भेदनिर्धारणं यस्मिन्। अनेन सुखपारवश्योक्तिः। रणे संभोगे, "त्यजति युगलचिन्तामङ्गयोरन्तरात्मा" इत्युक्तत्वात्। मयेति सुपर्वणामधिपतेः समक्षमिति च "मामुपास्स्व" इत्यादिना तत्त्वज्ञानितया प्रसिद्धस्य शतक्रतोरनिष्टोदर्के पारदार्यकर्मणि प्रवृत्तेर्मोहकार्यतया मोहस्य प्राधान्येनेन्द्रस्य साक्षितया निर्देशः। चन्द्रमा

प्रभावली

**आसंसारम्**; आप्रकृतिमण्डलम्। **पुरेति**। स्वेषां परेभ्यो भेदः स्वपरभेदः, तस्य **निर्धारणं निराकृतं** यस्मिन् तस्मिन् **रणे**। **पुरा मया रदनयन्त्रितः**; रदनशब्देन कामो द्योत्यते; तेन यन्त्रितः बद्धः चन्द्रमाः। **सुपर्वणामधिपतिः**; इन्द्रः। तत्समक्षम्। विधुंतुदस्तु इन्द्रसंनिधौ बिभेतीति भावः। **अरुंतुदः**

**नारदः**—(सान्तर्हासं स्वगतम्) किमसावुन्मत्तदशां प्राप्तः? यदयं जरद्गवादिवाक्यवदपार्थं किमपि जल्पति; उपस्थितमहाविपत्तिरपि दुर्मतिमेव पुरस्कृत्य शृङ्गारगर्ते निमज्जति। (प्रकाशम्) महाराज, सोऽयमिदानीं पश्चिमे पारावारे सांध्यमिव नियमविधिं चिकीर्षुरम्बरतलादवलम्बते मयूखमाली। तदहं साधयामि कालोचितकर्मणे।

(इति निष्क्रान्तः)

**प्रभाविलासः**

इति मुखचन्द्रो लक्ष्यते; तत्राप्यधरमेवौचित्यात्। अपर्वणीति ऋत्वादिविशेषानादरेण कालमात्रमुच्यते। मुनिवेषधारिणेन्द्रेणाहल्यां प्रति "ऋतुकालं प्रतीक्षन्ते नार्थिनः सुसमाहिते" इत्यभिधानात्। अरुंतुदेति गाढपीडनं लक्षितम् ॥ १९ ॥

**जरद्गवादीति**। अत्र पूर्वयोजनायां मोहेन चन्द्रग्रहणस्याप्रामाणिकतयातिशयोक्त्यादावनन्तर्भावात् जरद्गवादिवाक्यवदनर्थकत्वम्। उत्तरयोजनायां शृङ्गारप्रधानत्वात् तन्निमज्जनं चेति विवेकः। जरद्गवपदेन

"जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मद्रकाणि।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घः॥"

इति श्लोक उपात्तः। आदिपदेन "शङ्खः कदल्यां कदली च भेर्यां भेर्यां महच्चाविरभूद्विमानम्" इति ग्राह्यम्। **प्रजापतिपरिभुक्तपूर्वेति;**

**प्रभावली**

पीडाकरः यो राहुः; तस्य **ग्रसने** या वेदना तामन्वभूत्। चन्द्रो मदान्धो बृहस्पतेर्भार्यामभिससारेति भावः ॥ १९ ॥

उपस्थिता विपत्तिर्यस्य सः। **शृङ्गारगर्ते**; जलगर्ते। **पारावारे**; समुद्रे। **सांध्यनियमविधिः**; संध्योपासनम्। **कालोचितकर्मणे**; सांध्यं कर्म

**महामोहः**—प्रिये, संप्रति संसारसंततिनिदानभूतसंभोगारम्भसमयसूचिका प्रजापतिपरिभुक्तपूर्वा प्रवर्तते पितृप्रसूरियमपरा संध्या। इह हि—

**क्षीयन्ते सवितुः क्षणं क्षितिधरैरुत्तंसिता दीप्तयः**
**श्रूयन्ते यजतां तृतीयसवनब्रह्मप्रणादोर्मयः।**
**लीयन्ते पतगाः कुलायतरुषु प्रत्युद्व्रजत्पोतकाः**
**स्त्यायन्ते च तमश्छटास्तत इतः श्रीकण्ठकण्ठत्विषः ॥ २० ॥**

**प्रभाविलासः**

इदमत्र स्मारितम्—

"सृष्ट्वा पितॄनुत्ससर्ज तनुं तामपि स प्रभुः।
सा चोत्सृष्टाभवत्संध्या दिननक्तान्तरस्थिता ॥"

इति। **क्षीयन्त इति। उत्तंसिताः**; शिरोऽवतंसीकृताः। **ब्रह्म**; वेदमातृकाः। **कुलायः**; नीडः। **प्रत्युद्व्रजत्पोतकाः**; प्रत्युद्गच्छदर्भकाः ॥ २० ॥

**प्रभावली**

कर्तुमित्यर्थः। **साधयामि**; गच्छामि। पूर्वं प्रजापतिना परिभुक्ता स्वीकृता "यास्य सा तनूरासीत। तामपाहत। सोऽहोरात्रयोः संधिरभवत्" इत्यादेः। **पितृप्रसूः**; सायं संध्या। "सोऽसुरान् दृष्ट्वा पितेवामन्यत। तदनु पितॄनसृजत" इत्यादेः। संध्यां वर्णयति—**इह हीति**। क्षणमात्रं पर्वतैः शिरोभूषणीकृताः सवितृरश्मयः **क्षीयन्ते**। क्रमेण **यजतां** यज्वनां **तृतीयसवनसंबन्धिनः** **वेद**घोषो**र्मयः**; ऊर्मिशब्देन घोषस्योच्चैस्तरत्वं लक्ष्यते। **श्रूयन्ते। कुलायतरुषु**; नीडवृक्षेषु। **प्रत्युद्व्रजत्पोतकाः**; प्रत्युद्व्रजन्तः अर्भकाः येषां ते। **पतगाः** **लीयन्ते। श्रीकण्ठस्य** रुद्रस्य **कण्ठवत् त्विषो** यासां ताः। **तमश्छटा** **इतस्ततः स्त्यायन्ते च**; सान्द्रा भवन्ति ॥ २० ॥

अपिच,

कादम्बन्ति जलाशयेषु विततः कालाम्बुदन्त्यम्बरे
मातङ्गन्ति महीधरेषु मधुपस्तोमन्ति मल्लीषु च ।
स्पृष्ट्वा निश्चिनु पाणिना कुवलयापीडन्ति ते कुन्तले
धम्मिल्लन्ति दिशामुखेषु[1] सुमुखि स्त्यानास्तमःपङ्क्तयः ॥२१॥

दुर्मतिः—अय्यउत्त, पबलतमेहिं विवेअप्पमुहेहिं पक्कंदजुद्धस्स तुह संभोअसमअवण्णणं किं अणएण पवुत्तं? अह वा अइधीरत्तणेण?

(आर्युपुत्र, प्रबलतमैर्विवेकप्रमुखैः प्रकान्तयुद्धस्य तव संभोगसमयवर्णनं किमनयेन प्रवृत्तम्? अथवा अतिधीरत्वेन?)

**प्रभाविलासः**

**कादम्बन्तीति**। **कादम्बः**; कलहंसः। कादम्बा इवाचरन्ति। **स्त्यानाः**; संहताः। "स्त्यै ष्ट्यै शब्दसंघातयोः" इति धातुः। अत्र प्रत्ययद्योत्योपमाभेदः ॥ २१ ॥

**प्रभावली**

पुनर्भङ्ग्यन्तरेण तमश्छटां वर्णयति—**कादम्बन्तीति**। **जलाशयेषु**; तटाकेषु। **विततः** कलहंसवदाचरन्ति "कादम्बः कलहंसः स्यात्" इत्यमरः। **अम्बरे** विततः कालाम्बुदवदाचरन्ति। **महीधरेषु** विततः गजवदाचरन्ति। **मल्लीकुसुमेषु** विततः मधुपस्तोमः भृङ्गसमूहः, स इवाचरन्ति। तव केशपाशे नीलोत्पलस्रजन्ति। तत्पाणिना **स्पृष्ट्वा निश्चिनु**; अवधारय। **निशामुखे**; प्रदोषे; निशाख्यस्त्रीमुख इत्यर्थान्तरम्। कबरीवाचरन्ति। हे सुमुखि, **स्त्यानाः** सान्द्राः **तमःपङ्क्तयः** तमोविततयः ॥ २१ ॥

**पबलतमेहिं**-प्रबलतमैः। **विवेअप्पमुहेहिं**-विवेकप्रमुखैः। **पक्कंतजुद्धस्स**-प्रक्रान्तयुद्धस्य। **तुह**-तव। **संभोअसमअवण्णणं**-संभोगसमयवर्णनम्। **अणएण पवुत्तं**-अनयेन प्रमादतः प्रवृत्तम्। **अहवा**-अथवा। **अइधीरत्तणेण**-अतिधीर-

[1] निशामुखे च—क.

**महामोहः**—अयि महामोहपत्नि[1], किं बिभेति भवती कृपणाद्विवेकहतकात्? किं न वेद?

**वश्यं तिष्ठति षड्विधं मम बलं मायाविनः सैनिका**
**मोहः सोऽहमभङ्गुरो मुनिमनःप्रक्षोभदक्षोदयः।**
**आस्तामन्यदनङ्गतन्त्रनिपुणैरङ्गीकृतः सांप्रतं**
**सेतुर्घोरविवेकसिन्धुतरणे शृङ्गारदेवार्चनम् ॥ २२ ॥**
**अथवा किमिहान्येन दैवतेनार्चितेन मे।**
**त्वामेव शरणं यामि कामतन्त्राधिदेवताम् ॥ २३ ॥**

**प्रभाविलासः**

**वश्यमिति। षड्विधम्;** मौलादि। तदुक्तं सोमेश्वरेण—
"मौलं भृत्यं तथा मैत्रं तार्णमाटविकं बलम्।
आमित्रमपरं षष्ठं सप्तमं नोपलभ्यते ॥"

इति। **शृङ्गारदेवः;** कामः। तदुक्तम्—"शृङ्गारदेवतामाहुरपरे मकरध्वजम्" इति ॥ २२; २३ ॥

**प्रभावली**

त्वेन। **वश्यमिति। वश्यम्;** वशीभूतम्। **षड्विधम्;** षट्प्रकारं मौलादिकं बलम्। **सैनिकाः;** सेनायां समवेताः पुरुषाः कामादयः। **मायाविनः;** माया कापट्यं वञ्चनं, तत्र समर्थाः। **अभङ्गुरः;** भङ्गमप्राप्तः। **प्रक्षोभे दक्षः उदयः** यस्य सः। **अन्यत्** सर्वं तिष्ठतु। **अनङ्गतन्त्रम्;** कामशास्त्रम्। **शृङ्गारदेवः;** कामः। **तदर्चनम्;** संभोगः। **घोरः** विवेक एव **सिन्धुः** समुद्रः, तस्य **तरणे सेतुः** उपायः ॥ २२ ॥

उपायान्तरमवलम्बते—**अथवेति।** किं प्रयोजनम्? कामशास्त्रस्याधिदेवतामिव स्थितां त्वां **शरणं यामि;** विवेकसिन्धुतरणे प्रधानोपायत्वेन परिगृह्णामि ॥ २३ ॥

[1] महावीरपत्नि—क.

तदेतां रात्रिं वासगृहे त्वया सह निर्वेष्टव्यमखिलं निर्विश्य प्रभाते संयतिष्ये शत्रुविजयाय ।

(इति सभार्यो निष्क्रान्तः)

(ततः प्रविशति नभोयानेन तन्त्रीविनोदतरलकरपल्लवो नारदस्तुंम्बुरुश्च)

**नारदः**—सखे, सुप्रभातं त्रैलोक्यस्य, यन्महामोहविजिगीषया सत्यसंधो विवेकः सपदि संयतिष्यते । अहह, सूच्यते संप्रति विवेकाभ्युदयः । यतः,

**प्रभाविलासः**

अथ विवेकादीनां मोहादीनां च युद्धस्य साक्षादभिनेतुमनर्हतया तत् कथारूपेण कथयितुं नारदतुम्बुरुसंवादं प्रस्तोति—**सखे सुप्रभातमित्यादिना** । तदुक्तं सरस्वतीविलासे—"विरसोऽनुचितश्चेति सूच्यः स्याद्वस्तुविस्तरः" इति । विरसो नाम प्रधानरसपोषको विभावशून्यः कथासंघटनमात्रप्रयोजनो विष्कम्भादिरुच्यते । अनुचितो नाम रङ्गप्रयोगानर्हयुद्धवधबन्धादिकमुच्यते । तथा चोक्तम्—

"युद्धाध्ववधबन्धांश्च राज्यदेशादिविप्लवान् ।
संरोधं सुरतं स्नानं भोजनं चानुलेपनम् ।
अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ।
एतान्युद्वेगकारित्वात्प्रयोगानुचितानि यत् ॥"

**प्रभावली**

एतां **रात्रिम्**; अत्यन्तसंयोगे द्वितीया । शय्यागृहे **निर्वेष्टव्यम्** उपभोक्तव्यमखिलं भोगं **निर्विश्य संयतिष्ये** यत्नं करिष्ये । **नभोयानम्**; विमानम् । वीणातन्त्रीणामास्फालनात् चञ्चलकरपल्लवः । **सुप्रभातम्**; शोभनं प्रभातम् । **सपदि**; अद्य । **संयतिष्यते**; सम्यक् यत्नं करिष्यते । तत्र हेतुमाह—**यत इति** ।

**इदं पुरः स्वयमुदयक्षमाभृति प्रबोधनं प्रबलतमोविमोचनम् ।**
**विवेचितस्थिरचरभेदमद्भुतं त्रयीमयं किमपि महो विजृम्भते ॥२४॥**

**तुम्बुरुः—भगवन्, वयमिव नूनं महासमरसंदर्शनकुतूहली त्वरितमुत्तिष्ठते मयूखमाली । अद्य हि,**

**प्राचीनाचलतुङ्गशृङ्गनिकटप्रक्रीडदैरावण-**
**क्षोभोदीरितधातुधूलिपटलीपर्यायधुर्योदयाः ।**
**व्योमारण्यतमालवीथिमलिनामुन्मूलयन्तस्तमी-**
**मुन्मीलन्त्यरविन्दगर्भसुहृदो भानोरमी भानवः ॥ २५ ॥**

**प्रभाविलासः**

इति । **इदमिति** । **क्षमाभृति**; गिरौ पुरुषे च । **तमः**; अन्धकारम्, अज्ञानं च । **त्रयीमयमिति**; "वेदैरशून्यस्त्रिभिरेति सूर्यः" "सैषा त्रय्येव विद्या तपति" इति श्रुतिरभिप्रेता ॥ २४ ॥

**प्राचीनेति** । **उदीरिता**; उत्थिता । **पर्यायः**; प्रकारः । "पर्यायः क्रमनिर्माणप्रकारावसरेष्वपि । एकार्थवाचिशब्दे च" इति निघण्टुः ।

**प्रभावली**

अत्र सूर्योदयवर्णनेन वेदाख्यतेजोविजृम्भणं सूच्यते । **पुरः**; पुरस्तात् । अन्यत्र प्रथमम् । पुरुषस्य विद्यान्तराधिगमात् प्राक् गर्भाष्टमे उपनीयाध्यापनं तत्र विधीयत इति भावः । **उदयक्षमाभृति**; उदयपर्वते । अन्यत्र स्वयमुदयक्षमाभृतीत्येकं पदम् । **स्वयमुदयो** यस्याः । सा चासौ **क्षमा** क्षान्तिः । इदं शमादीनामप्युपलक्षणम् । तद्भृति क्षान्तिमति पुरुषे । **प्रबोधनम्**; प्रबोधो निद्राक्षयः, ज्ञानं च । तमःशब्दश्चान्धकाराज्ञानयोर्वाचकः । प्रबोधयतीति प्रबोधनम् । अन्यत्र प्रबोध एव । विमोचयतीति **विमोचनम्** । **त्रयीमयं महः**; सूर्यरूपं वेदरूपं च तेजः ॥ २४ ॥

अथ सूर्यकिरणोत्थितिं वर्णयति—प्राचीनेति । **प्राचीनाचलः** उदयगिरिः, तस्य **धातोः धूलीपटल्याः** गैरिकरजःपुञ्जस्य यः **पर्यायः** साम्यं

**नारदः**—सखे, व्यक्तमिव विवेकवैभवं सूच्यते। तथाहि—

दिवि च भुवि च विष्वग्दृष्टिरोधे निसृष्टं
मुकुलितनिखिलाशामण्डलं मोहवृत्त्या।
[1]मलिनमिह महीयो मङ्क्ष्वमोघैः करौघैः
कबलयति तमिस्राकश्मलं रश्मिमाली ॥ २६ ॥

**प्रभाविलासः**

व्योमैवारण्यं, तत्र तमालवीथीवत् मलिनाम्। **तमीम्**; अन्धकारम्। **उन्मूलयन्तः**; नाशयन्तः ॥ २५ ॥

**दिवीति**। **दृष्टिरोधे**; दर्शननिरोधे, ज्ञाननिरोधे च। **मुकुलितनिखिलाशामण्डलम्**; अप्रकाशितसकलदिङ्मण्डलम्; अन्यत्र **निखिले** निरस्तखिले परिपूर्णे ईश्वरे मुकुलिताभिलाषमण्डलम्। **तमिस्राकश्मलम्**; कश्मलसदृशतमिस्रां तमिस्रासदृशकश्मलं च। **करौघैः**; किरणौघैः, तेजोविशेषैश्च। **अंशुमाली**; सूर्यः, ज्ञानी च। **मलिनम्**; नीलं, पापं च ॥ २६ ॥

**प्रभावली**

तस्य **धुर्यो** धूर्वहः उदयो येषां ते। **व्योमाख्यारण्यस्य** तमालपङ्क्तिवत् **मलिनां तमीं** तमःपङ्क्तिम्। यद्वा रात्रिम्, "रजनी यामिनी तमी" इत्युक्तेः। **उन्मूलयन्तः**; उत्पाटनं कुर्वन्तः। **उन्मीलयन्ति**; उद्गच्छन्ति। **अरविन्दकेसरवर्णाः भानोः** सूर्यस्य **भानवः** रश्मयः ॥ २५ ॥

[2]तदेवोपपादयति—**तथाहीति**। **दिवीति**। **दिवि च भुवि च विष्वक्** सर्वत्र। **दृष्टिरोधे**; दृष्टितिरस्कारे। **निसृष्टम्**; निर्मितम्। **मोहवृत्त्या**; मोहव्यापारेण। **मुकुलितम्** अप्रकाशितं **निखिलानामाशानां मण्डलं** येन तथा। **मलिनम्**; नीलम्। **अतिमहीयः**; अत्यन्तमहत्। **तमिस्राकश्मलम्**; तमिस्रा

[1] मलिनमिव—ख. ग; मलिनमतिमहीयः इति प्रभावलीपाठः

[2] एतदारभ्य एकोनत्रिंशश्लोकपर्यन्तस्य भागस्य नृसिंहराजीयव्याख्या मातृकायां त्रुटिता। अतः प्रभावलीसमाख्यादज्ञातकर्तृनामकात् व्याख्यान्तरादुद्धृत्यापेक्षितो भागोऽत्र पूरितः।

तदिह रामरावणरणावलोकनरसश्चिरातिवृत्तोऽपि[1] नियतिवृत्त्या पुनरिदानीमस्माकं प्रादुर्भविष्यति । यदिह महामोहदम्भदर्पादयो विवेकव्यवसायादिभिर्योत्स्यन्ते । अद्य चातिगाढवैरमूलस्याहवानोकहस्य फलं हस्तापचेयं भविष्यति विवेकस्य । तथाहि—

**द्वेधा कल्पितदेवदानवचमूनासीरमासीदतो-**
**रारब्धे तु विवेकमोहनृपयोरायोधनैकोत्सवे ।**
**वैलक्षण्यनिरूपणप्रहरणो बिभ्रत्प्रमाकङ्कटं**
**जेतासौ जगदन्धकारमितरं देवो विवेकेश्वरः ॥ २७ ॥**

प्रभाविलासः

**अनोकहः**; वृक्षः । **द्वेधेति** । **आसीदतोः**; प्राप्तवतोः । **वैलक्षण्यस्य** भेदस्य निरूपणमेव प्रहरणं यस्य स तथोक्तः । **प्रमैव कङ्कटं** कवचं यस्य सः ॥ २७ ॥

प्रभावली

तम एव कश्मलम् । **रश्मिमाली अमोघैः करौघैः** मङ्क्षु सहसा **कबलयति** नाशयति ॥ २६ ॥

**चिरातिवृत्तः**; चिरातिक्रान्तः । **रामरावणयोः** प्रवृत्तं युद्धं, तदवलोकनजनितो **रसः रामरावणरणावलोकनरसः** । **नियतेः** दैवस्य **वृत्त्या** व्यापारेण । **इदानीं पुनः प्रादुर्भविष्यति** । **यत्**; यस्मात् । महामोहदम्भदर्पादयः; आदिशब्देन कामक्रोधादयो गृह्यन्ते । **विवेकव्यवसायादिभिः**; अत्रादिशब्दः शमदमादीनां ग्राहकः । **योत्स्यन्ते**; युद्धं करिष्यन्ति । **अतिगाढं वैरमेव मूलं** यस्य तस्य । **आहव एव अनोकहः** । तस्य फलं जयः । विवेकस्य **हस्तापचेयं** भविष्यति । अस्मिन् युद्धे विवेकस्यैव जयो भविष्यतीति भावः । तदुपपादयति—**द्वेधेत्यादि** । **द्वेधा**; द्विप्रकारेण । **कल्पितयोः**; इयं देवानाम्, इयं दानवानामिति विभक्तयोः **चम्वोः** । **नासीरम्**; अग्रम् । **आसीदतोः**; आगच्छतोः । अनयोर्देवदानवचमूत्वं विवेकादीनां देवप्रकृतित्वात् महामोहादीनामसुरप्रकृतित्वाच्च । **विवेकमोहरूपयोः**

[1] चिरनिर्वृत्तोऽपि—ख.

ततश्च,

विद्याभेदैरुपचयवतां वेदकल्पद्रुमाणां
[1]व्यक्तोल्लासद्विजपरिबृढव्याप्तशाखाशतानाम् ।
श्रेयोमार्गप्रतिभयजितः[2] श्रीविवेकस्य मौलौ
भूयो भूयः सपदि भविता भूयसी पुष्पवृष्टिः ॥ २८ ॥

प्रभाविलासः

**विद्येति । विद्याभेदाः**; दहरवैश्वानरादयः । **व्यक्तोल्लासेन** स्फुटमनःप्रसादेन **द्विजपरिबृढेन** व्यासेन **व्याप्ताभिः** विस्तृताभिः व्यस्ताभिः । यथोक्तम्--

"ततोऽत्र मत्सुतो व्यासस्त्वष्टाविंशतिमे युगे ।
वेदमेकं चतुष्पादं चतुर्धा व्यभजद्विभुः ॥"

इति । अन्यत्र द्विजपरिबृढैः पक्षिश्रेष्ठैः व्याप्तानि शाखाशतानि येषां ते । **प्रतिभयं** भीतिं जयतीति तथोक्तः, तस्य ॥ २८, २९ ॥

**प्रभावली**

नृपयोः, **आयोधनमेव एकः** मुख्यः **उत्सवः**, तस्मिन् **आरब्धे** सति । **वैलक्षण्यस्य** चिदचिदीश्वराणां परस्परवैलक्षण्यस्य **निरूपणमेव प्रहरणम्** आयुधं यस्य तथा । **प्रमा**; समीचीनं ज्ञानम् । तदेव **कङ्कटं** वर्म **बिभ्रत् विवेको वीरः** । **जगदन्धकारम्**; जगतामज्ञानजनकम् । **इतरम्**; मोहम् । **जेता**; जेष्यति ॥ २७ ॥

**ततः**; महामोहजयानन्तरम् । विद्यानां सद्विद्यादीनां **भेदैः** । **उपचयवताम्**; वृद्धिमताम् । व्यक्त उल्लासः संतोषो येषां ते **व्यक्तोल्लासाः**; ते च ते **द्विजपरिबृढाश्च**; तैः **व्याप्तानि शाखाशतानि** येषां तेषाम् । **वेदा एव कल्पद्रुमाः**, तेषाम् । **द्विजाः**; ब्राह्मणाः, पक्षिणश्च । **श्रेयसो मार्गः**, तस्य **यत्प्रतिभयं, तज्जितः** तदपहन्तुः **श्रीविवेकस्य मौलौ** मूर्ध्नि **भूयसी** अधिका **पुष्पाणां वृष्टिः भूयो भूयः** पुनः पुनः **भविता** भविष्यति ॥ २८ ॥

[1] व्यक्तोल्लासद्विजवरगण—ग.    [2] प्रतिभटजितः—क.

तुम्बुरुः— भगवन्, अव्यवस्थिता हि युद्धसिद्धिः। तत्कथमेवं संप्रधार्यते ?

नारदः—(सहर्षम्) सखे,

कथ्यते न मया मिथ्या किं वा संद्रक्ष्यसे स्वयम्।
दर्पणं किमपेक्षन्ते कङ्कणस्य निरीक्षणे ॥ २९ ॥

(नेपथ्ये महान् कलकलः; उभौ [1]सचमत्कारकौतुकमाकर्णयतः)

नारदः—(सहर्षम्) सखे, आगतोऽयमनेकधा कर्णास्वादः। यदुत,

पणवमड्डुकमद्दलझर्झरीमुरवडिण्डिमदुन्दुभिसंभवः।
त्रिदिवगोपुरसंधिविभेदनः प्रसभमुत्पतति ध्वनिरद्भुतः ॥ ३० ॥

**प्रभाविलासः**

पणवेति। पणवादयो वाद्यभेदाः ॥ ३० ॥

**प्रभावली**

**युद्धसिद्धिः**; युद्धे जयसिद्धिरित्यर्थः। **अव्यवस्थिता**; एकत्रैव व्यवस्थिता न भवति। **तत्**; तस्मात्। **कथमेवं संप्रधार्यते**; निश्चीयते। **कथ्यत इति। मया मिथ्या न कथ्यते**; सत्यमेवोच्यत इत्यर्थः। **किं वा**; वक्तव्यमिति शेषः। कुतः? **संद्रक्ष्यसे स्वयम्**; त्वं स्वयमेव द्रक्ष्यसि। उक्तार्थे दृष्टान्तमाह—**कङ्कणेति**। **कङ्कणस्य**, हस्ते बद्धस्य। **निरीक्षणे**; अवलोकने। **दर्पणमपेक्षन्ते किम्**? पुरुषा इति शेषः। यथा कङ्कणनिरीक्षणे दर्पणापेक्षा नास्ति, तथा त्वयापि स्वयमेव द्रष्टुं शक्ये विवेकविजये मद्वचनापेक्षा नास्तीति भावः ॥ २९ ॥

अथ विवेकमहामोहयोः समरं प्रस्तौति—**नेपथ्य इत्यादिना**। **कोलाहलः**; अभवदिति शेषः। **उभौ**; तुम्बुरुनारदौ। **कर्णास्वादः**; ध्वनिविशेषः। तद्दर्शयति—**पणवेति**। पणवादयो वाद्यविशेषाः। **त्रिदिवः**; स्वर्गः, तस्य **यद्गोपुरं** नगरद्वारं, तस्य **संधिविभेदनः**। **प्रसभम्**; बलात्कृत्य ॥ ३० ॥

[1] सचमत्कारम्—ख.

तुम्बुरुः---(सहर्षकौतुकम्) अहो, समरारम्भस्य संदर्शनीयता । अत्र हि—

नीरन्ध्रं व्योमरन्ध्रं भवति कुलगिरिस्तोमतुङ्गैः शताङ्गै-
र्जाघट्यन्ते मदान्धा दिशि दिशि करिणः कल्पजीमूतकल्पाः ।
घोराणां घोटकानां खुरपुटरटितैस्त्रुट्यतीव त्रिलोकी
प्रत्युड्डीयन्त एते प्रतिगतिषु[1] मिथः पत्तयस्त्यक्तदेहाः[2] ॥३१॥

अपिच महानयं प्रवृत्तः शस्त्रसंपातः । एकीभूते इव च मिथः प्रतिरोधाद्विवेकमोहवाहिन्यौ । निर्वर्त्यते चायमाकालिको निशीथः[3] । यतः,

प्रभाविलासः

**नीरन्ध्रमिति** । **शताङ्गैः**; रथैः । **जाघट्यन्ते**; घटिताः क्रियन्ते । **कल्पः**; प्रलयः । **घोटकानाम्**; तुरगाणाम् । **रटितानि**; शब्दाः । **त्रुट्यतीव**; स्फुटतीव । **पत्तयः**; भटाः । **प्रतिगतिषु**; अभिमुखगमनेषु । **प्रत्युड्डीयन्ते**; प्रत्युत्थिता भवन्ति ॥ ३१ ॥

**प्रभावली**

दर्शनीयतां दर्शयति—**नीरन्ध्रमिति** । कुलपर्वतवदुन्नतैः **शताङ्गैः** रथैः **व्योमरन्ध्रम्** आकाशावकाशः निबिडं व्याप्तं भवति । **मदान्धाः** करिणः **दिशि दिशि जाघट्यन्ते**; युद्धाय गच्छन्तः संमर्दात् भृशं घटन्ते, सान्द्रा भवन्ति । **घोटकानां** वाजिनां **खुरपुटशब्दैः त्रिलोकी त्रुट्यतीव**; छिद्यत इवेति भावः । **पत्तयः** सुभटाः उपेक्षितदेहाः सन्तः **प्रतिगतिषु** शत्रूणां प्रतिगमनेषु **प्रत्युड्डीयन्ते**; उत्प्लुत्य वेगादाकाशे संचरन्ति । यद्वा प्रतिगतिषु शत्रुषु उत्प्लुत्य निपतन्ति ॥३१॥

**शस्त्राणां** बाणादीनां **संपातः** । **मिथः प्रतिरोधात्**; अन्योन्योपरोधात् । **वहिन्यौ**; चम्वौ । **आकालिकः**; अकालसंभवः । **निशीथः**; अर्धरात्र-

[1] प्रतिहतिषु—क. [2] पत्तयो दत्तवेगाः—ग.
[3] निशीथसमयः—क.

**सूचिभेद्यतिमिरोपलम्भने मेदिनीरजसि मेघमेदुरे ।**
**श्रूयते [1]क़लकलं महीयसी वाहिनी रणखलापवाहिनी ॥ ३२ ॥**

किंच,

**क्षतजमधु रणस्थैर्दत्तमुत्तम्भिताभ्र[2]ध्वजपटपुनरुक्तस्वर्धुनीकैरनीकैः ।**
**पलभुज इह जाग्रन्नन्दथूनां वधूनां पृथुकरटिकरोटीकर्परैरर्पयन्ति ॥३३॥**

प्रभाविलासः

**सूचिभेद्येति । सूचिभेद्यतिमिरोपलम्भने;** सान्द्रतमःप्रापके । **मेघमेदुरे;** मेघवत् मेदुरे । **रणखलापवाहिनी;** रणे खलानपवाहयति नाशयतीति तथा । **वाहिनी;** सेना । कलकलं यथा तथा श्रूयते । यद्वा **कलकलं** कर्तृ श्रूयते । वाहिनी महीयसीति वाक्यभेदेन योजना॥ ३२ ॥

**क्षतजेति । क्षतजं** रुधिरमेव **मधु** मद्यम् । **उत्तम्भिताभ्रैः** उत्क्षिप्तमेघैः **ध्वजपटैः** पुनरुक्ता स्वर्धुनी आकाशगङ्गा यैस्तैः । **अनीकैः;** सैन्यैः । **पलभुजः;** मांसभुजः राक्षसाः । **जाग्रन्नन्दथूनाम्;** उद्बुध्यमानानन्दानाम् । **वधूनाम्;** स्त्रीणाम् । **पृथुकरटिकरोटीकर्परैः;** विशालगजशिरोऽस्थिकपालैः । अत्र वीररसो व्यङ्ग्यः ॥ ३३ ॥

प्रभावली

समयः । **सूचीति ।** मेघसान्द्रे युद्धभूमिरजसि **सूच्या** भेद्यस्य सान्द्रस्य तिमि**रस्य उपलम्भने** संपादके सति । **रण एव खलं,** तस्यापवाहिनी तिरोधायिनी **महीयसी वाहिनी कलकलं** यथा तथा **श्रूयते** । न दृश्यत इति भावः ॥ ३२ ॥

रक्षःपिशाचादयः स्ववधूभ्यो रक्तमधु शिरःकपालैरर्पयन्तीत्याह—**क्षतजेति । इह पलभुजः;** रक्षःपिशाचाः । **उत्तम्भितेत्यादि ।** उत्क्षिप्तानि अभ्राणि येषां तैः **ध्वजपटैः पुनरुक्ता** तिरस्कृता **स्वर्नदी** आकाशगङ्गा यैस्तैः । **अनीकैः दत्तम्;** तेभ्यः प्रसृतमित्यर्थः । विकसदानन्दानां **स्ववधूनां पृथवः करटिनां** गजानां **करोट्यः** शिरोऽस्थीन्येव **कर्पराः** कपालाः तैः । **अर्पयन्ति;** ददति ॥ ३३ ॥

[1] कलकलैः—ग.    [2] उत्तम्भिताग्रेति प्रभावलीपाठः.

नारदः—सखे, न तृप्यत्यद्य मे किमिदमिति कुतूहलोल्लसितं चक्षुः। इह हि—

पत्तीनुद्यद्विपत्तींस्त्रुटितपृथुशिरःकन्धरान्सिन्धुरेन्द्रान्
वाहानाकीर्णदेहान् व्यतिहननमिथःखण्डिताङ्गाञ्शताङ्गान्।
शस्त्राशस्त्रिप्रसङ्गप्रभवचटचटारावघोरप्रचाराः
कुर्वन्त्युद्दामगर्वाः कृतिन इह रणे विक्रमैरक्रमेण ॥ ३४ ॥

अपिच,

एतस्य संभृतविवेकविमोहभूम्नः
सेनायुगस्य समराङ्कणसंभ्रमेण।
प्रायेण संप्रति विकल्पितया स्ववृत्त्या
दोलाधिरोहणरसं लभते जयश्रीः ॥ ३५ ॥

प्रभाविलासः

**पत्तीनिति। उद्यद्विपत्तीन्**; प्राप्तव्यसनानित्यर्थः। **चटचटेति** अनुकारशब्दः ॥ ३४ ॥

**एतस्येति। संभृतविवेकविमोहभूम्नः**; संपादितविवेकविमोह-

प्रभावली

अथ संकीर्णयुद्धं वर्णयति—**पत्तीनिति। इहोद्दामगर्वाः**; अभङ्गुरगर्वाः। **कतिचन कृतिनः**; समर्थाः। शस्त्रैः शस्त्रैः प्रतिहत्य योधनं **शस्त्राशस्त्रि**, तस्य प्रकर्षेण **सङ्गः**, तत्प्रभवचटचटाशब्देन **घोरः** भयंकरः **प्रचारो** येषां ते। **अक्रमेण विक्रमैः पत्तीन् उद्यद्विपत्तीन्** प्राप्तविपदः। **सिन्धुरेन्द्रान्**; गजेन्द्रान्। त्रुटितं छिन्नं पृथुशिरश्च कन्धरा च **पृथुशिरःकन्धरं** येषां तान्। **वाहान्**; अश्वान्। समन्तात् विप्रकीर्णदेहान्। **शताङ्गान्**; रथान्। **व्यतिहननेन** अन्योन्याभिघातात् मिथःखण्डिताङ्गान् परस्परं खण्डितचक्राद्यवयवान् **कुर्वन्ति** ॥ ३४ ॥

सैन्ययोः पर्यायेण जयश्रीर्दृश्यत इत्याह—**एतस्येति। समराङ्कणे** यः

**तुम्बुरुः**—(सबीभत्सम्) अयमिह कश्चित् क्रव्याददिम्भो डिम्भमाकर्षन्नित्थं भाषते—

'शोहइ शुभइशहाए [1]एलिशलोहाइमालणशमत्थे ।
एशे अशुलहशोलहलुहिलशुहाशालशीअले शंखे' ॥ ३६ ॥

इति ।

(शोभते सुमतिसहाय ईदृशलोभादिमारणसमर्थः ।
एषोऽसुलभसौरभरुधिरसुधासारशीतले संख्ये ॥)

### प्रभाविलासः

विभवस्य । **प्रायेण**; बाहुल्येन । **विकल्पितया**; विवेके विमोहे वेति विकल्पवत्या । **स्ववृत्त्या**; स्वस्थित्या ॥ ३५ ॥

**डिम्भः**; शिशुः ॥ ३६ ॥

### प्रभावली

**संभ्रमः** तेन । **संभृतविवेकविमोहभूम्नः**; संपादितं विवेकविमोहयोर्महत्त्वं येन तस्य । सेनाद्वयस्य **जयश्रीः विकल्पितया स्ववृत्त्या**; कदाचित् जयश्रीर्विवेकसैन्ये, कदाचिन्मोहसैन्य इति स्वस्या वृत्तिविकल्पनेन । **प्रायेण डोलारोहणरसं लभते**; नैकत्र जयो निश्चेतुं शक्य इति भावः ॥ ३५ ॥

**बीभत्सः**; जुगुप्सा । **क्रव्याददिम्भः**; पिशाचार्भकः । **डिम्भम्**; मृतबालशरीरम् । **शोहइ**-शोभते । **शुमइशहाए**-सुमतिसहायः । **एलिशलोहाइमालणशमत्थे**—ईदृशलोभादिमारणसमर्थः । **एशे**-एषः । **अशुलहशोलह**-असुलभसौरभ । **लुहिलशुहाशालशीअले**-रुधिरसुधासारशीतले । **शंखे**-संख्ये । असुलभं सौरभं परिमलो यस्याः सा रुधिरसुधा, तस्या आसारेण शीतले रणे ईदृशाः महापराक्रमिणः ये लोभादयः, तेषां नाशनसमर्थ एष विवेकः सुमतिसहायः सन् शोभत इत्यर्थः ॥ ३६ ॥

[1] ईलिश—क.

इयं च काचन पिशाची [1]संतोषादेवमाह—

'पणममि विवेअदेव्वं पकुविदपडिपक्खपडिमहणप्पहणम् ।
सोणिअणवमहुपवहे सुज्जं व समग्गलग्गपडिमाणम्' ॥ ३७ ॥

इति ।

(प्रणमामि विवेकदेवं प्रकुपितप्रतिपक्षप्रतिमथनप्रधनम् ।
शोणितनवमधुप्रवाहे सूर्यमिव समप्रलग्नप्रतिमानम् ॥)

नारदः—(दूरतो निर्दिशन्) सखे, द्वन्द्वयुद्धमिह नूनमुपक्रम्यते । अत्र हि—

अभिलाषरथारूढः सुभटो लोभलुब्धकः ।
एकस्त्वरितमाधावत्येकलव्य इवापरः ॥ ३८ ॥

प्रभाविलासः

**ससंतोषम्**; संतोषेण सहितं यथा तथा । **एवम्**; वक्ष्यमाणप्रकारेण ॥ ३७ ॥

**अभिलाषेति** । दुर्जयत्वव्यञ्जनार्थम् **एकलव्य इवे**त्युक्तम् ॥ ३८ ॥

प्रभावली

**पणममि**-प्रणमामि । **विवेअदेव्वं**-विकेकदेवम् । **पकुविदपडिपक्ख**-प्रकुपितप्रतिपक्ष । **पडिमहणप्पहणं**-प्रतिमथनप्रधनम् । **सोणिअणवमहुपवहे**-शोणितनवमधुप्रवाहे । **सुज्जं व**-सूर्यमिव । **समग्गलग्गपडिमाणं**-समप्रलग्नप्रतिमानम् । प्रकुपितप्रतिपक्षस्य प्रतिमथनं नाशकं प्रधनं युद्धं यस्य । शोणितनवमधुप्रवाहे समप्रलग्नप्रतिबिम्बं सूर्यमिव स्थितं देवं विवेकं प्रणमामीत्यर्थः ॥ ३७ ॥

अथ द्वन्द्वयुद्धं वर्णयन् प्रथमं लोभस्य युद्धागमनं वर्णयति—**अभिलाषेति** । **अभिलाषः**; मनोरथः । **लोभलुब्धकः**; लोभव्याधः । एकलव्यः; महाभारते प्रसिद्धो व्याधः ॥ ३८ ॥

[1] ससंतोषमिति प्रभाविलासपाठः

तुम्बुरुः—अहह,

दुरध्वविहृतिक्षमो दुरपनोददुर्वासना-
सहस्रपृतनौघवानभिनिवेशसत्सारथिः ।
विरुद्धमतिशस्त्रिकाविषमदत्तमूर्च्छादशा-
लुठत्प्रतिभटः परिभ्रमति लोभवीरो युधि ॥ ३९ ॥

नारदः—(सान्तर्हासम्)

द्रविणपरिणामरूपं जगदिदमविभज्य लब्धमप्येषः ।
बध्नन् कुसीदकुहनां बहुगुणयितुमीहते भूयः ॥ ४० ॥

### प्रभाविलासः

दुरध्वेति । **विरुद्धमतिः**; विपरीतज्ञानम्, तदेव शस्त्रिका, तया विषमं यथा तथा दत्तया मूर्च्छया दशया लुठन्तः प्रतिभटा यस्य सः ॥३९॥

**द्रविणेति** । **अविभज्य**; ग्राह्यगुणदोषविचारमन्तरेण । **लब्धम्**; आर्जितम् । **कुसीदम्**; वृद्धिः; तस्य **कुहनाम्**; मध्याह्नवारमासादिना वृद्धिबहुत्वपरिभाषाम् ॥ ४० ॥

### प्रभावली

लोभस्य सैन्यसारथिशस्त्राणि दर्शयति—दुरध्वेति । असन्मार्गविहार-समर्थः । दुरुच्छेदाया दुर्वासनायाः सहस्रैः सैन्यवान् । अभिनिवेश एव सत्सारथिर्यस्य सः । **विरुद्धमतिः**; विपरीतज्ञानम् । तदेव शस्त्रं, तेन विषमं यथा तथा दत्तया मूर्च्छादशया भूमौ विपरिवर्तमानाः प्रतिभटाः यस्य । लोभवीरः युधि परिभ्रमति ॥ ३९ ॥

**द्रविणेति** । अर्थपरिणामात्मकं जगत् **अविभज्य** कस्याप्यंशमदत्वा स्वस्यैव लब्धमपि । एषः; लोभः । **कुसीदम्**; वृद्ध्यै प्रदानम् । तदपि कुहना-रूपम् । तत् कुर्वन् भूयोऽपि बहुगुणीकर्तुमीहते । अपर्याप्तोदर इत्यर्थः ॥ ४० ॥

तुम्बुरुः—भगवन्, दृष्टमिदानीमप्यस्य दुःशकदुरन्तविषयविजिगीषोद्योगेन।

नारदः—सखे, आश्चर्यमाश्चर्यम्। अदोषागमसमयेऽप्यमृतकिरणसंदोहेन संप्लुतमिव त्रिभुवनमखिलमवलोक्यते। नूनं कयाचिदवदातप्रकाशया देवतया प्रादुर्भूतया भवितव्यम्। (सूक्ष्मं निर्वर्ण्य) आलक्षितोऽयमाश्चर्यसंभवः। यथा—

सैषा पञ्चमुखी तुष्टिः शेषसृष्टिरिवापरा।
अतर्कितमुपस्थाय ग्रसते लोभमूषकम् ॥ ४१ ॥

तुम्बुरुः—(सहर्षम्) भगवन्, संप्रति लोभविध्वंसनेन लुप्तलोकायतमिव लोकमवलोकयामि। अद्य हि,

प्रभाविलासः

दोषा; रात्रिः। सैषेति। पञ्चेन्द्रियगोचरोपाधिना पञ्चमुखत्वम् ॥ ४१ ॥

प्रभावली

दृष्टम्; अपर्याप्ताशत्वम्। केन दृष्टमित्यत्राह—दुःशकेनेत्यादि। दुःशकः; कर्तुमशक्यः। दुरन्तः; दुरवसानः। यः विषयः, तद्विजिगीषोद्योगेन। अथ लोभनिरासिकायास्तुष्ट्या आगमनं वर्णयितुमुपक्रमते—आश्चर्यमिति। तेजोविशेषदर्शनादाश्चर्यम्। अदोषेति; प्रदोषागमसमयाभावेऽपि। इदमाश्चर्यमूलम्। सैषेति। पञ्चमुखी; शब्दादिविषयपञ्चकजनितत्वात् पञ्चसंख्याविशिष्टमुखयुक्ता। अत एवापरा शेषसृष्टिरिव स्थिता। शेषस्य सहस्रशीर्षत्वादियं पञ्चमुख्यपरा सृष्टिः। अतर्कितम्; सहसा। सर्पो मूषकमिव तुष्टिर्लोभं ग्रसते ॥ ४१ ॥

लुप्तलोकायतमिव; चार्वाकमतस्य लोभमूलकत्वात् लोभध्वंसेन चार्वाकमतभङ्गो जात इति भावः। लोभविनाशे मुमुक्षूणां फलसिद्धिं वर्णयति—

प्रशस्तिं विन्दन्ति प्रशमसुखदिव्यामृतरस-
प्रलीनोदन्यानां परिषदि न संपत्तिसरितः ।
अमित्रोपक्षेपक्षणविगलदात्मीयपृतना-
दृढामर्दत्रस्यद्द्रमिडभटजङ्घाजवभृतः ॥ ४२ ॥

अपिच,

प्रशमितलोभमिदानीं प्रौढविवेकप्रयुक्तया तुष्ट्या ।
धनमनघनीतिसिद्धं जातं सर्वत्र दत्तभुक्तफलम् ॥ ४३ ॥

प्रभाविलासः

**प्रशस्तिमिति । प्रशमसुखम्;** शान्तरसानुभवः । **उदन्या;** विषयाभिलाषः । 'क्षीरोदनलाभात्कणस्त्यज्यते' इति न्यायेनामृतरसलाभे केवलजलपानं न रोचत इति निःसारत्वादिति वक्तुं संपदां सरित्त्वरूपणम् । **अमित्रैरुपक्षेपेण** भञ्जनेन **क्षणे** क्षणमात्रे **विगलन्त्याः** पलायमानायाः **आत्मीयपृतनायाः दृढामर्देन** अधिकसंमर्देन **त्रस्यतां द्रविडभटानां जङ्घाजवं** बिभ्रतीति तथोक्ताः । अनेन संपदामाशुतरविनाशित्वमुक्तम् ॥ ४२ ॥

**प्रशमितेति । अनघनीतिसिद्धम्;** निर्दोषन्यायार्जितम् । **दत्तभुक्तफलमिति;** अनेन

प्रभावली

**प्रशस्तिमिति ।** संपत्त्य एव सरितः; शीघ्रगामित्वात् सरित्त्वेन रूपणम् । प्रशमजनितसुखमेव दिव्यामृतरसः, तेन प्रशान्तपिपासानां विरक्तानां गोष्ठीषु प्राशस्त्यं न गच्छन्ति । कीदृश्य इत्यत्राह—अमित्रेति । **अमित्राणां** समीपोपसर्पणसमये पलायमानायाः स्वसेनायाः **दृढामर्देन त्रस्यतां द्रमिडभटानां जङ्घायाः** यो जवः, तं बिभ्रतीत्यर्थः । लोभशमनस्य वैराग्योत्पत्तिः फलमिति भावः ॥४२॥

लोभशमने बुभुक्षूणां फलमाह—**अपिचेति ।** प्रौढविवेकप्रयुक्तया तुष्ट्या

नारदः—नन्वसावपरीक्षितलोकवृत्तान्तानामविवेकिनामेव लुप्त-सर्वगुणो लोभः ।

ब्रह्मायुतायुतविभूतिरपि [1]ह्यपूर्णः
कल्पायुतायुतशतायुरपि व्यतीयात् ।
नागायुतायुतसहस्रबलोऽपि बाध्यः
किं तद्भवेद्यदिह किंचन लोभयोग्यम् ॥ ४४ ॥

प्रभाविलासः

"अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला नारी दत्तभुक्तफलं धनम् ॥"

इति व्यञ्जितम् ॥ ४३ ॥

ब्रह्मेति । "स एकः प्रजापतेरानन्दः" इत्यादिना सर्वातिशायित्वं व्यञ्जयितुं ब्रह्मेत्युक्तिः । नागः ; गजः ॥ ४४ ॥

प्रभावली

प्रशमितलोभं धनम् अपगतदोषेण न्यायेनार्जितं सत् सर्वत्र जने दत्तं भुक्तं च फलं यस्य तत् जातम् ॥ ४३ ॥

पुनरपि लोभं दूषयितुं पीठिकामाह—नन्वसाविति । अविवेकिन एव लोभं परिगृह्णन्ति, न तु विवेकिन इत्यर्थः । विवेकिनां लोभोऽपरिग्राह्य इत्याह—ब्रह्मेति । ब्रह्मणामयुतायुतस्य विभूतिरिव विभूतिर्यस्य सोऽपि लोभाक्रान्तः अपूर्णः दरिद्रो भवति । कल्पायुतायुतस्य शतमायुर्यस्य सोऽपि व्यतीयात् नाशं प्राप्नुयात् । एतावतायुषापि तृप्तिर्नास्तीत्यर्थः । नागाः गजाः, तेषामयुतायुतसहस्रबलोऽपि केनचित् बाध्यो भवति । एतावता बलेनापि तृप्तिर्नास्तीत्यर्थः । अत इह जगति लोभयोग्यम् 'इदं भवतु' इति काङ्क्षितुं योग्यं यत् तत् किम् ? किमपि नास्तीत्यर्थः ॥ ४४ ॥

[1] ह्यपूर्णो—क.

अद्य तु लोभविध्वंसादवधीरितलाभान्तरा परिहृतप्रत्यूहा बुद्धिः परमपुरुषपदकमलपरिचरणमेव परं धनमभिनिविशते ।

अपिच,

नलनहुषमुखानां नाकलोकेश्वराणा-
मपि नलिनभवानामस्मदग्राह्यभूम्नाम् ।
अगणितमुपनन्त्रीमापदं प्रेक्ष्य बिभ्यत्
क्वचिदिह न विधत्ते कौतुकं जातु कश्चित् ॥ ४५ ॥

प्रभाविलासः

**नलेति** । दमयन्तीवियोगादिकमभिप्रेत्य नलग्रहणम् । बहुवित्तव्ययायासचिरकालक्लेशकृतफलभोगसमये क्षणमात्रेणागस्त्यशापेन भोगभङ्गमभिप्रेत्य नहुषपदोपादानम् । मुखपदेनेन्द्रादयः । स हि ब्रह्महत्याहल्यास्वैरादिषु बहुविपदमन्वभूत् । मधुकैटभसोमकादिभिर्वेदापहारादिपीडामभिप्रेत्य नलिनभवग्रहणम् । तत्रापि पूर्वपूर्वचतुर्मुखनाश एवोत्तरोत्तरचतुर्मुखोत्पत्तिरिति बहुवचनोपादानम् । **क्वचिदिति**;

"नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित् ।
कुर्वन् विन्देत संतापं कपोत इव दीनधीः ॥"

इति स्मारितम् ॥ ४५ ॥

प्रभावली

**अवधीरितलाभान्तरा**; त्यक्तेतरलाभा । अत एव परिहृतसर्वविघ्ना पुरुषस्य **बुद्धिः** । अभिनिविशते; दृढमाकाङ्क्षते । विषयेषु सतृष्णानां सर्वेषां बह्वापद्दर्शनात् विषयतृष्णाहेतुभूतलोभत्याग एव श्रेयानित्यभिप्रायेणाह—नलेति । अस्माभिर्ज्ञातुमशक्यमहिम्नाम् **अगणितम्** अतर्कितं यथा तथा स्वयमापतन्तीं **विपदं प्रेक्ष्य बिभ्यत् कश्चित्** पुमान् मुमुक्षुः **इह** जगति **क्वचित्** वस्तुनि **अभिलाषं न विधत्ते** ॥ ४५ ॥

किंच,

अपैति पुरुषायुषं निमिषनिर्विशेषं नृणां
तृणाग्रजलबिन्दुवत्प्रतिकलं गलन्ति श्रियः ।
तथापि नृपमन्दिरप्रघणसीम्नि संक्षीयते
महानहह देहिनां द्रविणमोहदाहज्वरः ॥ ४६ ॥

तद्वयं च नैराश्यमेव परमं सुखमुपतिष्ठामः[1] । ततश्च,

उत्तालद्विपकर्णतालतरलप्रस्थानदुःस्थासिका-
नित्यातङ्कतरङ्गितं विजहतस्त्रैविष्टपानां पदम् ।
प्रत्यूढापदनन्तसंपदुदयं पद्मापतेस्तत्पदं
प्रत्यादिष्टपुनर्भवं परिहृतावद्यं प्रपद्येमहि ॥ ४७ ॥

प्रभाविलासः

**अपैतीति ।** **पुरुषायुषम्**; शतमायुः, "शतायुः पुरुषः" इति श्रुतेः । **तृणाग्रेति** सत्ताक्षणेऽपि पतनभीत्यनुवृत्तिर्दर्शिता । **संक्षीयते**; जनैरिति शेषः ॥ ४६ ॥

**नैराश्यमेवेति**; "आशा हि परमं दुःखं नैराश्यं परमं सुखम्" इति स्मारितम् । **उत्तालेति ।** **उत्तालद्विपकर्णतालवत् तरलेन प्रस्थानेन,**

प्रभावली

वैराग्यजननार्थं पुनरपि लोभं निन्दति—**अपैतीति ।** **पुरुषायुषम्**; शतवर्षम् । **निमिषनिर्विशेषम्**; निमिषो यथा शीघ्रं गच्छति तद्वत् । संपदश्च **प्रतिकलम्** अनुक्षणं नश्यन्ति । एवं सत्यपि राजमन्दिरबहिर्भागसीम्नि पुरुषः **संक्षीयते ।** अनेन फलसिद्धौ संशयः, संक्षयस्तु निश्चित इति गम्यते । **देहिनां द्रविणमोहः** द्रविणलोभः, स एव तापज्वरः, **महान् ।** अहहेति खेदे ॥ ४६ ॥

नैराश्यफलमाह—**उत्तालेति ।** उत्तालः उन्नतः, स चासौ **द्विपश्च**, तस्य **कर्णतालयोः** उपरि **तरलं प्रस्थानं**, तस्य दुःस्थासिकया दुष्प्रतिष्ठया आसि-

[1] उपतिष्ठाम—ख.

तुम्बुरुः—(ससंभ्रममवलोक्य) भगवन्, अयमिह पुनः कश्चिदसह्यवेगो महावीरः प्रशिथिलसंघटितपलायमानां लोभवाहिनीं मुखरितहरिता घोषेण मुहुर्मुहुः प्रत्याश्वासयन् मुग्धामध्याप्रगल्भाभिर्वरूथिनीभिरनुगतो[1] विवेकाभिमुख उपसर्पति। कतमः कीदृशोऽयमिति न विजानामि।

नारदः—सखे,

महितमधुप्रदिष्टमधुदिग्धविचित्रशरः
परभृतवन्दिमान् भ्रमरसंहतिगीतगुणः।
मलयमरुत्सखो मकरलक्षणकेतुरसौ
[2]धृतधनुरभ्युपैति मदनः प्रमदापृतनः॥ ४८॥

प्रभाविलासः

गतागताभ्यामित्यर्थः; दुःस्थासिकया दुष्प्रतिष्ठया जातेन नित्यातङ्केन तरङ्गितम्। प्रत्यूढापत्; निरस्तविपत्॥ ४७॥

मुग्धेति। मौग्ध्यादयो नायिकावस्थाभेदाः। तल्लक्षणमुक्तम्—

"उदयद्यौवना मुग्धा लज्जाविजितमन्मथा।
लज्जामन्मथमध्यस्था मध्यमोदितयौवना।
स्मरमन्दीकृतव्रीडा प्रौढा संपूर्णयौवना॥"

इति। महितेति। मधुः; वसन्तः। परभृतवन्दिमानिति कामशास्त्र-

प्रभावली

कया जातो यो नित्यातङ्कः सार्वकालिकं भयं, तेन तरङ्गितं परिपूर्णम्। त्रैविष्टपानां पदम्; देवानां स्थानं ब्रह्मलोकादिकम्। परश्रीदर्शनतापेन पातभिया च विजहतः वयम्। प्रत्यूढापत्; निर्गतापत्। अनन्ताः संपदुदया यत्र। प्रत्याख्यातपुनर्भवम्; पुनर्जन्मरहितम्। श्रियः पत्युः तत् परमं पदं चरणारविन्दं शरणं गच्छेम। यद्वा परमं परं पदं लोकं श्रीवैकुण्ठं प्राप्नुयाम॥ ४७॥

प्रशिथिलां, पुनः समाश्वसिताम्, अथापि पलायमानां लोभस्य सेनां

[1] उपगतः—क; अधिगतः—ग. [2] समासान्तविधेरनित्यत्वाभावक.

पश्य पश्य सखे, प्रसूनबाणस्य पारिपार्श्विकसमृद्धिम् ।

काचित्क्रीडति पद्मिनीह पुरतः काप्यन्यतश्चित्रिणी
शङ्खिन्यप्यपरत्र काचिदितरा हस्तिन्यसावन्यतः ।
तस्यैतस्य समृद्धिमेति सरसप्रेक्षानिरूढोदयं
चित्रं मन्त्रिचतुष्टयं त्रिभुवनावस्कन्दिनो धन्विनः ॥ ४९ ॥

**प्रभाविलासः**

प्रसिध्योक्तम्, "परिजनपदे भृङ्गश्रेणी पिकाः पटुवन्दिनः" इत्युक्तत्वात् ॥ ४८ ॥

काचिदिति । पद्मिन्यादयो जातिविशेषाः । तल्लक्षणं रतिरहस्ये—

"पद्मिनी पद्मगन्धा च मधुगन्धा च चित्रिणी ।
शङ्खिनी क्षारगन्धा च निम्बगन्धा च हस्तिनी ॥"

**प्रभावली**

शब्दायमानदशदिशा घोषेण समाश्वासयन् मुग्धाः आरब्धयौवनाः, मध्यमाः यौवनमध्यस्थाः, प्रगल्भाः पूर्णयौवनाश्च, ताभिः स्त्रीभिः वरूथिनीभिः सैन्यैः उपगतः काम आयात इत्याह—महितेति । महितो यो मधुः चैत्रमासः, तेन दत्तं यन्मधु पुष्परसः, तेन दिग्धाः विशिखाः शराः यस्य; पुष्पबाण इत्यर्थः । परभृताः कोकिलाः, वन्दिन इव, तद्वान् । भ्रमरसंहतिरेव गीतः शब्दायमानो गुणः मौर्वी यस्य । मलयमरुतः सखा मकरलक्षणकेतुः; मकरलाञ्छनः केतुर्यस्य सः । काम अभ्युपेति ॥ ४८ ॥

पारिपार्श्विकाः; परिजनाः । काचिदिति । इह कामस्य पुरतः पद्मिनी; पद्मगन्धिन्यः स्त्रियः; जातावेकवचनम् । अन्यत्र पार्श्वे चित्रिणी, अपरत्र शङ्खिनी, अन्यतः पार्श्वे हस्तिनी । पद्मिन्यादीनां लक्षणं मदनशास्त्रे द्रष्टव्यम् । तस्य; कामस्य । सरसा या प्रेक्षा शृङ्गारवीक्षणं, तन्मात्रेण निरूढः प्राप्तः उदयः लोकविजयरूपो यस्य । अत एव आश्चर्यम् । मन्त्रिचतुष्टयम्; लोके मन्त्रिभिः षाड्गुण्यादिप्रयोगादुदयः प्राप्यते । अनेन मन्त्रिचतुष्टयेनापाङ्गवीक्षणमात्रेण विजयः प्राप्यत इति भावः । मन्त्रिचतुष्टयं समृद्धिमेति ।

तुम्बुरु:—भगवन्, अत्यासन्नवृत्तिरयमसौ विवेकरथस्य।

अपिच,

ऋतुस्नाता नृत्तग्लपिततनुरध्वश्रमवती
मदक्षीबा क्रुद्धप्रसदनवती भिन्नघटिता।
इदंपूर्वेत्येवंविधयुवतियूथेन सहितो
[1]युयुत्सत्युन्मत्तः स्मर इह विवेकेन महता ॥ ५० ॥

प्रभाविलासः

इति। "कमलमुकुलमृद्वी" इत्यादिना विशेषेण तासां लक्षणमुक्तम्। विस्तरभयान्न लिख्यते ॥ ४९ ॥

**ऋतुस्नातेति**। **मदक्षीबा**; मद्यपानोन्मत्ता। **क्रुद्धप्रसदनवती**; प्रणयकलहानन्तरं प्रसन्ना। **भिन्नघटिता**; वियोगानन्तरं संगता। **इदंपूर्वा**; नूतनसंभोगा। **एवंविधयुवति**पदेन एकदिनज्वरिता, एकमासप्रसूता, षण्मासगर्भा उक्ताः। एवमृतुस्नातादीनामुपादानं समरतेन सुखप्रदत्वज्ञापनार्थम्। तदुक्तं कामशास्त्रे—

"अध्वक्लान्ततनुर्नवज्वरवती नृत्तश्लथाङ्गी तथा
मासैकप्रसवा ददाति सुरते षण्मासगर्भा सुखम्।
विख्याता विरहय्य संगमविधौ क्रुद्धप्रसन्ना ऋतु-
स्नाता नूतनसंगमे मधुमदे रागास्पदं योषिताम् ॥"

इति ॥ ५० ॥

प्रभावली

त्रिभुवनं पराभवितुं शीलमस्येति त्रिभुवनावस्कन्दिनः। धन्विनः; कामस्य ॥४९॥

आगत्य विवेकेन योद्धुमिच्छतीत्याह—**अपिचेति**। **ऋतौ** चतुर्थदिवसे **स्नाता**। **नृत्तेन क्लान्ततनुः**। मार्गश्रमखिन्ना। मदेन मत्ता। पूर्वं **क्रुद्धा** पश्चात्प्रसादिता। पूर्वं कलहान्तरिता, अनन्तरं समाहिता। इदंप्रथमा च। एताः **सर्वा**

[1] युधधातोरनुदात्तेत्त्वलक्षणात्मनेपदस्यानित्यत्वादात्मनेपदाभावे परस्मैपदिनः सन्नन्तस्य रूपम्।

नारदः—(सहासम्[1]) किमस्यानेन दुर्भेदयुवतियूथव्यूह-
कल्पनेन !

[2]स्वायत्तसिद्धिविभवस्य समग्रशक्तेः
स्वच्छन्दचेष्टितभृतः स्वयमेव योद्धुः ।
किं मुग्धया किमिह मध्यमयात्मयोनेः
किं प्रौढया च जरठापि हि जैत्रमस्त्रम् ॥ ५१ ॥

प्रभाविलासः

**स्वायत्तेति** । **जरठेति** पञ्चपञ्चाशदधिकवत्सरा गृह्यते । तदुक्तम्—

"बाला स्यात् षोडशाब्दा तदुपरि युवतिर्विंशतेर्यावदूर्ध्वं
प्रौढा स्यात्पञ्चपञ्चाशदवधि परतो वृद्धतामेति नारी ।"

इति । अपिपदेन जरठाया अगम्यत्वं स्फोर्यते । तदुक्तं रतिरहस्ये—

"निदाघशरदोर्बाला योग्या विषयिणां भवेत् ।
हेमन्ते तरुणी योग्या प्रौढा वर्षावसन्तयोः ।
सततं सेव्यमानापि बाला वर्धयते बलम् ।
क्षयं नयत्ययोग्या स्त्री वृद्धा तु कुरुते ज्वरम् ॥"

इति । **जैत्रम्**; जयशीलम् ॥ ५१ ॥

प्रभावली

**वशीकर्त्री दुर्जया इति भावः । इत्येवंप्रकारयुवतिबृन्दैः सहितः विवेकेन योद्धु-
मिच्छति । उन्मत्त इव किमपि न जानातीत्यर्थः ॥ ५० ॥**

कामं प्रशंसति—**किमस्येति** । किं प्रयोजनं युवतियूथव्यूह-
**कल्पनेन**? एतावान् प्रयासो मास्तु; स्वयमसहायशूर इति कामं प्रशंसति—
**स्वायत्तेति** । व्यूहकल्पनं मास्तु । मुग्धादयश्च तिष्ठन्तु । **स्वायत्तसिद्धैश्वर्यस्य**;
स्वाधीनव्यापारवतः । स्वयमेव युद्धं कुर्वतोऽस्य आत्मयोनेः जरठापि **जैत्रमस्त्रं**
भवति ॥ ५१ ॥

[1] सहर्षम्—ग. [2] स्वायत्तकार्यविभवस्य—ग.

(नेपथ्ये)

विवेकपरिषत्पुरस्कृतविरक्तिवाराङ्गना-
कचग्रहविचक्षणप्रथितगर्वदोर्विक्रमः ।
रतिप्रियतमः स्वयं रणविहारमारिप्सते
विमुक्तिपुरवर्तनीविपरिवर्तिनीतिस्थितिः[1] ॥ ५२ ॥

उभौ— (कर्णं दत्त्वा) विकत्थनमिदं [2]युयुत्सतो विषमास्त्रस्य ।

(पुनर्नेपथ्ये)

स्वभर्तव्यं भार्यादुहितृपितृपुत्रप्रभृतिकं
विसृज्य प्रव्रज्यामुपनिर्हितवत्यै भवभृतः[3] ।
अमुष्यै किं कुर्मो निरवधिकनैर्घृण्यवपुषे
नियत्यै भूयिष्ठं भवतु भगवत्यै नम इदम् ॥ ५३ ॥

प्रभाविलास:

विवेकेत्याद्यर्धमेकं पदम । विमुक्तिपुरस्य परमपदस्य वर्तन्याः एकपद्या मार्गस्य विपरिवर्तिनीतौ विपर्यासन्याये स्थितः ॥ ५२ ॥

स्वभर्तव्यमिति ।

"वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥"

इति वचनेन स्वभर्तव्यमित्युक्तम् ॥ ५३ ॥

प्रभावली

ईदृशः कामः स्वयमेव [2]युयुत्सतीत्याह—विवेकेति । विवेकपरिषद्भिः पुरस्कृता या विरक्तिः, सैव वाराङ्गना, तस्याः कचग्रहे विषये विचक्षणः । प्रथितो गर्वेण दोर्विक्रमो यस्य सः । रतिप्रियः रणविहारम् आरब्धुमिच्छति । कीदृशः ? तत्राह—विमुक्तीति । विमुक्तिपुरं वैकुण्ठलोकः, तस्य वर्तनी एकपदी भक्त्याद्युपायपरिग्रहः, तस्या विघट्टने स्थितः जागरूकः ॥ ५२ ॥

विकत्थनम् ; आत्मश्लाघावचनम् । कामो विरक्तिं विनिन्दति—स्वभर्तव्यमिति । स्वभर्तव्यम् ; स्वस्यावश्यरक्षणीयं भार्यापुत्रादिकम् । विसृज्य ; त्याज-

[1] नीतौ स्थित इति व्याख्ययोः पाठः ।
[2] See the footnote on the stanza 50.
[3] भवभृताम्—क.

नारदः—सखे, विडम्बयति चासौ विषयरसवैमुख्यकारिणीं [1]भगवतीं नियतिम्।

तुम्बुरुः—भगवन्, पश्य पश्य। मुषितव्यवसाय इवासौ संप्रति [2]समीक्ष्यते मुखवैमुख्येन। परिजनश्चास्य सांग्रामिक्यां सिद्धौ साशङ्क इवाभाति। यदुत,

मधुसमयावरोधवदनासवदोहलिनां
बकुलमहीरुहामलघुभिः सुमनोभिरिमाः।
मदनधनुष्प्रकाण्डगुणनिस्त्रुटनावसर-
प्रतिनिधिशिञ्जिनीं[3] प्रजनयन्त्यभितः प्रमदाः॥ ५४॥

प्रभाविलासः

मधुसमयेति। मधुसमये अवरोधानां स्त्रीणां वदनासवेन गण्डूषमद्येन दोहलिनां दोहलवताम्। वदनासवबकुलशब्दावुपलक्षकौ। तदुक्तं वृक्षरक्षामणौ—

"प्रमदावदनामोदिमदिरासवसेकतः।
मुकुलाकुलतां याति बकुलोऽलिकुलप्रियः॥
संभावितो नखपदैर्विदग्धवनिताजनैः।
धत्ते सद्यः प्रसूनानि रागिताग्रेण पाटलः॥

प्रभावली

यित्वा। भवभृतः; संसारिणः। प्रव्रज्याम्; संन्यासाश्रमम्। दत्तवत्यै। निरवधिकनैर्घृण्यवपुषे; अतिनिर्घृणरूपायै। अमुष्यै; विरक्त्यै। किं कुर्मः; न किमपीति भावः। तामेवं प्रेरितवत्यै नियत्यै नमस्कुर्म इति भावः॥ ५३॥

विडम्बयति; निन्दति। पुंसः विषयरसवैमुख्यकारिणीम्। अथ कामस्य वैमुख्यं प्रस्तौति—पश्येत्यादिना। मुखवैमुख्येन; वैवर्ण्येन। परिजनः; स्त्रीजनः। युद्धसिद्धौ साशङ्क इव। साशङ्कत्वमेव दर्शयति—

[1] भगवतीं omitted—क. [2] लक्ष्यते—क. [3] शिञ्जिनीः—ग.

नारदः—सखे, प्रहसनविनोदनमात्रप्रस्तावकमिदमखिलं प्रायशः प्रभूतव्यवसायसंपदो विवेकस्य। अपिच महतो विवेकाद्भिभ्यदव्ययमपरावर्ती मन्मथः प्रवर्तते। तथाहि—

प्रभाविलासः

मञ्जुमञ्जीरशिञ्जानतरुणीचरणाहतेः।
आशुव्याकोचपुष्पश्रीरशोकः शोभते सदा॥
आवेदितमनोभावैराराधितमनोभवैः।
विलासलास्यरसिकैरार्द्रितो लोचनाञ्चलैः।
सानुरागरसोल्लासैर्मन्दाक्षमसृणीकृतैः।
हासैश्च हरिणाक्षीणां धत्ते पुष्पाणि चम्पकः।
तरुण्या मण्डलीभूतसमुन्नतपयोधरम्।
आलिङ्गितः कुरवको धत्ते कोरकितश्रियम्।
अङ्गनाजनसंगीतरागामृतनिषेवणैः।
प्रियालाः प्रियतां यान्ति पुष्पैः पुलकिता इव॥"

इति। एवमुद्वेगाख्यं गर्भसंधेरङ्गमुक्तम्, बाणोत्पादनेन भयनिमित्तकथनात्। तल्लक्षणं तु—"भीरुद्वेगो नृपादिजा" इति॥ ५४॥

प्रस्तावकम्; जनकम्। मदनं मत्स्यग्राहिजालिकतया निरूप-

प्रभावली

मधुसमयेति। मधुसमये वसन्तकाले, अवरोधस्य उत्तमस्त्रीजनस्य, वदनासवः मुखमधुगण्डूषः, स एव दोहलं पुष्पोद्गमाय क्रियमाणः संस्कारविशेषः, तद्वतां बकुलवृक्षाणां पुष्पैः, मदनधनुःश्रेष्ठस्य यो गुणः भृङ्गमालारूपा मौर्वी, तस्याः त्रुटनावसरे विच्छेदकाले, प्रतिनिधिभूतां मौर्वीम् अभितः प्रजनयन्ति। वकुलमहीरुहाः सुवदनावदनासवदोहलसंजातपुष्पमालया कामस्य त्रुटितज्यासदृशीमन्यां ज्यां जनयन्तीत्यर्थः॥ ९४॥

इदमखिलम्; कामविकत्थनादिकम्। प्रभूता व्यवसायस्य संपत् यस्य।

जगत्क्षिपति चापले ललितचापलेखाधरो
युनक्त्यपथि वाहयन्युगलदेहयन्त्रद्वयम् ।
[1]द्विगर्भबडिशामिषग्रसनवेधतो बाधते
स एष दृढसाहसः सकलजन्तुचिन्ताभटः ॥ ५५ ॥

अद्य च निरन्तरपरिणमदविद्यया कयाचन शिल्पविद्यया दुर्निरूपघटनया विवेकयूथविघटनमसौ विधातुमभिलषति । ततश्च,

प्रभाविलासः

यति—जगदिति । ललितचापलेखा; वंशादिसूक्ष्मशलाका, तस्याः धरः । सकलजन्तुचिन्ताभटः; मनोभवः । चापले जगत् क्षिपति; चापलयुक्तं करोति । किंच अपथि वाहयन्; अमार्गे प्रवर्तयितुम् । युगलदेहयन्त्रद्वयम्; स्त्रीपुंसलक्षणयुगलयन्त्रद्वयम् । युनक्ति; योजयति । योजयित्वा किमकरोदित्यत आह—द्विगर्भेति । द्विगर्भबडिशामिषस्य अर्धनारीरूपमत्स्यबन्धनस्य ग्रसनवेधतः बाधते । कामो जगत् विषयचपलं कृत्वा अमार्गे प्रवर्त्य स्त्रीपुंसरूपेण योजयन् अर्धनारीदर्शनेन वञ्चयतीत्यर्थः । लोके जालिकोऽपि प्रथममन्नादिप्रक्षेपेण मत्स्यजालं चपलं कृत्वा अन्यत्र नीत्वा योजयन् वक्रसूचीद्वयनिर्मितं बडिशं सामिषं कृत्वा आविध्य बाधते । तद्वत् ॥ ५५ ॥

प्रभावली

अपरावर्ती; अपरावर्तनशीलः । कामस्य जगत्पीडनमाह—जगदिति । सकलजन्तुचिन्ताभटः; सकलजन्तुचिन्तया जातो भटः, मनोभव इत्यर्थः । ललितचापयष्टिधरः सन् जगत् चापले रत्यभिलाषे क्षिपति । अथ च युगलदेहयन्त्रद्वयम् अपथे दुर्मार्गे प्रवर्तयन् । द्विवर्गः कामार्थौ, तावेव बडिशामिषं, तस्य ग्रहणे यो वेधः जिह्वाभेदनं, तस्माच्च जगद्बाधते ॥ ५५ ॥

इन्द्रजालविद्ययेव युवतिरूपशिल्पविद्यया विवेकयूथमथनमभिलषतीत्याह—निरन्तरेति । यौवतरूपशिल्पविद्ययेति विवक्षा । रणेति । महिलारत्नानां समूहेन

[1] द्विवर्ग—ग.

[1]रथवारणवाजिभिः प्रहृष्यन्महिलारत्नसमूहनेन सिद्धैः ।
मकरध्वज एष पुष्पधन्वा रणमभ्येति रतिप्रियापदानः ॥ ५६ ॥

तुम्बुरुः—भगवन्, असहायशूरोऽयं विभ्रममात्रबलाभिरबलाभिरेव संहतान् महाबलान् विवेकव्यवसायशमदमादीन् विजेतुमभिलषति । अपिच,

अङ्कुरत्स्मितमकेवलेक्षणं भङ्गुरभ्रु वदनं नतभ्रुवाम् ।
अञ्चिताधरमवञ्चितादरः पञ्चबाणसुभटः समीक्षते ॥ ५७ ॥

प्रभाविलासः

रथेति । महिलारत्नसमूहनेन; नारीश्रेष्ठसंनिवेशविशेषेण । सिद्धैः रथवारणवाजिभिः; रथगजतुरगादिभिः । प्रसिद्धं च चित्रपटादिषु नवनारीकुञ्जरादिकम् । अपदानम्; कर्म वृत्तम् ॥ ५६ ॥

अङ्कुरदिति । स्मितलक्षणमुक्तम्—

"ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥"

इति । अकेवलेक्षणमिति; भ्रूभङ्गपदसमभिव्याहारेण कान्ताख्यदृष्टिविशेष उक्तः । तल्लक्षणं तु—

"आपिबन्तीव दृश्यं या सविकासातिनिर्मला ।
सभ्रूक्षेपकटाक्षा सा कान्ता मन्मथवर्धनी ॥"

प्रभावली

संभारेण सिद्धैः रणार्थवारणवाजिभिः प्रहृष्यन् रतिप्रियम् अपदानं पौरुषं यस्य सः ॥ ५६ ॥

विभ्रममात्रम्; विलासमात्रम् । अबलाभिः; स्त्रीभिः । संहतान्, एककण्ठान् विवेकादीन् विजेतुकामः स्वसहायत्वेन स्त्रीमुखं पश्यतीत्याह—अङ्कुरदिति । अङ्कुरत् ईषदुद्गतं स्मितं यस्य । अकेवलेक्षणम्; साभि-

[1] रणवारणेति प्रभावलीपाठः.

नारदः—सखे तथैव[1] खल्वेतमपि विजेतुं विश्वजिद्विवेको विरक्तिनामानं[2] स्त्रियमेव प्रत्यस्त्रतया प्रयुङ्क्ते ।

(नेपथ्ये)

**भोगेषु यौवतानां योगेषु लभेत सारमर्थानाम् ।**
**कन्देषु कन्दलीनां स्तम्भेषु च क इव राजरम्भाणाम् ॥ ५८ ॥**

**प्रभाविलासः**

इति । **अत्यञ्चितादरः**; अतिशयितादरः । अत्रादरपदसमभिव्याहारेण समीक्षत इति स्निग्धाख्या दृष्टिरुक्ता ।

"विकासिस्निग्धमधुरा चतुरे बिभ्रती भ्रुवौ ।
कटाक्षिणी साभिलाषा दृष्टिः स्निग्धाभिधीयते ॥"

इति लक्षणात् । अत्र सुभट इति वीररसो व्यज्यते । तस्य गुणतया शृङ्गाररस इत्युभयोः संकरः ॥ ५७ ॥

**भोगेष्विति । भोगेषु**; प्राप्तेषु । **कन्दलीनाम्**; क्षुद्रकन्दलीनाम् । **कन्देषु**; मूलेषु । **राजरम्भाणां** स्तम्भेषु च क इव सारं लभेत । इयं चाक्षेपिकी ध्रुवा, "प्रसङ्गमध्येऽन्यार्थस्याक्षेपादाक्षेपिकी ध्रुवा" इति लक्षणात् ॥ ५८ ॥

**प्रभावली**

प्रायावलोकनयुक्तम् । **भङ्गुरभ्रु**; भ्रूभङ्गयुक्तम । **अञ्चितं** समीचीनम् **अधरं** यस्य । **स्त्रीणां मुखमखण्डितादरः कामः समीक्षते**; अस्त्ररूपतया प्रयोक्तुमिति भावः ॥ ५७ ॥

अथ विरक्त्यागमनं प्रस्तुवन् विरक्त्यालापं दर्शयति—**भोगेष्विति । यौवतानाम्**; युवतिसमूहानां **भोगेषु । अर्थानां** धनानां **योगेषु** प्राप्तिषु । **कन्दलीनां कन्देष्विव राजरम्भाणां स्तम्भेष्विव कः सारं** स्थिरांशं **लभेत** ॥५८॥

[1] तत एव—ख. [2] नाम्नीं—ग.

(उभौ सादरमाकर्णयतः)

(पुनर्नेपथ्ये)

अदभ्रजघनस्तनप्रभृतिमांसविस्फूर्जित-
प्रसक्तविकटव्रणप्रतिपदज्ञया प्रज्ञया ।
स्त्रियस्त्रिगुणवीचिमद्गरलवीचिकाश्चिन्तय-
न्नसभ्यपरिपाटिकां पठति गाढमूढो जनः ॥ ५९ ॥

नारदः—सखे, श्रूयते किलायमायोधनाभिमुखहृदयाया विरक्तेरालापः ।

तुम्बुरुः—(सभयसंभ्रमम्) भगवन्, अभिपतति चासौ विरक्तिमपहस्तयितुकामः कामः । (क्षणमिव निर्वर्ण्य) अहह,

प्रभाविलासः

अदभ्रेति । अदभ्रजघनस्तनं प्रभृति येषां तानि च तानि मांसविस्फूर्जितानि दुर्मांसानि, तेषु प्रसक्तविकटव्रणानि अस्थिपर्यन्तलग्नपिटकानि । प्रतिपदः ज्ञप्तेः अज्ञया प्रज्ञया विवेकशून्यया त्रिगुणवीचिमति संसारसागरे गरलवीचिकाः स्त्रियः चिन्तयन् भोग्यतयानुसदधानः असभ्यपरिपाटिकां सभ्यानर्हवचनपरिपाटीं पठति ॥ ५९ ॥

प्रभावली

अदभ्रेति । अदभ्रं स्थूलं यज्जघनस्तनप्रभृतीनां मांसं, तस्य विस्फूर्जितम् उच्छूनता, तस्मिन् प्रसक्तम् उद्भूतं यद्विकटव्रणम् उत्कटग्रन्थिः, तस्य प्रतिपदं पर्यायः, तं जानातीति तज्ज्ञया प्रज्ञया स्त्रियः त्रिगुणवीचिमतः प्रकृतिसमुद्रस्य गरलवीचिकाः विषोर्मयः इति जानन्नपि गाढमूढः गाढमूढत्वादिति हेतुगर्भमिदम् । असभ्यपरिपाटिकां साधुसभानर्हं किमपि पठति ॥५९॥

स्वमित्रमुपधात्रयप्रथितशुद्धि लोभात्मकं
झटित्यलघुतुष्टिकुक्ष्यनलदग्धमित्याकुलः ।
विरक्तिरणदेवताविपुलदृष्टिवैश्वानरं
प्रविश्य मकरध्वजः पुनरनङ्गतामागतः ॥ ६० ॥

अपिच, शृङ्गारोऽप्ययमनङ्गसमरनासीरयोधी[1] सर्वतो भङ्गमनुभवन्नभङ्गुरमहिमशालिना विरक्तिवैभवेन विलयमधिगच्छति ।

इह च,

प्रभाविलासः

**अपहस्तयितुकामः** ; अपवाहयितुमिच्छन् । **स्वमित्रमिति** । **उपधा** ; धर्मार्थकामैः राज्ञामात्यानां परीक्षणम् । धर्मार्थकामभयोपन्यासेनाशयान्वेषणमिति यावत् । "उपधा धर्माद्यैर्यत्परीक्षणम्" इति निघण्टुः । हेतुत्रैविध्यादुपधात्रैविध्यम् । यथाह कौटिल्यः—"उपधिभिः शौचाशौचपरिज्ञानममात्यानाम्" इति । उपधात्रयेण प्रथिता शुद्धिर्यस्य तत् । लोभात्मकं स्वमित्रमित्यन्वयः ॥ ६० ॥

प्रभावली

**अपहस्तयितुकामः** ; विह्वलीकर्तुकामः । **स्वमित्रमिति** । इह स्वशब्देन कामः ; तस्य मित्रं लोभः । स च उपधात्रयप्रथितशुद्धिर्भवति । उपधात्रयम् ; उपाधित्रयम् । धर्मादिभिः परीक्षणमुपधात्रयमित्युक्तम् । धर्माद्यैर्यत्परीक्षणं तेन प्रथिता शुद्धिर्यस्य । एतदुक्तं भवति—परीक्षाहेतुत्रैविध्यात्तन्निश्चितस्वरूपत्रैविध्यमिति । प्रथितशुद्धिश्चासौ लोभश्च, तदात्मकं मित्रम् । झटिति अलघुतुष्टेः महासंतोषस्य कुक्ष्यनलेन जाठराग्निना । अलघुपदमनलस्य विशेषणं वा । दग्धमिति श्रुत्वा आकुलः विरक्त्या सह यद्रणं, तस्य देवताया विपुलदृष्टिरूपाग्निम् । रुद्रलोचनाग्निमिवेति शेषः । प्रविश्य पुनरप्यनङ्गत्वमाप ॥ ६० ॥

अनङ्गसैन्यनासीरयोधी शृङ्गाररसोऽपि विरक्तिवैभवेन विलयमधि-

[1] अनङ्गसमयनासीरवीरः—छ.

निःसंबोधमशेषतो वितनुते देवासुरान्तःपुरं
कर्णेषु प्रचिनोति कामपि सुधां कामागमद्रोहिणाम् ।
क्षिप्रक्षोभितचक्रवालशिखरिप्राकाररिङ्खारट-
[1]च्छृङ्गाघातनिरोधपिण्डितपटुः शृङ्गारभङ्गारवः ॥ ६१ ॥

नारदः—हन्त, जुगुप्सनीयाः संप्रति योषितः संवृत्ताः ।

[2]तुम्बुरुः—उचितमेवैतत् ।

[3]ब्रह्मेन्द्रपतिनन्द्यानां वपुरप्सरसामपि ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रमयं न किम् ॥ ६२ ॥

## प्रभाविलासः

शृङ्गारोऽपि; शृङ्गाररसोऽपि । निःसंबोधमिति । निःसंबोधम्; मूर्छितम् । क्षिप्रक्षोभिते चक्रवालशिखरिप्राकारे; पृथ्वीवेष्टनात् प्राकारत्वम् । रिङ्खया स्खलनेन रटन्ति स्वनन्ति यानि शृङ्गाणि, तेष्वाघातनिरोधेन पिण्डितः संघीभूतः, अत एव पटुः । शृङ्गारभङ्गारवः ॥ ६१ ॥

ब्रह्मेति । मानुषदेहापेक्षया किंचित्सारवत्ताप्रतीतावपि सप्तधातुमयत्वमविशिष्टमिति भावः ॥ ६२ ॥

## प्रभावली

गच्छतीत्याह—शृङ्गारोऽपीति । निःसंबोधमिति । शृङ्गारस्य भङ्गे य आरवः सः देवासुरान्तःपुरं यत्, तत् निःसंबोधं वितनुते । कामागमद्रोहिणां विरक्तानां कर्णेषु कामपि सुधां वर्धयति । कीदृशो रव इत्यत्राह—क्षिप्रेति । क्षिप्रक्षोभितः चक्रवालशिखर्येव प्राकारः, तत्र रिङ्खा रिङ्खणं, तेन आरटत्सु समन्तात् शब्दायमानेषु शृङ्गेषु आघातेन आहत्या यो निरोधः, तेन पिण्डितः संघीभूतः, अत एव पटुः सर्वजगद्बधिरीकरणसमर्थः ॥ ६१ ॥

[1] शृङ्गाधूत—क. शृङ्गाघाट—ग. [2] तुम्बुरुः omitted—ख.
[3] महेन्द्र—क, ख.

किञ्च,

वर्ष्मेदं सप्तधातु त्रिविधमलमयं योनियुग्मप्रसूतं
चातुर्विध्योपपन्नस्थिरचरविविधाहारसारात्मकं च ।
[1]इत्थंत्वेऽनन्तदोषाकर इति मुनिभिर्घोषिता योषिदाख्या
मीमांस्या मांसरेतोरुधिरकफवसानिर्मिता चर्मभस्त्रा ॥ ६३ ॥

ततश्च,

गर्हणीयबहुदोषगर्भिते[2] योषितां वपुषि तोषितात्मनः ।
नारकेऽप्यमितदुःखकारके रौरवे भवतु गौरवेण धीः ॥ ६४ ॥

प्रभाविलासः

**वर्ष्मेति** । **धातवः**; मांसादयः । **त्रिविधमलम्**; नासिकानेत्रश्रोत्रमलम् । **योनियुग्मम्**; गुह्यद्वयम् । भक्ष्यभोज्यलेह्यचूष्यभेदेन चातुर्विध्यम् । **स्थिरम्**; अन्नादि । **चरम्**; कुक्कुटादि । भक्ष्याभक्ष्यविचारशून्यत्वाय सामान्यनिर्देशः ॥ ६३ ॥

**गर्हणीयेति** । अत्र

"मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः ॥"

इति स्मारितम् ॥ ६४ ॥

प्रभावली

**वर्ष्मेति** । इदम्; शरीरम । सप्त धातवः मांसादयो यस्मिन् । त्रिविधमलं यत् नयननासिकोदरजं मलं त्रिविधं, तन्मयम् । स्त्रीपुंसयोः योनियुग्मप्रसूतम् । **चातुर्विध्यं** लेह्यचूष्यपेयखाद्यत्वेन । स्थिरचरात्मकत्वेन विविधस्य आहारस्य यः सारः, तदात्मकम् । इत्थंत्वे सति तदुपर्यनेकदोषाकर इति कथिता **योषिदाख्या चर्मभस्त्रा** मांसादिनिर्मिता भस्त्रा । मीमांस्या; विचारणीया । विचार्यमाणे जुगुप्सावहेति भावः ॥ ६२, ६३ ॥

अतिहेयस्त्रीशरीरे आसक्तचित्तस्यामितदोषाकरे नरकेऽपि रतिः स्यादित्याह

[1] इत्थं चानन्त—क. [2] गर्हिते—क. ख.

भगवन्, एतावन्तं कालमत्यन्तबहुमतिपदं स एवेदानीमत्यन्तजुगुप्सनीयः संवृत्तः सर्वलोकमौलिभार्यसायकः सयूथो मन्मथः।

(सनिर्वेदमिव निश्वस्य)

परिचरति तवासौ पार्श्ववर्ती वसन्तः
किमपि मधुकरीभिर्गीयते नाम[1] जैत्रम्।
तदपि मदन दैन्यं प्रापितस्त्वं नियत्या
क इव कथय दैवं पौरुषेणोपरुन्ध्यात्॥ ६५॥

भगवन्, अभङ्गुरा खलु देवी नियतिः;

संभोगैकान्त्यवादी निरयभयकथाभङ्गसङ्गी निकामं
शस्त्रच्छिन्नार्धदेहद्वयघटनभवद्दिव्यदांपत्यशिल्पी[2]।
प्रख्यातातिक्रमोऽसौ परपुरुषवशैर्गोपकन्यासहस्रै-
रेकस्त्रैलोक्यवीरः स्मर इह मृदितः क्वावतिष्ठेत कोपः॥ ६६॥

प्रभाविलासः

परिचरतीति। "दैवमेव परं मन्ये पौरुषं तु निरर्थकम्" इति स्मारितम्॥ ६५॥

संभोगेति। **निरयभयकथाभङ्गसङ्गी**; परलोकनास्तिक्येन नरकभयमपह्नुवान इत्यर्थः। **परपुरुषः**; इतरजनः, पुरुषोत्तमश्च॥ ६६॥

प्रभावली

—**गर्हणीयेति**। **नारके**; नरके। तदुक्तम्—"देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः" इति॥ ६४॥

कामं संबोध्य तुम्बुरुराह—**परिचरतीति**। भो मदन तव वसन्तः पार्श्ववर्ती सन् परिचरति। जैत्रं ते धाम तेजः मधुकरीभिः गीयते। **तदपि**; तथापि। त्वं नियत्या दैन्यं प्रापितोऽसि। तथाहि को वा दैवं सामर्थ्येन लङ्घयति॥ ६५॥

कामे ईदृशीमवस्थां प्राप्ते कोपः क्व वर्ततेत्याह—**संभोगेति**। संभोग

[1] साम—ग; धामेति प्रभावलीपाठः.
[2] शिल्पः—ग. छ.

नारदः—सखे, मा नाम सहसा [1]कोपमेवमवमंस्थाः। अयं किल पुरस्ताल्लोभस्य कामस्य च विनिपातमसहमानः समुत्पत्य विश्वलोकप्रथितकीर्तिं विवेकमास्कन्दितुमीहते। तथाहि—

क्षुदिन्धनवसुंधराधरधुरंधरः किं मृषा-
तृषारभसचूषणक्षपित[2]पञ्चषाम्भोनिधिः।
[3]हठत्रुटितहाटकाचलतटीबृहत्कुण्डलः
प्रसर्पति रणाङ्कणं प्रथित एष कोपासुरः॥ ६७॥

प्रभाविलासः

क्षुदिति। क्षुत्पदेन जाठराग्निरुच्यते। तस्या इन्धनं काष्ठनिचयभूतो वसुंधराधरधुरंधरः हिमवान् यस्य सः तथोक्तः। अनेन क्षुत्कालकोपवशात् सर्वं ग्रसितुं मतिरुत्पद्यते इत्युक्तम्। अत्र कुम्भकर्णभीमसेनगरुत्मन्तो निदर्शनम्। तृषेति। तृण्निमित्तकोपवशात् सागरचूषणमपीषत्करमिति भावः। अत्र कुम्भयोनिरुदाहरणम्। हठेति। हाटकाचलः; मेरुः। कोपवशेनासंहार्यमपि संहरतीति भावः। वज्रपाणिरुदाहरणम्॥ ६७॥

प्रभावली

एकमेव वस्तु, नान्यदिति वादी। निरयभयप्रसङ्गस्य भङ्ग एव सङ्गी। शस्त्रेति। शस्त्रेण कुसुमरूपेण छिन्नौ अर्धदेहौ यस्य, तच्च तत् द्वयं च स्त्रीपुंसयुग्मं, तस्य घटनेन भवत् दिव्यदंपतिविषयम् अर्धनारीश्वरविषयं शिल्पकरणनैपुण्यं यस्य। परपुरुषवश्यैः गोपकन्यासहस्रैः प्रख्यातः अतिक्रमः अपनीतिः यस्य सः, मुदितः। एवं सति कोपः क वर्तेत; न कापीत्यर्थः॥ ६६॥

क्षुदिति। क्षुध इन्धनानि दाह्यानि, वसुंधराधरधुरंधराः हिमवदादयो यस्य। अनेन पर्वतपक्षच्छेदहेतुरिन्द्रस्य कोप उक्तः। अथवा जामदग्न्यस्य कोपः। तदा वसुंधराधरधुरंधराः राजश्रेष्ठाः। तृषायाः पिपासायाः वेगेन यच्चूषणं पानं, तेन क्षपिताः पञ्चषाम्भोनिधयो यस्य सः। हठात् त्रुटितस्य

[1] कोपमेवं मंस्थाः—क. ख. [2] क्षुभित—क. [3] हठात् त्रुटित—ग.

तुम्बुरुः—(सभयसंभ्रमम्) अतिघोरचेष्टितः खल्वसावशेषविध्वंसनतर्षवानमर्षः । तथाहि—

अपि वैरिवरूथिनीमशेषामपि शैलानपि सागरानपि क्ष्माम् ।
ग्रसितुं प्रभवत्ययं प्रदीप्तः प्रथितः कोपतनूनपादनूनः ॥ ६८ ॥

नारदः—सखे, पश्य पश्य ;

जिघांसाजानिनानेन स्थिरत्रसमिदं जगत् ।
वध्यघातकभावेन विभज्य विनियुज्यते ॥ ६९ ॥

अपिच,

करचरणनखरदन्तप्रभृतिकमपि जगति सहजमितरदपि ।
प्रतिघसुभटस्य विश्वं प्रहरणमथवा विहर्तुमुपकरणम् ॥ ७० ॥

प्रभाविलासः

अपीति । तनूनपात्; अग्निः ॥ ६८ ॥
जिघांसेति । जिघांसा जाया यस्य स जिघांसाजानिः ॥ ६९ ॥
करेति । इतरदपि; मुद्गरादिकमपि ॥ ७० ॥

प्रभावली

हाटकाचलस्य कैलासस्य मेरोर्वा तटी, सैव बृहत्कुण्डलं यस्य सः । अनेन रावणस्य रुद्रस्य वा कोप उक्तः ॥ ६७ ॥

कोपतनूनपात्; कोपाग्निः ॥ ६८ ॥

अनेन सर्वं जगत् स्ववशवर्ति क्रियत इत्याह—जिघांसेति । जिघांसा जाया यस्य सः । स्थिरत्रसम्; स्थावरजङ्गमात्मकम् । तत्र केचन वध्याः, केचन घातकाः; तेषां भावेन विभज्य उपभुज्यते ॥ ६९ ॥

अथास्य कोपस्य हन्तुः करचरणादिरूपं सहजं वस्तु, काष्ठपाषाणादिकमसहजं च वस्तु, सर्वं प्रहरणं भवति, विहर्तुमुपकरणं च भवतीत्याह—करचरणेति ॥ ७० ॥

अत्र पुनरप्रसह्योत्थानममर्षमुपशमयितुमप्रधृष्योदयां क्षान्तिं पुरस्कृत्य निस्तरङ्गजलधिरिव निरूढधैर्यस्तिष्ठति विवेकः । इह च,

रुन्धानः सिन्धुघोष[1]प्रथनमनिभृतं क्रन्दयन्क्ष्माधरेन्द्रान्
भिन्दानः स्कन्धभेदान्सुरपथरथिनां शुष्मणः सारथीनाम् ।
शुद्धालोकेन सद्यः क्षयमुपगमितः क्षान्तिमन्दस्मितेन
क्षुभ्यद्वैधात्रसौधध्वनिगुणितरवः कोऽपि कोपाट्टहासः ॥७१॥

अमी च,

कुलशिखरिगरिष्ठाः क्षोणिधृत्यर्हकुम्भाः
कुलिशकठिनदन्ताः क्ष्वेलसंघातघोराः ।
कतिचन रणरङ्गे कन्तुकीकृत्य मुक्ता
न जहति भयमस्माद्न्तिमं दन्तिमल्लाः ॥ ७२ ॥

प्रभाविलासः

रुन्धान इति । प्रथनम्; प्रसिद्धिम् । सुरपथरथिनाम्; आकाशमार्गरथिकानाम् । शुष्मणः सारथीनाम्; वायूनाम् । स्कन्धभेदान्; वायुमार्गानित्यर्थः । अट्टहास इति; अतिहसितमुच्यते,

"संरब्धं साश्रुनेत्रं च विसृष्टस्वनमुद्धतम् ।
करोपगूढपार्श्वं च तच्चातिहसितं भवेत् ॥"

इति लक्षणात् ॥ ७१ ॥

कुलेति । क्ष्वेलसंघातवत् गरलराशिवत घोराः ॥ ७२ ॥

प्रभावली

कोपाट्टहासः क्षान्तिमन्दस्मितेनोपशमं नीत इत्याह—रुन्धान इति । अनिभृतम्; उद्धतम् । सिन्धुघोषप्रथनम्; समुद्ररवप्रथाम अभिभवन् । सुरपथे गगने, रथिनां तत्र संचरतां, शुष्मणः वह्नेः सारथयः वायवः तेषां, स्कन्धभेदान् व्यूहभेदान् भिन्दानः । वैधात्रः ब्रह्मसंबन्धी यः सौधः; क्षुभ्यतो वैधात्रसौधस्य ध्वनिना गुणितः प्रगुणीकृतो रवो यस्य सः । कोपस्य अट्टहासः शुद्धालोकेन धवलप्रभेण क्षान्तेः मन्दस्मितेन शाम्यतीति भावः ॥७१॥

पुनरपि कोपवैभवं वर्णयति—कुलशिखरीति । कुलशिखरिवत् गुरुतराः ।

[1] प्रथित—क.

तुम्बुरुः—भगवन्,

**अपि विश्वमिदं दिधक्षतोऽस्य [1]त्रिपुरारातिमुखेषु लब्धभूम्नः।**
**मदहस्तिघटावमर्दलीलां मशकामर्शनमात्रमित्यवैमि ॥ ७३ ॥**

भगवन्, अयमसाविदानीममर्षस्य संप्रति संवर्तधाराधरगर्जितगम्भीरभैरवप्रसृतिस्त्रिभुवनमपि बधिरयति कुलगिरिकुहरभरितप्रतिनिवृत्तसंहताकृतिः सिंहनादः। तदाकर्णनसमसमयसमुत्थितया निष्प्रतिक्षेपया क्षमया निरुध्यमानः स्तब्धवृत्तिरयं[2] संदृश्यते कोपः। तथाहि—

**अयमिह क्षमया दलितः[3] क्षणात्प्रतिमुखेऽपि पराङ्मुखवद्व्रजन्।**
**न खलु याति न तिष्ठति च ह्रिया भवति सप्रतिघः प्रतिघः परः[4] ॥७४॥**

**प्रभाविलासः**

**अपीति। दिधक्षतः**; दग्धुमिच्छतः ॥ ७३ ॥

**अयमिति। सप्रतिघः**; सविघ्नः ॥ ७४ ॥

**प्रभावली**

क्षोणीभरणयोग्यकुम्भाः। गर्जितसंघातेन क्रूराः; यद्वा विषसंघातवत् घोराः। लीलाकन्तुकमिव केनाप्युत्क्षिप्यमाणाः दन्तिमल्लाः गजश्रेष्ठाः **अस्मात् कोपात् अन्तिमं भयं** मरणभीतिं न जहति ॥ ७२ ॥

**दिधक्षतः**; दग्धुमिच्छतः। त्रिपुरारातिमुखेषु लब्धभूम्नः प्राप्तवैभवस्य। **मदहस्तिघटाया** विमर्दलीला। **मशकामर्शनमात्रम्**; मशकापनयनमात्रमिति जानामि ॥ ७३ ॥

कोपस्य सिंहनादं वर्णयति—**भगवन्निति**। **इदानीं** क्रियमाणः संवर्तमेघगर्जितवत् भैरवप्रसरः। भरितः पूर्णश्चासौ प्रतिनिवृत्तः। अत एव **संहताकृतिः**। समसमये समानकाले निष्प्रतिक्षेपया क्षमया निरुद्धप्रवृत्तिरिव **दृश्यते**। क्षमया दमितस्य विह्वलत्वं वर्णयति—**अयमिति**। दमितः; प्रशमितः। पराङ्मुखो

1 सकलाराति—क. 2 वृत्तिरिव—ग. 3 दमितः—ख. ग. 4 परम्—क. ग.

(क्षणं निर्वर्ण्य) हन्त भगवन्, पश्य पश्य ;

अपरावर्त्यपि कोपः पश्चादाकृष्टपाद इव भाति ।

नारदः—(सान्तर्हासम्)

क्वचिदतिसंकटविषये सुभटानां संमतोऽप्युपसर्पः ॥ ७५ ॥

तुम्बुरुः—(सहर्षसंभ्रमम्)

यस्य त्रासनतर्जनप्रभृतयः क्रूरोद्धता वृत्तयो
यस्योन्मेषनिमेषयोस्त्रिभुवनं निद्राति जागर्ति च ।
आबध्यैनमवैधहिंसनमहासंरम्भसंभावित-
क्रीडोड्डामरबाहुदण्डलडहं[1] क्रोधं निहन्ति क्षमा ॥ ७६ ॥

**प्रभाविलासः**

**अपरावर्तीति** । **हासः** ; हसितम् । तल्लक्षणं तु,

"प्रफुल्लनयनं यत्तु गण्डैर्विकसितैरपि ।
किंचिल्लक्षितदन्तं च हसितं तद्विधीयते ॥"

इति । **सुभटानाम्** ; रामादीनाम् । तदुक्तम्—"परावर्तत वेगेन किंचित् त्वरितविक्रमः" इति । **अतिसंकटविषय** इति त्वरितविक्रम इति पदं विवृतम् । अस्य श्लोकस्योक्तिप्रत्युक्तिरूपतया वाकोवाक्यमलंकारः, "उक्तिप्रत्युक्तिमद्वाक्यं वाकोवाक्यमुदाहृतम्" इति लक्षणात् ॥ ७५ ॥

**यस्येति** । क्रूराश्च ता उद्धताश्चेति समासः । **अवैधहिंसनम्** ; व्यर्थहिंसा । **उड्डामरम्** ; उच्छृङ्खलम् । **लडहः** ; शब्दः ॥ ७६ ॥

**प्रभावली**

मुखो भवन् न चापयाति । न च तत्रैव तिष्ठति । ह्रिया विशिष्टो भवन् परं केवलं **प्रतिघः** कोपः सप्रतिघः सकोपो भवति ॥ ७४, ७५ ॥

**अवैधहिंसनमहासंरम्भेण** ; व्यर्थहिंसामहोद्योगेन । **संभावितया** ; संजातया । **क्रीडया उड्डामरः** गर्वितः । बाहुदण्डरूपो लगुडो यस्य । तमेनं कोपमावार्य क्षमा निहन्ति ॥ ७६ ॥

[1] लगुडमिति प्रभावलीपाठः

अपिच,

गुरुवधमुखक्रूरक्रीडाकठोरपराक्रमः
प्रथितमहितध्वंसो दक्षाध्वरप्रभृतिष्वसौ ।
स्वयमिह सुखाप्रतिः स्वर्गापवर्गविघातकः
क्षणरुचिपदं क्षान्त्या गच्छत्यमर्षहुताशनः ॥ ७७ ॥

नारदः—सर्वगुणातिशायिनी खल्वियं क्षान्तिः । यन्न किंचिदपि स्वावष्टब्धं केनाप्यवद्येन योजयति । तथाहि—

विबुधमहिते मेरावैरावणः करटी मुहुः
कषतु करटं कण्डूलं स्वं क्षरन्मदकर्दमम्
भजतु च [1]तटाघातं क्रीडाभिसंधिरसौ दृढं
न तु मलिनता नापि क्षोभः[2] क्षमाभृति संभृतः ॥ ७८ ॥

प्रभाविलासः

**गुर्विति** । शिवेन स्वपितुश्चतुर्मुखस्य शिरः क्रोधेन छिन्नम् । मुखपदेन जामदग्न्यादयः । तेन हि मातुः शिरश्छिन्नम् ॥ ७७ ॥

**विबुधेति** । **ऐरावणः करटीति**; गोबलीवर्दन्यायोऽभिप्रेतः । **करटम्**;

प्रभावली

**गुरुवधेति** । **गुरोर्वधः**; रुद्रस्य ब्रह्मा गुरुः पिता च, तस्य वधः मुखमादिर्यस्याः, सा च क्रूरक्रीडा च, तयोः कठोरः पराक्रमो यस्य । रुद्रस्य चतुर्मुखशिरःकृन्तने तत्कपालस्य करे लग्नतया कपालीति प्रसिद्धिः । कपालस्य विष्णुना मोक्षणं च पुराणेषु प्रसिद्धतमम् । **दक्षाध्वरप्रभृतिषु** प्रसिद्धस्य पूज्यस्य दक्षादेर्ध्वंसो वधो यस्य सः । **सुखस्य** भौमस्य शत्रुः । स्वर्गसुखस्य अपवर्गसुखस्यापि विघातकः । क्रुद्धस्य कोपाग्निः क्षान्त्या **क्षणरुचेः** विद्युतः **पदं** शीघ्रनाशं गच्छति ॥ ७७ ॥

**सर्वगुणेभ्यः** अतिशयवती खलु । **यत्**; यस्मात् । स्वपरिगृहीतं पुरुषं **केनाप्यवद्येन किञ्चिदपि न योजयति** । इममर्थमुपपादयति—**विबुधेति** ।

[1] तटक्रीडां पीडाभिसंधिः—क. [2] क्षोद;—क.

तुम्बुरुः—भगवन्, दुर्जयोऽसौ कोपः कथं नाम निर्जित इति विस्मयाविद्धं मामकं चेतः ।

नारदः—न वयमिह विस्मयामहे । यतः,

न शापो नाभिचरणं न वह्निर्न विषं तथा ।
नास्त्राणि न च शस्त्राणि यथा तीक्ष्णतमा क्षमा ॥ ७९ ॥

ततश्च,

अहार्येण कदाप्यन्यैरसंहार्येण कैरपि[1] ।
तितिक्षाकवचेनैव[2] सर्वं जयति संवृतः ॥ ८० ॥

प्रभाविलासः

गण्डस्थलम् । **पीडाभिसंधिः**; पीडयामीति तात्पर्यवान् । **क्षमाभृति**; पर्वते ॥ ७८ ॥

**न शाप इति । अभिचरणम्**; मारणकर्म ॥ ७९ ॥

**अहार्येण**; हर्तुमशक्येन । **असंहार्येण**; संहर्तुमशक्येन ॥ ८० ॥

प्रभावली

विबुधैः महिते महामेरौ ऐरावणाख्यो गजः क्षरन्मदकर्दमम्, अत एव कण्डूतियुक्तं स्वं करटं कपोलं कण्ड्वा मुहुः कर्षतु । असौ ऐरावणः क्रीडायामभिसंधिमान् सन् तटाघातं भजतु च । अथापि क्षमाभृति तस्मिन् पर्वते न च मलिनता, नैव क्षोभः । क्षमाभृतीत्ययमर्थो द्योत्यते—क्षमावतः पुरुषस्य परपरिभवेऽपि नैव क्षोभ इति ॥ ७८ ॥

कथं नाम; केन प्रकारेण । विस्मयाकुलितम् । नारदस्तु स्वस्य विस्मयो नास्तीत्याह—न वयमिति । तत्र हेतुमाह—यत इति । यथा क्षमा तीक्ष्णतमा, न तथा शापाभिचारवह्निविषशस्त्राणीत्यर्थः । एतत्सर्वं प्रह्लादादिषु द्रष्टव्यमिति तात्पर्यम् ॥ ७९ ॥

अतोऽद्यापि तितिक्षाकवचेनैव शापादिसर्वविजयः स्यादित्याह—ततश्चेति । कदाचिदप्यन्यैः अहार्येण क्षमाकवचेन संवृतः पुमान् शापादिकं सर्वं जयति ॥ ८० ॥

[1] केनचित्—ख. [2] कवचेनैकः—ख.

[1]तथाहि—

प्रतिघोऽयमसह्यविस्फुलिङ्गः[2] प्रलयोदीर्णहुताशनप्रकाशः ।
अमृतोदधिसंप्लुतिप्रथिम्ना क्षमया क्षिप्रमभूदसावलक्ष्यः ॥ ८१ ॥

(विचिन्त्य) कथमिह विवेकभूभृतः सांग्रामिकविहारशेषः संपत्स्यते ? अथवा,

मदनक्रोधलोभानां निपाते मोहभूपतिः ।
योधयिष्यति यं कंचित्स्वयं वा योद्धुमर्हति[3] ॥ ८२ ॥

तुम्बुरुः—भगवन्, अलङ्घनीयस्वभावः खल्वभिनिवेशः, येन प्रत्यक्षितबलपराक्रमेऽपि विवेके प्रतिहतमनोरथस्यापि महामोहस्य पुनः पुनर्विजिगीषा विजृम्भते । श्रुतं किल महाभारते—"हते भीष्मे" इत्यादि । (अन्यतो निर्वर्ण्य) ।

कामादिनिधने दृष्टे कैमुत्यमपरामृशन् ।
क इवासीदति क्षुद्रः कश्चिदेष रणाङ्कणम् ॥ ८३ ॥

प्रभाविलासः

मदनेति । कुम्भकर्णेन्द्रजित्प्रहस्तादिवधे रावणसमाधिः ॥८१,८२॥

पुनः पुनर्विजिगीषेति; "द्वाविमौ पुरुषौ" इत्युक्तमूर्खता व्यञ्जिता । हते भीष्मे इत्यादीति;

"हते भीष्मे हते द्रोणे कर्णे च निधनं गते ।
आशा बलवती राजन् शल्यो जेष्यति पाण्डवान् ॥"

इति प्रतीकशेषः ॥ ८३ ॥

प्रभावली

[4]अथ दर्पस्य युद्धाभिगमनं प्रस्तौति—अन्यत इति । कामादीनां निधने

[1] क omits this and the stanza following.

[2] विस्फुलिङ्गैः—क.

[3] योधयिष्यते—क.

[4] There is no Prabhāvalī Commentory for the stanzas 81 and 82.

नारदः—सखे, प्रख्यातनामा खल्वसावगणितपरहृदय-[1] शल्यः शल्य इव संनह्यति । तथाहि—

अवधीरयिता महत्तराणामवलेपोऽयमयन्त्रितस्वभावः ।
परकीर्तिवधूवशीचिकीर्षासुभगंभावुकबाहुरुज्जिहीते ॥ ८४ ॥

सर्वथा तावन्मोघोद्योग एव भविष्यत्ययमपि मोहसचिवः । तथाहि—

दर्पस्येह दृढप्रतिष्ठितमदोदग्रैर्विवेकाग्रतो
डिम्भक्षोभकडम्बरस्थपुटितारम्भैरलं संभ्रमैः ।
मृग्यं केसरिणो विधित्सितरणे रङ्कौ परं कौतुकं
क्रीडाखण्डितचण्डवारणघटातन्त्रस्वतन्त्रश्रियः ॥ ८५ ॥

प्रभाविलासः

**अवधीरयितेति** । सुभगं शोभनं भावयतीति सुभगंभावुकः ॥८४॥

**दर्पस्येति** । **डिम्भक्षोभकेण डम्बरेण**; गर्जितेन "आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते" इत्यमरः । स्थपुटितः आरम्भो येषां तैः ।

**प्रभावली**

दृष्टेऽपि 'अहं तत्र किमु' इति कैमुतिकन्यायः परामर्शयितव्यः । तदकुर्वन् अतिक्षुद्रः कश्चिद्रणाङ्कणमभियाति ॥ ८३ ॥

**अगणितम्** अविचारितं **परेषां हृदयशल्यं** पीडावहमिदमिति येन सः । अन्यत्र परशब्देन कर्णो विवक्षितः । कर्णस्य सारथ्यं कुर्वन् शल्यस्तस्य हृदयशल्यरूपाणि वचांसि व्याहृतवानिति महाभारतकथा सूचिता । अयं दर्प इत्याह—**अवधीरयितेति** । अभिजनवृत्तादिभिः **महत्तराणां** तिरस्कर्ता । **अयन्त्रितस्वभावः**; विजृम्भितस्वभावः । **परकीर्तिवधूवशीकरणेच्छया सुभगंभावुकं** सुभगीभवितुं शीलवान् **बाहुः** यस्य सः । **उज्जिहीते**; उद्गच्छति ॥ ८४ ॥

दर्पस्य संभ्रमाः विवेकस्य विस्मयावहा न भवन्तीत्याह—**दर्पस्येति** । **इह**; रणे । **दृढं** यथा तथा **प्रतिष्ठितेन मदेन उदग्रैः** उन्नतैः । **डिम्भानां** शिशूनां **क्षोभकेण** डम्बरेण संभ्रमेण **स्थपुटितः** विषमितः **आरम्भो** येषां तैः

[1] हृदयः शल्यरूपः शल्य इव—क.

तुम्बुरुः—(साश्चर्यम्) भगवन्, किमयमिदानीं मेघनाद इव तिरस्करणीं विद्यामास्थितः! यदसाविदानीमेवास्माभिर्दृष्टः क्षणान्तरे न दृश्यते।

नारदः—(सहर्षं विहस्य) तस्यैव मेघनादस्य लक्ष्मणेनेव परप्रयुक्ता खल्वियमस्य तिरस्करणी। तथाहि—

अभिजनधनविद्यावृत्तदाक्ष्यादिरूपै-
रुपधिभिरयमेकोऽनेकधा जृम्भमाणः।
पृथुमहिमविवेकप्रेक्षणादुत्पतन्त्या
प्रसभमधिकदृष्ट्या प्रापितो वीरशय्याम् ॥ ८६ ॥

**प्रभाविलासः**

**रङ्कौ**; कृष्णसारे। क्रीडाखण्डितचण्डवारणानां घटातन्त्रे समूहपरिच्छदे "तन्त्रं प्रधाने सिद्धान्ते तन्तुवाये परिच्छदे" इत्यमरः। स्वतन्त्रा श्रीः यस्य तस्य ॥ ८५ ॥

**अभिजनेति**। **दाक्ष्यम्**; सामर्थ्यम्। आदिपदेन वितरणादिकमुच्यते। **उपधिभिः**; व्यावर्तकैः। **उत्पतन्त्या**; उत्तिष्ठन्त्या। **अधिकदृष्ट्या**; 'मत्तोऽयमधिकः' इति ज्ञानेन ॥ ८६ ॥

**प्रभावली**

**संभ्रमैः विवेकस्याग्रतः अलम्**। विवेकस्याग्रे एभिः किं प्रयोजनम्? न किमपीत्यर्थः। तत्र दृष्टान्तमाह—**मृग्यमिति**। **क्रीडया खण्डितायाः चण्डवारणघटायाः** अधीना **स्वतन्त्रश्रीः** स्वातन्त्र्यलक्ष्मीः यस्य तस्य केसरिणः **विधित्सितरणे रङ्कौ** युद्धोद्युक्ते हरिणे **कौतुकं मृग्यं न** दृष्टमित्यर्थः ॥ ८५ ॥

दर्पस्य भङ्गं प्रस्तौति—**किमयमित्यादिना**। **मेघनादः**; इन्द्रजित्। तिरस्करणी विद्या न भवति। अधिकदृष्ट्याख्यस्त्रिया संहृतत्वान्न दृश्यत इत्याह—**तस्येति**। इन्द्रजितो लक्ष्मणेनादृश्यता प्रयुक्ता। तथा दर्पस्यापीयमदृश्यता अधिकदृष्टिरूपया शत्रुप्रयुक्तया। तदुपपादयति—**अभिजनेति**। **अभिजनम्**; कुलम्। **वृत्तम्**; आचारः। **दाक्ष्यम्**; दक्षत्वम्। आदिशब्देन ज्ञानादिसंग्रहः। एवंरूपैः **उपाधिभिः** हेतुभिः दर्पः **स्वयमेकोऽप्यनेकधा जृम्भमाणः**

तुम्बुरुः—(ससंभ्रमाद्भुतम्)

का चैषा कलियुगताटकेव भीमा धिक्कष्टं [1]कृतकलहेयमभ्यसूया ।
आसीदत्यभिपतति स्वयं विवेकं तामेतां द्यति मुदिता समग्रभूमा ॥८७॥

नारदः—(सहर्षम्) दर्पनिधनमसहमानेयमसूया राक्षसी देहिनीव भैमरथी रणमुखमागत्य दैवयोगेन दीर्घनिद्रामासादिता ।

तुम्बुरुः—अहो, दुर्निरोधा खलु भगवती भवितव्यता । यतः,

आत्यन्तिकीमभिजनादिभिरप्रधृष्या-
[2]मीर्ष्यादिभिः प्रियतमाभिरिहोपगूढाः ।
दर्पादयः क्षितितले दधति प्रसुप्तिं
वीराः स्वयं विधिवशादुपशान्तवैराः ॥ ८८ ॥

प्रभाविलासः

का चेति । द्यति; खण्डयति ॥ ८७ ॥

आत्यन्तिकीमिति । उपशान्तवैरा इति; "मरणान्तानि वैराणि" इति स्मारितम् ॥ ८८ ॥

प्रभावली

पृथुमहिम्नो विवेकस्य प्रेक्षणमात्रात् उद्गच्छन्त्या अधिकदृष्ट्या; 'अहं कियान् मत्तोऽप्यधिकाः परंशतं पुरुषा लोके सन्ति' इति ज्ञानमधिकदृष्टिः, तया प्रसह्य बलात्कृत्य वीरशय्यां निधनं प्रापितः ॥ ८६ ॥

अथासूयाया, युद्धाभिगमनं मुदिताख्यया स्त्रिया तस्याः संहरणं चाह—का चेत्यादिना । कलियुगताटकेव भीमा एषा केति प्रथमं संशय्य स्वयमेव निश्चिनोति—धिक्कष्टमिति । इयं धृतकलहा कलहहेतुः असूया भवति । एनां धिक् । कष्टं जातम्; लोकस्येति शेषः । अथेयमसूया पतिनिधनमसहमाना सती मूर्तिमती भैमरथीव स्थिता विवेकसमीपमागत्य दोषादर्शनापरनाम्न्या मुदिताख्यया विवेकप्रयुक्तया मरणं प्रापितेत्याह—आसीदतीत्यादिना दीर्घनिद्रामासादितेत्यन्तेन ॥ ८७ ॥

अथ नियतेर्दुर्निवारतां दर्शयति—आत्यन्तिकीमिति । यतः कारणात्

1 धृतकलह—ग. 2 तृष्णादिभिः—ख.

नारदः—सखे, न खल्विदमद्भुतम्, यन्निरवधिकपौरुषाणामप्यनतिक्रमणीया नियतिरिति। एतस्यैव खल्वियमुदाहृतिः—

**इतरेतराभ्यधिकभीमविक्रमाः पुनरुच्यमानमधुकैटभादयः।**
**प्रविशन्त्युदग्रविगलन्मद[1]ग्रहास्त इमे विपत्तिमिह मोहमन्त्रिणः॥८९॥**

(अन्यतोऽवलोक्य) अहो, महदिदमापतितमिदानीमप्रतिद्वन्द्वं द्वन्द्वयुद्धम्। इह हि,

**अतिबलेन विवेकमहीभृता निरवशेषितमन्त्रिगणः क्षणात्।**
**अहह मोहमहीपतिराहवे सपदि राघवशत्रुरिवोत्थितः॥ ९० ॥**

प्रभाविलासः

**इतरेतरेति। पुनरुच्यमानाः** पश्चादुच्यमानाः मधुकैटभादयः येभ्यस्ते। मधुकैटभादिभ्योऽप्यधिकबला इत्यर्थः। **विलगन्**; संसृजन्॥८९॥

**अतिबलेनेति। राघवशत्रुः**; रावणः॥ ९० ॥

प्रभावली

**दर्पादयो वीराः विधिवशादुपशान्तवैराः ईर्ष्यादिभिः प्रियतमाभिः स्वस्त्रीभिः उपगूढाः** आलिङ्गिताः सन्तः **इह क्षितितले स्वयमेव अभिजनादिभिः अप्रधृष्याम्** अभिजनविद्यावृत्तादिभिः अनपहरणीयाम् **आत्यन्तिकीं प्रसुप्तिं** मरणं **दधति**॥ ८८ ॥

निरवधिकशौर्याणामप्यलङ्घनीया नियतिरिति यत्तदद्भुतं न भवति। अस्यार्थस्येयं कामक्रोधादिमृतिः उदाहृतिः दृष्टान्तः। इदमेवाह—**इतरेतरेति**। परस्परम् अत्यधिकपराक्रमाः। मधुकैटभादयः पुनरुक्तयो येषां ते। **इमे मोहमन्त्रिणः**; कामादयः। उदग्रं यथा तथा **विलगन्** विलग्नो **मद** एव **ग्रहः** पिशाचः येषां ते। **विपत्तिं** प्रविशन्तीतीयमुदाहृतिः॥ ८९ ॥

अथ महामोहस्य युद्धागमनं वर्णयति—**अन्यत इति। आपतितम्**; प्राप्तम्। **अप्रतिद्वन्द्वम्**; दृष्टान्तरहितम्। **अतिबलेनेति**; स्वस्मात् अधिकबलेन। **निरवशेषितः**; निःशेषं संहृतः। **राघवशत्रुरिव**; रावण इव॥ ९० ॥

[1] विलगन्मदेति व्याख्ययोः पाठः

अत्र चायमहितबलनिर्मूलनसमुन्मीलितसमरसंरम्भः स्वयमिह समायाति सुरगणसंस्तूयमानवैभवः सुमतिवल्लभः । अयं हि—

**मर्यादातीतवादद्विरदमृगपतिर्वक्रतर्काद्रिवज्रः**
**प्रत्यग्वैमुख्यतूलप्रलयदिनमरुद् भ्रान्तिवीरुद्दवाग्निः ।**
**कामक्रोधाहिताक्ष्र्यः कलिकलुषकथाकालरात्रिप्रभातं**
**मोहावश्यायभानुर्विहरति समितौ व्यक्तवेगो[1] विवेकः ॥९१॥**

**प्रभाविलासः**

**मर्यादेति । मर्यादां** श्रुतिस्मृत्युदीरिताम् **अतीतो वाद** एव **द्विरदः** गजः, तस्य **मृगपतिः** सिंहः । **वीरुत्**; लता । **अवश्यायः**; नीहारः ॥ ९१ ॥

**प्रभावली**

अथ विवेकं वर्णयन्नयं समरे विहरतीत्याह—**मर्यादेति । मर्यादा**; विधिनिषेधव्यवस्था । सा अतीता यस्मिन् । आहिताग्न्यादित्वान्निष्ठायाः परनिपातः[2] । **मर्यादातीतो वादो** येषां ते, बाह्या इत्यर्थः । त एव **द्विरदाः** । तेषां सिंहः । **वक्रः तर्कः** येषां ते वैशेषिकादयः । त एव पर्वताः । तेषां विदारकः । **प्रत्यग्वस्तुनि ब्रह्मणि वैमुख्यं** येषां ते । श्रुत्यादिसिद्धकल्याणगुणानङ्गीकारात् यथावस्थितब्रह्मणि वैमुख्यम् । ते मृषावादिनः । त एव तूलं, तस्य प्रलयकालवायुः । **भ्रान्तयः** देहात्मबुद्ध्यादयः, ता एव **वीरुधः**, तासां **दवाग्निः** । अत्र भ्रान्तेर्धर्ममात्रस्योक्तत्वात् पूर्वत्र सर्वत्रापि तत्पुरुषाश्रयणेन वादादिमात्रपरत्वं ग्राह्यमिति वदन्ति । **कामक्रोधावेव अही**, तयोः ताक्ष्र्यः । **कलिकलुषप्रसङ्ग एव कालरात्रिः**, तस्याः प्रभातं तन्निवर्तकम् । **मोहः** अज्ञानमेव **अवश्यायः** तुहिनं, तस्य **भानुः** निरासकः । विवेकः **समितौ** रणे स्पष्टवेगः सन् **विहरति** ॥ ९१ ॥

[1] समितिव्यक्तवेगः—क.

[2] मर्यादामतीतो मर्यादातीतः; द्वितीया श्रितातीतेत्यादिना समास इति तु सरसगतिः ।

तुम्बुरुः—(सहर्षाद्भुतम्) भगवन्, इदं पुनरिह महामोहस्य मौलिताडनम्। अत्र हि—

[1]निरुद्धरिपुडम्बरो [2]निगमघोषनिष्पादित-
प्रतिश्रुतिरनुद्रुतप्रलयसिन्धुधीरध्वनिः।
त्रिवर्गपुटभेदनप्रथमकम्पकर्णेजपो
विवेकसुभटाग्रतो विजयदुन्दुभिस्ताड्यते ॥ ९२ ॥

नारदः—सखे, नूनमिदानीमत्यासन्नो विवेकस्य मनोरथलाभः। अत्र हि—

दुराशादुर्मानच्छलनमदमात्सर्यकुहना-
परीवादद्रोहप्रभृतिपरिवारस्तुतगतिः।
मनीषासारथ्यप्रमुदितविवेकप्रतिमुखं
महामोहः क्रूरः स्वयमुपसमायाति समरम् ॥ ९३ ॥

**प्रभाविलासः**

**निरुद्धेति। निगमजातनिष्पादितप्रतिश्रुतिः**; वेदसमूहनिर्वर्तितप्रतिध्वनिः। **कर्णेजपः**; सूचकः ॥ ९२ ॥

**दुराशेति। मनीषा**; सुमतिः ॥ ९३ ॥

**प्रभावली**

इदं वक्ष्यमाणं महामोहस्य मौलिताडनमिवाभातीत्याह—**इदं पुनरित्यादि**। **निरुद्धेति**। **निरुद्धः** रिपूणां **डम्बरः** येन। **निगमघोषेण** संपादिता प्रतिध्वनिर्यस्य। **अनुद्रुतः** अनुसृतः **प्रलयसिन्धोः** धीरध्वनिर्येन। **त्रिवर्ग** एव **पुटभेदनं** पत्तनं, तत्प्रथमकम्पस्य सूचकः। **विजयदुन्दुभिः ताड्यते** ॥ ९२ ॥

**मनोरथः**; मोहविजयविषयः। अत्र विवेकसमीपं प्रति महामोहः स्वयमुपयातीत्याह—**दुराशेति**। अलभ्याशा **दुराशा**। अल्पविद्यया महागर्वो **दुर्मानः**। **छलनम्**; वञ्चनम्। **मदः**; गर्वः। **मात्सर्यम्**; अन्यानुभवद्वेषः। **कुहना**; कापट्यम्। **परीवादः**; निन्दा। **द्रोहः**; वधः। प्रभृतिशब्देन दम्भादय उक्ताः।

[1] निरुद्धनिबिडाम्बरः—ग. [2] निगमजातेति प्रभाविलासपाठः।

अपिच,

प्रत्यासन्नं प्रतिभटमिह प्रत्युदेता विधत्ते
गाढामर्षस्फुरणकुटिलान् कार्मुके दृष्टिपातान् ।
दूरोद्भूतस्वपरनियतिं[1] दुर्मतिं प्रेक्षमाणो
रागाभिख्यं दुरितजलधिं गाहते मोहवीरः ॥ ९४ ॥

तुम्बुरुः—(सभयसंभ्रमाद्भुतम्) भगवन्, अतिघोरप्रवृत्तिरसौ रथयूथवीथिकापथेन रणाङ्गणमवतीर्णः ।

उद्भटकबन्धताण्डवमुन्मदभारुण्डतुण्डहृतमुण्डम्[2] ।
रणभूमिमण्डलमसौ मण्डलमिह चरति मोहदण्डेशः ॥ ९५ ॥

प्रभाविलासः

**प्रत्यासन्नेति । प्रत्यासन्नं प्रतिभटम्;** समीपस्थितं शत्रुम् । **प्रत्युदेता;** प्रत्युद्गन्ता । **स्वपरनियतिम्;** स्वायत्तभाग्याम् ॥ ९४ ॥

**उद्भटेति । कबन्धः;** कृत्तशीर्षदेहः । **भारुण्डाः;** गृध्रादिशकुनाः । तेषां **तुण्डैः** चञ्चुभिः **हृतानि मुण्डानि** छिन्नार्धशीर्षाणि यस्मिंस्तथोक्तम् ।

**प्रभावली**

**एभिः परिवारैः** परिजनैः **स्तुतपदक्रमः** । **मनीषा;** सम्यग्ज्ञानम् । तत्कृतसारथ्येन प्रमुदितस्य विवेकस्य अभिमुखं समरमुपसमायाति ॥ ९३ ॥

**प्रतिभटं** विवेकं **प्रत्यासन्नं प्रत्युद्गच्छन्** । किंच **दूरोद्भूता** निराकृता **स्वपरनियतिः** यया तां **दुर्मतिं प्रेक्षमाणः** रागाख्यं दुरितजलधिम् अवगाहते । दुर्मत्यां रागं कुरुत इत्यर्थः । अनेनासन्नेऽपि रिपौ स्ववीर्यातिशयान्महामोहस्यानादरो द्योत्यते ॥ ९४ ॥

किं भविष्यतीति भयम् । भयाच्च संभ्रमः । अपूर्वदर्शनात् अद्भुतम् । **असौ;** महामोहः । उभयतो रथेषु पङ्क्तिशस्तिष्ठत्सु तन्मध्यवीथिकापथेन रणस्थलं मण्डलं यथा तथा महामोहश्चरतीत्याह—**उद्भटेति । उद्भटम्** उद्भतं

[1] नियतिः—क. [2] भृतरुण्डम्—ग.

अपिच,

पातालक्षिप्तसिन्धुः प्रशकलितकुलक्ष्माभृदुत्कीलभूमि-[1]
निर्धूतादित्यचन्द्रद्युतिगणनिबिडध्वान्तनीरन्ध्रदिक्कः ।
वेधःसौधप्रभेदी विघटितपवनस्कन्धपर्यस्ततारः
प्रारब्धोऽसौ विवेकप्रतिरथिनि महानाहवे मोहवेगः ॥ ९६ ॥

नारदः—(सहर्षसंभ्रमम्) सखे, दिष्ट्या वर्धसे। पश्य पश्य ;

अप्रत्यूढचरः सुरासुरगणैरक्षोभितो राक्षसै-
रद्य प्रत्यवरुद्धवैरिसमरोत्सेके विवेकेश्वरे ।
स्वःस्थप्रत्ययितव्यदोषमलिनस्वर्वासदुर्वासना-
मूलच्छेदविलीयमानमहिमा मोहस्य मोघः स्यदः ॥ ९७ ॥

प्रभाविलासः

**मण्डलम्** ; वर्तुलाकारम् । **दण्डेशः** ; राजा ॥ ९५ ॥

**पातालेति** । **उत्कीला** ; उत्क्षिप्तसंधिबन्धा भूमिर्येन सः । **द्युति-गणः** ; शुक्रादिः ॥ ९६ ॥

**अप्रत्यूढचर इति** । **अप्रत्यूढचरः** ; अप्रतिहतगतिः । **स्यदः** ;

प्रभावली

**कबन्धानां ताण्डवं यस्मिन्** । **उन्मदा ये भारुण्डाः** पक्षिविशेषाः, तेषां मुखैः उद्धृत्यापहृतानि मुण्डानि छिन्नशिरांसि यस्मिंस्त तत् **रणभूमिमण्डलम्** । **असौ** मोहपार्थिवः । दण्डस्य सेनाया ईशः दण्डेशो राजा । इह मण्डलं **चरति** ॥९५॥

वेगं वर्णयति—**अपिचेति** । **पाताले क्षिप्ताः सिन्धवः** समुद्रा येन । **प्रशकलिताः** शिथिलीकृताः कुलपर्वता येन । उत्कीला उद्धृतकीला **भूमिः** येन । भूमेः कुलपर्वताः कीलाः । **निर्धूतः आदित्यचन्द्रयोः द्युतिगणो** येन । अत एव **निबिडध्वान्तेन नीरन्ध्रदिशः** कृता येन । **वेधःसौधस्य** ब्रह्मलोकहर्म्यस्य प्रकर्षेण **भेदी** । **विघटिताः** विध्वस्ताः **पवनस्य स्कन्धाः**, तेभ्यः **पर्यस्ताः** पातिताः **ताराः** येन । **असौ महामोहस्य वेगः** । **विवेकप्रतिरथिनि** विवेकः प्रतिरथी प्रतिरथिको यस्मिन् । तस्मिन् **आहवे** । **आरब्धः** ; उपक्रान्तः ॥ ९६ ॥

**दिष्ट्या वर्धसे** इति संतोषातिशयोक्तिः । एतादृशरणदर्शनभाग्येन वर्धसे । **अद्य** विवेकेन मोहवेगो मोघो जात इत्याह—**अप्रत्यूढेति** । **विवेकेश्वरे प्रत्यवरुद्धो**

[1] उत्कीर्णभूमिः—क.

अहह,

विवेकाशनिवेगेन महामोहविषद्रुमः ।
पातितः क्ष्मातले दिष्ट्या द्वितीय इव कैटभः ॥ ९८ ॥

तुम्बुरुः—हन्त,

जागर्त्यद्भुतमुद्भटं यदधुना वीरव्रतैकव्रती
विष्वग्वृत्तिविवेकदेवविशिखस्कन्धैरवस्कन्दितः ।
मोहः प्रापितमूर्च्छनो मुनिगणप्रद्विष्टदैत्यप्रियो
धिक्कष्टश्रुतिघट्टितश्रुतिरसौ बुद्ध्वा पुनर्युध्यते ॥ ९९ ॥

प्रभाविलासः

वेगः । अद्य; इदानीम् । **विवेकेश्वरे प्रत्यवरुद्धवैरिसमरोत्सेके**; निरस्तरिपुयुद्धगर्वे सति । **स्वःस्थैः**; स्वर्गस्थैः । **प्रत्ययितव्यैः**; ज्ञापयितव्यैः । **दोषैर्मलिनायाः स्वर्वासदुर्वासनायाः** मूलच्छेदेन विलीयमानः महिमा यस्य सः, तथोक्तः सन् । **मोघः**; व्यर्थः ॥ ९७ ॥

**विवेकेति** । **अशनिः**; दम्भोलिः ॥ ९८ ॥

**जागर्तीति** । **अद्भुतं जागर्ति**; वक्ष्यमाणमित्यर्थः । **स्कन्धैः**; गुणैः । **मुनिगणप्रद्विष्टानां** दैत्यानां प्रियः । **धिक्कष्टश्रुतिघट्टितश्रुतिः**;

प्रभावली

**रुद्धः वैरिणां समरोत्सेको** गर्वो येन । तस्मिन् विवेकेश्वरे विषये **सुरासुरगणैः** अक्षोभितपूर्वः । स्वर्गे तिष्ठन्तीति **स्वःस्थाः**, तैः **प्रत्ययितव्याः** प्रत्यक्षेण ज्ञातुं योग्याः ये दोषाः पातभीतिस्वसमाधिकसंपद्दर्शनजाः दुःखादयश्च, तेन **मलिना** या **स्वर्वासदुर्वासना**, तस्या **मूलच्छेदेन** क्षीयमाणो **महिमा** यस्य सः । **मोहस्य स्यदो** वेगः **मोघो भवति** ॥ ९७ ॥

अथ महामोहो भूतले पातित इत्याह—**विवेकेति** । **विवेक** एव **अशनिः**, तस्य **वेगेन** । मोहाख्यो **विषद्रुमः पातितः** ॥ ९८ ॥

**मूर्च्छितोऽसौ पुनर्बुद्ध्वा** विवेकेन युध्यत इत्याह—**जागर्तीति** । **इदमुत्कटमद्भुतं जागर्ति**; दृश्यत इत्यर्थः । तत्किमित्यत्राह—**यदधुनेति** । **वीरव्रते** विक्रमे

नारदः—(सहर्षसंभ्रममुत्तरीयाजिनमवधून्वन्[1]) अहह, निपातितः पुनरसौ निष्प्रतिघवृत्तिना महामोहः सुमतिवल्लभेन।

जितं कार्तयुगैर्धर्मैर्जितं शमदमादिभिः।
महता यद्विवेकेन महामोहः पराहतः[2] ॥ १०० ॥

भवतु सब्रह्मता, भवतु सब्रह्मता।

(सर्वतः परिक्रामति)

तुम्बुरुः—(सहर्षम्)

निखिलसुभटश्लाघारेखाविलङ्घनजाङ्घिको
निरवधिबलो मोहः क्रीडन्ननुत्तरणे रणे।
विविधनिगमग्रामस्थेयाद्विवेकमहीभृतो
विपदमधुना वीरादस्माददिदंप्रथमां गतः॥ १०१ ॥

प्रभाविलासः

धिक्कष्टमिति मोहप्रयुक्तया श्रुत्या शब्देन ताडितकर्णः। उद्भटं यथा तथा पुनर्युध्यते। तस्मादद्भुतं जागर्तीति सिंहावलोकनम्॥ ९९ ॥

**जितमिति। कार्तयुगैः**; कृतयुगसंबन्धिभिः॥ १०० ॥

**भवतु सब्रह्मता**; एतदवधि मोहवशेन ब्रह्म नास्तीति ज्ञानादब्रह्मता।

प्रभावली

**मुख्यव्रती।** विष्वक् समन्ततः वृत्तयः येषां, ते च ते विवेकदेवविशिखाश्च, तेषां स्कन्धैः शल्यैः अवस्कन्दितः शोषणं प्रापितः। अत एव प्रापितमूर्च्छनः। मुनिगणप्रद्विष्टानां दैत्यानां प्रियः मोहः। **धिक्कष्टश्रुतिघट्टितश्रुतिः**; स्वभृत्यैरुच्चरितस्य धिक्कष्टमिति शब्दस्य श्रुत्या श्रवणेन घट्टिते आहते श्रुती श्रोत्रे यस्य सः। बुद्ध्वा संज्ञां प्राप्य पुनर्युध्यते इति यत् तदिदमद्भुतं जागर्तीत्यन्वयः॥ ९९, १०० ॥

पुनरपि मोहवीरे विवेकेन निपातिते तुम्बुरुर्विस्मयते—**निखिलेति।**

[1] उद्धून्वन्—क.

[2] पराजितः—ख. ग.

अपिच,

**दिनकर इव दीव्यन्दृष्टशक्तिस्तथासौ**
**मुनिपरिषदभीष्टे मोहभङ्गे विवेकः ।**
**समतनुत यथैकः साधुपीडोद्यतानां**
**रजनिचरपतीनां राघवो दीर्घनिद्राम् ॥ १०२ ॥**

(नेपथ्ये)

हा महाराअ, हा दुम्मइजीविएसर, हा णिहिलजणसंमोहण, कहिं गओसि ?

प्रभाविलासः

इदानीं मोहविध्वंसने ब्रह्मज्ञानं निष्पन्नमिति सब्रह्मता । अनेन मोहविजयेन पुरुषमोचनरूपबीजस्य पुनर्योजनात् आक्षेपो नाम गर्भसंधेर्द्वादशमङ्गमुक्तम् "आक्षेपो बीजयोजनम्" इति लक्षणात् । **निखिलेति । स्थेयात्;** विवापदनिर्णेतुः ॥ १०१ ॥

**दिनकर इति । दृष्टशक्तिः;** प्रत्यक्षसामर्थ्य इत्यर्थः ॥ १०२ ॥

प्रभावली

**निखिलानां सुभटानां** या श्लाघारेखा; निखिलानां सुभटानां मध्ये अयं श्लाघ्य इति श्लाघायाः परा काष्ठा । तस्या विलङ्घने **जाङ्घिकः;** निखिलसुभटैश्च श्लाघ्य इत्यर्थः । न विद्यते उत्तरणं यस्मात् । तस्मिन् **रणे क्रीडन्** । परस्परविरुद्धानां विविधानां **निगमानाम्** उपनिषदां **ग्रामस्य स्थेयात्** विवादपदनिर्णायकात् **इदंप्रथमाम्** अपूर्वां **विपदं** गतः ॥ १०१ ॥

दीव्यन् भ्राजमानः । **मुनिपरिषदामभीष्टे मोहभङ्गे दिनकर इव दृष्टशक्तिः । यथैको राघवो** रावणादीनपातयत्, तथैवैको विवेकः **साधुपीडोद्यतान्** महामोहादीन् । विलापं प्रस्तौति—**नेपथ्य इति । हा दुम्मइजीविएसर**-हा दुर्मतिजीवितेश्वर । **हा णिहिलजणमोहण**-हा निखिलजनमोहन । **कहिं-**

**बंदिग्गाहं गहिआहिं णूणं संभरिअगुरुवेराहिं ।**
**बंदिग्गाहं गहिदो मम णाहो ताहिं तिअसमहिलाहिं ॥ १०३ ॥**

(हा महाराज, हा दुर्मतिजीवितेश्वर, हा निखिलजनमोहन, कुत्र गतोऽसि ?

बन्दिग्राहं गृहीताभिर्नूनं संभृतगुरुवैराभिः ।
बन्दिग्राहं गृहीतो मम नाथस्ताभिस्त्रिदशमहिलाभिः ॥)

**नारदः**—सखे, हन्त हन्त, प्रतिबुद्धा दुर्मतिः सोरस्ताडं स्वयं विलपति ।

(पुनर्नेपथ्ये)

**बाहिअजणेहिं सत्थं दिहमग्गं तुए पक्कंतेण ।**
**दीणदसासंतत्तो दइअजणो णाह किंति संचत्तो ॥ १०४ ॥**

(बाह्यजनैः सार्धं दीर्घमार्गं त्वया प्रकान्तेन ।
दीनदशासंतप्तो दयितजनो नाथ किमिति संत्यक्तः ॥)

**प्रभाविलासः**

अथ विषादनिमित्तामान्तराख्यां[1] ध्रुवामाह—**बंदिग्गाहमिति** ॥ १०३, १०४ ॥

**प्रभावली**

कथम् । गओसि-गतोऽसि । बंदिग्गाहं बन्दिग्राहं । गहिआहिं-गृहीताभिः । णूणं-नूनम् । संभरिअ-संभृत ; गुरुवेराहिं- गुरुवैराभिः । बंदिग्गाहं-बंदिग्राहम् । गहिदो गृहीतः । मम-मम । णाहो-नाथः । ताहिं-ताभिः । तिअसमहिलाहिं-त्रिदशमहिलाभिः, वनिताभिः ॥ १०३ ॥

प्रतिबुद्धा ; महामोहनिधनं जानती । बाहिअजणेहिं-बाह्यजनैः । सत्थं-सार्धं, यमभटैरिति भावः । दिहमग्गं-दीर्घमार्गम् । तुए-त्वया । पक्कंतेण-प्रक्रान्तेन ;

[1] तल्लक्षणं भावप्रकाशे—
" सर्वासामन्तरा वस्तुरसादिवशकल्पिता ।
आन्तरा सा ध्रुवा ज्ञेया नाट्याभिनयरञ्जनी ॥ " इति ।

नारदः—सखे, अश्रुतपूर्वमिदमद्भुतमाकर्णितम् ।

तुम्बुरुः—भगवन्, अयं खलु सुरासुरसमरनाटकसूत्रधारस्य भगवतः सूत्ररचनापरिपाकः ।

नारदः—

हतजीवजीवितेशां विषादमूर्च्छादिलुप्तनिश्वासाम् ।
तृष्णादयः सकुल्या दुर्मतिमभितो निपत्य विलपन्ति ॥ १०५ ॥

दुष्प्रतिघातः खल्वयं दारुणो नियतिपरिणामः । यतः,

आकर्ण्य चामरभृताममराङ्गनानां
मञ्जूनि तानि [1]मणिकङ्कणशिञ्जितानि ।
शृण्वन्नसौ विलपितानि निजप्रियाणां
मोहः प्रयात्यपुनरुन्मिषिताय निद्राम् ॥ १०६ ॥

### प्रभाविलासः

हतेति । जीवाः; प्राणाः । सकुल्याः; समानकुलप्रसूताः ॥१०५॥ आकर्ण्येति । अत्र करुणशृङ्गारयोः समावेशेऽपि वीररसस्यामराङ्गनादिपदैर्द्योतितत्वेनान्तरितत्वान्न विरोधः ॥ १०६ ॥

### प्रभावली

प्रस्थितेन । दीणदसासंतत्तो-दीनदशासंतप्तः । दइअजणो-दयितजनः । णाहो-नाथः । किंति-किमिति । संचत्तो-संत्यक्तः ॥ १०४ ॥

इदमाकर्णनं कर्मानुगुणजगद्रक्षकस्य भगवतः कृपापरिपाक इत्याह—अयं खल्विति । अयम्; अश्रुतपूर्वाकर्णनम् । विधेयापेक्षया पुंलिङ्गत्वम् । सुरासुरसमरनाटकसूत्रधारस्य सूत्ररचनापरिपाकः; सूत्रशब्देन भगवतः संकल्पो लक्ष्यते । एवं सूत्ररचनां कृतवानित्यर्थः । अथ दुर्मतिमभितो निपत्य तृष्णादयः प्रलपन्तीत्याह—हतजीवेति । सकुल्याः; समानकुलप्रसूताः । निष्प्रतिघातः; प्रतिहतिरहितः । नियतिपरिणामः; विधिपरिपाकः ॥ १०५ ॥

तत्र हेतुमाह—आकर्ण्येति । असौ; मोहः । पूर्वं चामरभृताम्; स्वसेवार्थं

[1] मणिनूपुर—ग.

तुम्बुरुः—भगवन्, महाप्राणोऽसावद्यापि निद्राति मूर्च्छति [1]निमिषति वेति संशयडोलामधिरूढोऽस्मि ।

नारदः—भवतु; दृष्टं तावदेतावत् । शिष्टमपि यथागमं द्रक्ष्यामः । अयं पुनरत्र मधुकैटभादिमहासुरनिरसनप्रकाशितप्रभावो महापुरुष इव विजितमहामोहो विबुधपतिभिरभिष्टूयते सुमतिपतिः[2] ।

तुम्बुरुः—भगवन्, इदमस्य विक्रमप्रीणितवियच्चरगण-प्रयुक्तं वीराभिषेकमङ्गलम् । यदेतत्—

अमुष्य दृढविक्रमद्रुतनिपीतमोहाम्बुधे-
र्विवेकनृपतेरसौ विनयसंनते मूर्धनि ।
परप्रणिधिपवित्रमस्थिरसुखापवादोद्गति-
प्रतिप्रसवसौरभा पतति पुष्पवृष्टिर्दिवः ॥ १०७ ॥

प्रभाविलासः

अमुष्येति । परप्रणिधेरीश्वरध्यानस्य पवित्रमस्य स्थिरसुखस्यापवा-

प्रभावली

चामरग्राहिणीनाम्, अप्सरसाम् । मञ्जूनि मणिकङ्कणशिञ्जितानि आकर्ण्य अद्य निजप्रियाणां विलपितानि शृण्वन् अपुनरुन्मिषिताय पुनरुद्बोधजननाभावाय निद्रां प्रयाति । अतो नियतिपरिपाको दुष्परिहर इति भावः ॥ १०६ ॥

एतावत्; लोभनाशमारभ्य मोहनाशपर्यन्तम् । शिष्टम्; नष्टलोभादिकस्य पुरुषस्य विवेकशमादिभिः क्रियमाणं संयमारम्भमारभ्य परमपदप्राप्तिपर्यन्तम् । यथागमम्; आगमो वेदः । प्रत्यक्षीकुर्म इत्यर्थः । अथ मधुकैटभजिन्महापुरुष इव महामोहजिद्विवेको विबुधैरभिष्टूयत इत्याह—अयं पुनरिति । अमुष्येति । दृढविक्रमेण द्रुतं यथा तथा निपीतो मोहाम्बुधिर्येन । अमुष्य; विवेकनृपतेः । विनयेन संनते शिरसि । परमपुरुषसमाधिना पक्कं यत् सुखं मोक्षाख्यं, तस्य अपवादोद्गतिः प्रकृतिसंबन्धः, तस्याः प्रतिप्रसवभूतम् अपवादापवादभूतं सौरभं यस्याः सा । पुष्पवृष्टिः दिवः आकाशात् आपतति ॥ १०७ ॥

[1] निमीलति वेति—क.

[2] सुमतिपरिबृढः—ग.

**नारदः**—सखे, संप्रति चिरप्रार्थितमहासमरसंदर्शनेन संतोषितं चक्षुः । तदिह भवता परिविवाहयिषितहर्षप्रकर्षेण विश्वेषु भुवनेषु विवेकविजयो विश्रावयितव्यः । अहं तु प्रशमितप्रतिपक्षं स्ववशीकृतहृषीकगणं सुमतिसहायं महाराजं समयोपनतसार्वभौमपदाभिषेकं सौस्नातिकवृत्त्या संभाव्य समाधिसप्ततन्तुसाहाय्यकेन[1] संतोषयितुमात्मानमिच्छामि ।

(इति निष्क्रान्तौ)

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदये मोहादिपराजयो नामाष्टमोऽङ्कः ।



प्रभाविलासः

दोद्गतिः, तस्याः प्रतिप्रसवः प्रत्यपवादः, स एव सौरभं यस्याः सा । दिवः ; अन्तरिक्षात् ॥ १०७ ॥

इत्यात्रेयाहोबिलाचार्यविरचिते संकल्पसूर्योदयव्याख्याने प्रभाविलासाख्याने मोहादिभङ्गो नामाष्टमोऽङ्कः ।



प्रभावली

परिवाहयितुम् इष्टः हर्षप्रकर्षो यस्य, तेन भवता । परिवाहो नाम पूर्णस्य जलाशयस्य पर्यन्तप्रवाहः । स्ववशीकृतः हृषीकाणां गणः येन तम् । समयप्राप्तः सार्वभौमपदे अभिषेको यस्य तम् । सौस्नातिकवृत्त्या ; सुस्नातं पृच्छतीति सौस्नातिकः पुरोहितः, तद्वृत्त्या । संभाव्य ; संपूज्य । समाधिरेव सप्ततन्तुः, तस्मिन् साहाय्यकेन सहायकृत्येन । विवेकसहायकृतलाभेनेत्यर्थः । आत्मानं स्वं संतोषयितुम् इच्छामि ॥

इति श्रीनृसिंहराजाचार्यकृतसंकल्पसूर्योदयव्याख्यायां प्रभावल्यां मोहादिपराजयो नामाष्टमोऽङ्कः ।

---

[1] साहायकेन—क.

# नवमोऽङ्कः

## चूलिका

(नेपथ्ये)

मोहाकूपारकुक्षिंभरिरयमनघो मुक्तिवीरुत्प्ररोहः
प्रज्ञासौधैकदीपः प्रतिसमयकथातूलवातूलवेगः ।
दुःखद्वारोपरोधस्थिरतरपरिघो दूरतः प्रत्युपैति
क्रूरक्रोधाशुशुक्षण्युपशमनसुधासारसेको विवेकः ॥ १ ॥

चूलिका



### प्रभाविलासः

अथाङ्कार्थसूचिकां चूलिकामाह—मोहेति । चूलिकालक्षणं तु "अन्तर्यवनिकासंस्थैः सूचनार्थस्य चूलिका" इति । **परिघः**; तिर्यग्दारु-विशेषः ॥ १ ॥

चूलिका



### प्रभावली

अथ नवमेऽङ्के पुरुषस्य समाधिसंभवः प्रदर्श्यते । नन्वत्रादौ विवेकप्रवेश उच्यते । असूचितस्य च पात्रस्य प्रवेशायोगः । तदुक्तम्—"नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि वा" इति । असूचितपात्रस्य प्रवेशो निष्क्रान्तिश्च नास्ति । अत एव पूर्वाङ्कान्ते सूचितस्य पात्रस्योत्तराङ्कादौ प्रवेश उक्तः पूर्वत्र सर्वत्र । अतः कथमत्र प्रवेश इत्याशङ्क्य चूलिकया विवेकपात्रं सूचयति—नेपथ्य इति । **मोहेति** । **मोह** एवाकूपारः अर्णवः, तेन **कुक्षिंभरिः** स्वोदरपूरकः; पाता चुलिकीकर्ता संहारक इत्यर्थः । **मुक्तिरेव लता**, तस्याः **प्ररोहः** अङ्कुर-

(ततः प्रविशति राजा व्यवसायश्च)

**राजा**—(सहर्षबहुमानम्) सेनापते, अद्य खलु मया त्वत्पुरस्कारेण निर्जितः [1]सर्वदोषप्रसूतिर्मधुकैटभादिभिर्महासुरैर्महद्भिरपि देवैर्दुर्जयो महामोहः ।

**व्यवसायः**—देव, वयं हि भगवतो वाहनादिवदुपकरणमात्रम् । प्राधान्यं तु सर्वत्र भवत एव । अनुस्मरतश्च ते तादृशं समरविहारकौतुकमद्यापि[2] विस्मयाविद्धं मे मानसम् । तदा खलु,

**प्रभाविलासः**

अत्राङ्के विमर्शसंधिः प्रस्तूयते । विमर्शो नाम गर्भसंधावाक्षेपनामकेनाङ्गेन परामृष्टस्य बीजस्य व्यसनादिनिमित्तेन पुनः परामर्शः । तदुक्तम्—

"यत्रावमृश्यते क्रोधाद्व्यसनाद्वा विलोभनात् ।
गर्भनिर्भिन्नबीजार्थः स विमर्श इति स्मृतः ॥"

इति । अत्र व्यसनादवमृश्यत इति ध्येयम् । स च विमर्शसंधिर्नियताप्तिप्रकर्योः संबन्धादुत्पद्यते । प्रकरीस्वरूपं गर्भसंधावेव "अव्यापिनी प्रकरिका" इत्यादिना निरूपितम् । नियताप्तिर्नामापायराहित्येन बीजाप्ति-

**प्रभावली**

स्थानीयः । **प्रज्ञैव सौधः**, तस्य मुख्यदीपः । प्रतिपक्षप्रसङ्ग एव **तूलं**, तस्य वातसमूहवेगः । वातूलः; वातसमूहश्चलवायुश्च । दुःखद्वाराणि पापानि, तेषां निवारणे दृढपरिघस्थानीयः । परिघः; अर्गलः । **क्रूरो** यः **क्रोधाशुशुक्षणिः** कोपाग्निः, तस्य सुधासारसेकः । धारासेचनेऽग्निः प्रणश्यति । अनघः; नृशंसत्वाख्यदोषरहितः । **विवेको दूरादभ्युपैति** । इयं चूलिकेत्युच्यते ॥ १ ॥

**चूलिका**

---

**त्वत्पुरस्कारेण**; त्वां पुरस्कृत्येत्यर्थः । सुरासुरैरपि दुर्जयः । **उपकरणम्**; साधनम् । **प्राधान्यम्**; प्रधानकर्तृत्वम् । **तादृशम्**; वाचामगोचरम् । **विस्मया-**

[1] सर्वदोषप्रसूतिभिः—क. [2] विहारमद्यापि—क.

न भ्रूरभज्यत न च भ्रुकुटी निबद्धा
नैवारुणं प्रकृतितो नयनाञ्चलं ते ।
कुत्राभवन्निति न वेद्मि भवत्प्रतीपा-
श्चण्डद्युतावुदयतीव तमःप्रबन्धाः ॥ २ ॥

किंच,

त्रिगुणात्मिकया तिरस्करण्या स्थगयामास शुभं य एष मोहः ।
स बभूव तदा त्वदाभिमुख्ये दिवसारोपितदीपनिष्प्रकाशः ॥३॥

प्रभाविलासः

निश्चयः । तदुक्तम्—"अपायाभावतः प्राप्तिर्नियताप्तिः सुनिश्चिता" इति । स चात्राङ्के सुस्पष्टः । अनयोः संधानार्थं त्रयोदशाङ्गानि निरूपणीयानि । तान्यङ्गानि यथा—

"अपवादश्च संभेदो विद्रवद्रवशक्तयः ।
द्युतिः प्रसङ्गश्छलनं व्यवसायो निरोधनम् ।
प्ररोचना विचलनमादानं च त्रयोदश ॥"

इति । **न भ्रूरिति** । अत्र विभावनोपमालंकारयोः संकरः ॥ २ ॥

**त्रिगुणेति; शुभम्;** ज्ञानानन्दादिस्वरूपम् ॥ ३ ॥

प्रभावली

**विद्धम्;** विस्मयाक्रान्तम् । **तदा;** समरकाले । **न भ्रूरिति** । भ्रूभङ्गः भ्रूक्षेपः, भ्रुकुटीबन्धश्च न कृतः । भ्रूक्षेपः कोपाभावेऽपि कार्यसूचकः । भ्रुकुटीबन्धः क्रोधमूलकः । स्वभावतोऽरुणं ते चक्षुः शत्रुसंहारार्थं नारुणीकृतमित्यर्थः । **नयनाञ्चलम्;** अपाङ्गः । कुत्राभवन्निति न जानामि । **प्रतीपाः;** शत्रवः । किमिव ? **चण्डद्युताविल्यादि** । तमःसंचया इव ॥ २ ॥

युद्धकाले मोहस्य निष्प्रभत्वमाह—**त्रिगुणेति** । **त्रिगुणात्मिकया;** प्रकृत्यात्मिकया । **शुभम्;** सम्यग्ज्ञानम् । **स्थगयामास;** आच्छादयामास । **त्वदाभिमुख्ये;** तव पुरतः ॥ ३ ॥

अद्य तु,

लम्बालकैरविरलक्षरदश्रुपूरै-
[1]र्म्लानैरपत्रतिलकैर्वदनारविन्दैः ।
शंसन्ति शौर्यविभवं भुजशालिनस्ते
मोहावरोधसुदृशो मुषिताङ्गरागाः ॥ ४ ॥

राजा—(सान्तस्तोषम्) स्वयं प्रवृत्तस्वतन्त्रकृत्ये किं परतन्त्रानस्मान् प्रशंससि ? तथाहि—

वायुर्दोधूयते यद्यदयमुडुगणो बंभ्रमीति द्रुतं खे
तेजो जाज्वल्यते यद्यदपि न जलधिर्माधवीं दोधवीति ।
भूर्यद्वा बोभवीति स्थिरचरधृतये तच्च तादृक् च सर्वं
स्वायत्ताशेषसत्तास्थितियतनपरब्रह्मलीलोर्मिचक्रम् ॥ ५ ॥

प्रभाविलासः

लम्बेति । अत्र करुणवीरयोरङ्गाङ्गिभावः ॥ ४ ॥

वायुरिति । अनेन "भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च" इति श्रुतिर्विवक्षिता । माधवीम्; भूमिम् । एतेन,

"द्यौः सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥"

इति स्मारितम् ॥ ५ ॥

प्रभावली

**अद्य त्विति** । लम्बा अलका येषु तैः । अविच्छेदेन स्रवदश्रुप्रवाहैः । पत्रतिलकरहितैर्वदनैर्मोहान्तःपुरस्त्रियस्तव वैभवं सूचयन्ति ॥ ४ ॥

**वाय्विति** । **वायुः दोधूयते**; भृशं कम्पत इति यत् । **यन्नक्षत्रगणः खे द्रुतं** पुनः पुनः भ्रमति । **जाज्वल्यते**; भृशं ज्वलति । **जलधिः माधवीं**

[1] म्लानैरपास्त—ख.

[1]किंच,

**यथाधिकरणं प्रभुर्यजनदानहोमार्चना-**
**भरन्यसनभावनाप्रभृतिभिः समाराधितः ।**
**फलं दिशति देहिनामिति हि संप्रदायस्थितिः**
**श्रुतिस्मृतिगुरूक्तिभिर्नयवतीभिराभाति नः ॥ ६ ॥**

प्रभाविलासः

**यथाधिकरणमिति । अधिकरणम् ;** अधिकारः । **यजनम् ;** यागः । **भावना ;** भक्तिः । प्रभृतिपदेन प्रणामादयः । "ध्यानार्चनप्रणामादिः" इति हि वेदार्थसंग्रहे उक्तम् । **श्रुतिः ;** "इष्टापूर्तं भहुधा जातं जायमानम्" इत्यादिका । **स्मृतिः** "ये यजन्ति पितॄन् देवान्" इत्यादिका । **गुरूक्तिः ;** "फलसंबिभन्तसया कर्मभिरात्मानं पिप्रीषन्ति । स प्रीतोऽलं फलाय" इत्यादिका । **नयः** "फलमत उपपत्तेः" इत्यादिः । **आभाति ;** आ समन्तात् भाति । असंकुचितं प्रतिभातीत्यर्थः ॥ ६, ७ ॥

प्रभावली

भूमिं न **दोधवीति ;** आस्फालनेन न कम्पयति । **यद्वे**त्यत्र वाशब्दश्चार्थः । **भूः स्थिरचरधृतये बोभवीति ;** समर्था भवति । **तच्च तादृक् च ;** तत्सदृशं पर्जन्यवर्षादि । **स्वायत्तानि** स्वाधीनानि **अशेषाणां सत्तास्थितियतनानि** सृष्टिस्थितिव्यापारादीनि यस्य, तच्च तत् **परब्रह्म च, तल्लीलायाः ऊर्मिचक्रम्,** तरङ्गमण्डलम् ; तद्धेतुकमित्यर्थः ॥ ५ ॥

यागादीनां फलप्रदत्वमपि तस्यैवेत्याह—यथेति । **यथाधिकारं यजनादिभिः समाराधितः** स्वयं च तत्तद्देवतानामन्तर्यामितया **फलं दिशतीति नः संप्रदायस्थितिः नयवतीभिः** सत्तर्कयुक्ताभिः **श्रुतिस्मृतिगुरूक्तिभिः ;** गुरूक्तयः पराशरपाराशर्यवकुलभूषणनाथयामुनयतिवरादिसूक्तयः, ताभिः आभाति ॥ ६ ॥

[1] ख omits this and the following stanza **यथाधिकरणं** etc.

ततश्च,

प्रभुणैव सर्वजगदुद्भवस्थितिप्रलयप्रवाहपरिरब्धकेलिना ।
अहमस्त्रमन्त्रपरिमृष्टदर्भवद्गमितः स्ववध्यनिधने[1] निमित्तताम् ॥७॥

व्यवसायः—देव, विक्रमादपि गरीयांस्तवासौ विनयगरिमा । (साद्भुतरोमाञ्चम्) देव,

दर्पोदग्रनियुद्धतावकभुजानिर्घातपातोदित-
स्फारासृक्परिवाहगद्गदरवो मोहः पतन्नग्रतः ।
अद्यापि स्मृतिमभ्युपैति मथनक्षोभक्षरद्गैरिक-
स्रोतःसंप्लुतमन्दरक्षितिधरक्षेपक्षणाक्षेपकः ॥ ८ ॥

## प्रभाविलासः

दर्पेति । **नियुद्धम्**; बाहुयुद्धम् । **निर्घातः**; अशनिः । **मथने** कृते **क्षोभः**, तेन **क्षरद्भिः गैरिकस्रोतोभिः संप्लुतस्य मन्दरक्षितिधरस्य क्षेपक्षणस्य** क्षेपावसरस्य **आक्षेपकः** आज्ञापक इत्यर्थः ॥ ८ ॥

## प्रभावली

अतोऽत्रापि स एव प्रधानकर्ता, नान्य इत्याह—**प्रभुणेति** । सर्वजगत्सृष्टिस्थितिसंहारादिप्रवाहेण प्राप्तकेलिना तेन प्रभुणा प्रेरितोऽहम्, **अस्त्रमन्त्रपरिमृष्टदर्भवत्** स्वेन वध्यानां शत्रूणां दमने निमित्ततां गमितः ॥ ७ ॥

दर्पोदग्रेति । दर्पेण उदग्रं, दर्पोदग्रं नियुद्धं यस्याः; सा चासौ तावकभुजा च । दत्तोदग्रनियुद्धेति वा पाठः । सैव **निर्घातः** अशनिः, तस्य **पातेन उदितो** यः **स्फारासृक्**प्रवाहः; **स्फारः** बहुः । तस्य **गद्गदरवो** यस्य सः । तव **अग्रतः पतन्** । मथनक्षोभेण क्षरन्ति यानि **गैरिकस्रोतांसि**, तैः **संप्लुतस्य मन्दरक्षितिधरस्य क्षेपः** क्षेपणं मथनानन्तरमुत्क्षेपणं, तस्य **क्षणः** कालः, तस्य **आक्षेपः** सूचकः सन् । **अद्यापि** मम **स्मृतिम् अभ्युपैति** ॥ ८ ॥

[1] दमने—क. ग.

[1]इह पुनरिदानीं विश्वविख्यातवीरायितस्य[2] ते विभूति-समुचितं किमपि मङ्गलमाचरणीयम् । अद्य तु,

युक्तायुक्तवितर्कदक्षमतिभिर्युष्मद्भटैरुद्भटै-
र्निर्धूताखिलशल्यकण्टकततिर्नैःश्रेयसी पद्धतिः ।
मोहध्वंसधुरंधरस्य तव तु त्र्यय्यन्तपीठे मह-
त्यासीदत्यभिषेकमङ्गलविधेरभ्यर्हितोऽयं क्षणः ॥ ९ ॥

राजा—सेनापते, मैवं वादीः । अनिष्पन्नसमाधौ पुरुषे कथमहमभिषेक्तव्यः ? अद्य हि—

करणहरिणश्रेणीदूरापकर्षणदारुणां
कलुषतपनस्फायन्मायानिदाघविजृम्भिताम् ।
विषमविषयास्वादोत्कण्ठामयीं मृगतृष्णिकां
मुनिरतिपतन्मुक्तिद्वारं गवेषयते मुहुः ॥ १० ॥

प्रभाविलासः

युक्तेति । वितर्कः; विचारः । शल्यकण्टकयोः स्थूलसूक्ष्मभेदेन भेदः ॥ ९ ॥

करणेति । करणानि; इन्द्रियाणि । हरिणाः; कृष्णसाराः । कलुषमेव तपनः । तेन स्फायन्ती वर्धमाना माया कर्मरूपाविद्या, सैव

प्रभावली

एवं प्रशस्यस्य तव विजयाभिषेकः कर्तव्य इत्याह—इह पुनरिति । किमपि मङ्गलम्; विजयाभिषेक इति भावः । युक्तायुक्तविचारे समर्थबुद्धिभिः, सर्वभटेभ्यः उत्कृष्टैः । युष्मद्भटैः नैःश्रेयसी पद्धतिः मोक्षोपायः, निर्धूताखिलशल्यकण्टकततिः जाता । अतः तदधिपतेः तव मोहरूपप्रधानशल्यध्वंसकस्य वेदान्तरूपसिंहासनस्थितस्य अभिषेकमङ्गलविधेः अभिषेकरूपमङ्गलोत्सवविधानस्य, अभ्यर्हितः योग्यः कालः आसन्न इति ॥ ९ ॥

इदानीं पुरुषो विष्वङ्मृगतृष्णिकामपक्रामन् मुक्त्युपायमपेक्षत इत्याह—करणेति । करणानि इन्द्रियाण्येव हरिणाः, तेषां श्रेण्याः ब्रह्मसकाशात्

[1] इदं—क. [2] वीरस्य—ग.

अतः प्रक्रान्तमात्रा खल्विदानीं परब्रह्मोपलब्धिः । परिनिष्पत्तिस्तु दुर्लभेति पश्यामि । तथाहि—

**कथमद्य निरालम्बं कर्मशृङ्खलितः पुमान् ।**
**आरोहतु दुरारोहं समाधिगगनस्थलम् ॥ ११ ॥**

(विचिन्त्य) अस्त्वेवं तावत्—

**सत्त्वोदग्रसमग्रनन्दथुभुवः सालम्बनध्यानतः**
**शुद्धे चेतसि यद्यपि प्रभुरिहादृश्यो दरीदृश्यते ।**
**प्रत्यग्वस्तुविशेष्यवर्ष्मणि पुनस्तस्मिन्दृढप्रेक्षिते**
**नाथः सोऽहमहं स इत्यपि गिरो नाध्यासमध्यासताम् ॥ १२ ॥**

प्रभाविलासः

**निदाघः**, तेन **विजृम्भिताम्** । अत्र विषयास्वादाभिलाषस्य मृगतृष्णिकात्वकथनेन दोषप्रख्यापनात् अपवादो नाम विमर्शसंधेः प्रथमङ्गमुक्तम् । "अपवादस्तु विज्ञेयो दोषप्रख्यापनात्मकः" इति लक्षणात् ॥ १० ॥

**कथमिति । समाधिगगनस्थलम्**; निरालम्बध्यानम् ॥ ११ ॥

**सत्त्वेति । सत्त्वोदग्रस्य समग्रस्य नन्दथोः** आनन्दस्य **भुवः** भूमेः ।

प्रभावली

**दूरापकर्षणेन** क्रूरम् । कलुषविपिनं पापाटवी, तत्र स्फायन्ती माया प्रकृतिः, सैव **निदाघः** ग्रीष्मसमयः, तेन **विजृम्भितां** विस्तृताम् । **विषमाः** अनेकरूपाः शब्दादिविषयाः, तेषाम् **आस्वादः** आस्वादनम्, तत्र **उत्कण्ठा** स्पृहा तन्मयीम् । मरीचिकाम् अतिक्रामन् पुरुषः मुक्त्युपायं गवेषयते अन्विच्छति । परित्यक्तविषयस्पृहो मुक्त्यपेक्षो भवतीत्यर्थः ॥ १० ॥

**परब्रह्मोपलब्धिः**; परब्रह्मोपलब्धिसाधनभूतपरमात्मयोग इत्यर्थः । **कथमद्येति** । कर्मभिः निगलितः । **निरालम्बम्**; अवष्टम्भरहितम् । तत्र शुभाश्रयोऽवष्टम्भः, तद्रहितम् । अत एव गगनस्थलत्वेन रूपणम् । शुभाश्रयशून्या समाधिबुद्धौ नारोहतीति भावः । शृङ्खलितत्वे किमुतेति भावः ॥ ११ ॥

ननु सालम्बनस्यापि पुंसः कथं समाध्यारोह इत्याशङ्क्य, एवं समाध्यारोहः शक्य इत्याह—**अस्त्वेवमित्यादिना** । **सत्त्वेति** । सत्त्वगुणभरितस्य समग्रस्य

प्रभाविलासः

**सालम्बनध्यानतः**; शुभाश्रयध्यानात्। **चेतसि शुद्धे**; निष्कल्मषे,

"यथाग्निरुद्धतशिखः कक्षं दहति सानिलः।
तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम्॥"

इति स्मरणात्। **प्रभुः**; ईश्वरः। **यद्यप्यदृश्यः**; चर्मचक्षुर्भिरग्राह्यः। "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्" "न चक्षुषा गृह्यते नापि वाचा" इति श्रुतेः। तथापि **दरीदृश्यते**, "मनसा तु विशुद्धेन" इति स्मृतेः। **त्यग्वस्तु विशेष्यवर्ष्मणि**; प्रत्यग्वस्त्वेव विशेष्यं विशेषयितुं योग्यं वर्ष्म शरीरं यस्य तस्मिन्। एवम् "अहं वै त्वमसि भगवो देवते" इति वाक्यं विवृतम्। अस्मच्छरीरकस्त्वमसीति हि तस्यार्थः। तस्यैव पदस्यावृत्त्या योजनायां प्रत्यग्वस्तुविशेष्यं वर्ष्म यस्येति योजनायां प्रकारभूतस्यैव विशेष्यतयान्वयः। तेन "त्वं वा अहमस्मि भगवो देवते" इति वाक्यार्थोऽभिप्रेतः। **त्वं वाहमिति**; तव शरीरभूतोऽहमित्यर्थः। उभयत्र विशेषणविशेष्यभावव्यत्यासप्रतीतावपि ईश्वरस्य शरीरित्वं चेतनस्य शरीरत्वं चाविशिष्टम्, शब्दस्वभावकृतत्वात् व्यत्यासप्रतीतेः। उपनिषदन्तरे च "ऐतदात्म्यमिदं सर्वं स आत्मा" इति प्रतीतौ व्यत्यासोऽस्त्येव। अत एवाभियुक्तैः "रामानुजं लक्ष्मणपूर्वजं च"

प्रभावली

**अनवधिकातिशयस्य नन्दथोः** आनन्दस्य भूः उत्पत्तिस्थानं, तस्मात्। **सालम्बनध्यानतः**; शुभाश्रयविषयस्थानात्। **शुद्धे चेतसि**; यद्यपि प्रभुः "न चक्षुषा पश्यति कश्चनैनम्" इति न्यायेन चक्षुषा साक्षात्कर्तुमशक्यः, तथापि "मनसा तु विशुद्धेन" इति श्रवणात् दर्शनसमानाकारध्रुवानुस्मृतिविषयो भवतीत्यर्थः। ननु "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते" इत्याद्यैक्योपासनविषयवचनानि तर्हि भ्रान्तजल्पितानि भवन्तीत्यत्राह—**प्रत्यगिति**। पुनःशब्दः शङ्काव्यावर्तकः। **प्रत्यग्वस्तुविशेष्यवर्ष्मणि**; **प्रत्यग्वस्तु**; जीवः। सः स्वस्य विशेषणं, शरीराद्यपेक्षया विशेष्यं च भवति। स्वशरीरस्य जीवस्य ब्रह्मणो विशेषणत्वात् विशेष्यत्वं गौणम्, अथापि स्वशरीरादीन् प्रति विशेष्यत्वं

**व्यवसायः**—देव, अद्यापि कथमध्यासः? पुरुषः खल्विदानीं स्वशरीरे स्वात्मबुद्धिं विहाय स्वात्मनि परशरीरत्वबुद्धिमनुरुन्धे।

**राजा**—हन्त, सिद्धप्रायमपि सर्वं सान्तःशल्यमिवाद्य संदृश्यते। तथाहि—

**तत्त्वज्ञाने विशुद्धे शमयति दुरितारम्भमात्मावधाने**
**व्यक्ताकृष्टेतराक्षे विरमति च मनोवानरे चापलात्स्वात्।**
**भस्मच्छन्नाग्निकल्पः परपरिभवनाद्यागमे दीप्यमानः**
**श्लक्ष्णः संस्कारसारस्तरलयति[1] शनैरुज्जिहानं समाधिम् ॥१३॥**

प्रभाविलासः

इति प्रयोजकवाक्यमुक्तम्। **दृढप्रेक्षिते**; अहमित्यस्यार्थस्य प्रकारतया शरीरभूतस्य परमात्मपर्यन्ततया सम्यग्दृष्टे। एवमर्थस्य तत्पर्यन्तत्वेनार्थवाचकपदानामपि तत्पर्यन्तत्वं सुव्यक्तम्; प्रकारवाचकानां पदानां प्रकारिपर्यन्तत्वस्य देवदत्तादिशब्देषु दर्शनादित्यभिप्रेत्याह—**नाथ इति**। सकलशाखागतसामानाधिकरण्यवाक्यसंग्रहार्थं **गिर** इति बहुवचननिर्देशः। जीवब्रह्मणोः स्वरूपैक्यं देहात्मस्वरूपैक्यवदयोग्यमित्याह—**नाध्यासमिति**। तदुक्तम्—"मिथ्यैतदन्यद् द्रव्यं हि नैति तद्द्रव्यतां यतः" इति ॥ १२ ॥

**तत्त्वज्ञान इति। विशुद्धे तत्त्वज्ञाने दुरितारम्भं शमयति। आत्मा-**

प्रभावली

मुख्यमित्यदोषः। तस्मिन् प्रभावन्तर्यामिणि दृढं प्रेक्षिते सति, शरीरशरीरिभावेन स्वरूपभेदे तयोः स्फुटं दृष्टे सति, "त्वं वा अहमस्मि भगवो देवते" इत्यादिवाक्यानामध्यासं नाध्यासताम्; स्वरूपैक्यरूपमध्यासं नाश्रयन्ताम्; स्वरूपैक्यभ्रान्तिं नाधितिष्ठन्तु; तेषां वाक्यानां "यः पृथिव्यां तिष्ठन्" इत्यादिघटकश्रुतिसिद्धशरीरशरीरिभावविषयत्वात्। नाथः **सोऽहमिति**; "त्वं वाहमस्मि" इत्यस्यानुवादः। **अहं स इति**; "अहं वै त्वमसि" इत्यस्यानुवादः ॥ १२ ॥

**अनुरुन्धे**; अनुवर्तते। पुरुषस्याद्यापि सूक्ष्मवासनासद्भावशङ्कयाह—**हन्तेति**। **तत्त्वेति**। **विशुद्धे तत्त्वज्ञाने**; विशुद्धत्वं नाम प्रतिपक्षप्रतिहतिरहित-

[1] शिथिलयति—क. छ.

अपिच,

**क्रमपक्त्रिमकर्मजागरूकस्थिरसंस्कारनिरुध्यमानचित्तः ।**
**स्मरति प्रणिधातुमेकतानो बहिरर्थान्विवशः पितामहोऽपि॥१४॥**

प्रभाविलासः

**वधाने;** मनःसमवधाने । **व्यक्ताकृष्टेतराक्षे;** स्पष्टवशीकृतचक्षुरादिके । **परिभवनम्;** तिरस्क्रिया । **दीप्यमानः;** प्रबुध्यमानः । यथा वह्निः परावस्कन्दे भस्मापनयेन प्रदीप्तो भवति, तद्वत् **संस्कारः** वासनाबलम् **उज्जिहानम्** अहन्यहन्युत्तिष्ठन्तं समाधिं तरलयति शिथिलयतीत्यन्वयः । अनेनावमानाद्यसहने समाधिर्गलतीत्युक्तं भवति । अत्र विद्वत्परिभवोक्त्या द्रवो नाम विमर्शसंधेश्चतुर्थमङ्गमुक्तम्, "द्रव इत्युच्यते प्राज्ञैर्विदुषां च तिरस्क्रिया" इति लक्षणात् ॥ १३ ॥

वासनाबलमेव विशिनष्टि—**क्रमेति** । **जागरूकः;** उद्बुद्धः । **स्वतन्त्रः;** ईश्वरः ॥ १४ ॥

प्रभावली

त्वम् । **दुरितारम्भं शमयति सति;** परावरतत्त्वस्वरूपज्ञाने देहात्मभ्रमनाशात् स्वस्वातन्त्र्यभ्रमनाशाच्च तन्मूलपुण्यपापरूपदुरितारम्भः शाम्यतीत्यर्थः । **आत्मावधान** इति मनोविशेषणम्; आत्मनि **अवधानं** सावधानता यस्य तस्मिन् । **व्यक्ताकृष्टेतराक्षे;** व्यक्तं यथा तथा आकृष्टानि इतराक्षाणि स्वव्यतिरिक्तानीन्द्रियाणि यस्मिंस्तस्मिन् । **मनोवानरे स्वात् चापलात्** विरमति सत्यपि । **भस्मच्छन्नाग्निकल्पः;** अन्तः सूक्ष्मरूपेण वर्तमानः । अत एव **श्लक्ष्णः;** सूक्ष्मः, अदीप्यमान इत्यर्थः । **परैरवमानाद्यागमे प्रज्वलन् संस्कारेषु सारः** भावनाख्यः, अविद्याजनितप्रकृतिवासनेत्यर्थः । **शनैः उज्जिहानम्** उद्गच्छन्तं **समाधिं तरलयति** चालयति । तत्त्वज्ञानकथनेन विद्यायाः कर्माङ्गसंपत्तिरप्युक्ता भवति ॥ १३ ॥

वासनायाः समाधिचालकत्वं कुत इत्यत आह—**क्रमेति** । **प्रणिधातुमेकतानोऽपि** पुरुषः **क्रमपक्त्रिमेषु** क्रमेण फलोन्मुखेषु **कर्मसु जागरूकः**

तथापि स्वतन्त्रानुग्रहदत्तहस्तेन मया कदाचिदपि न स्खलितव्यम् । संभावितस्खलितं च सिषाधयिषितम्[1] ।

**बहुरपि लघुः प्रत्यक्चिन्ता बहिर्विषयाटवी-**
**विहृतिचटुलं चेतो रोद्धुं कथं प्रभविष्यति ।**
**अनिभृततटक्रीडोत्कण्ठाविजृम्भितसंभ्रमे**
**कलभचरणे लूतातन्तुः कथं निगलायते ॥ १५ ॥**

**प्रभाविलासः**

ध्यानसंस्कारबलेन वासनाबलनिरोधः किं न स्यादित्यत आह— **बहुरपीति** । अन्तःसारवत्तया धीरोऽपि । **लघुः** अनन्तपूर्वजन्मकृतपापराश्यपेक्षयाल्पः । **प्रत्यक्चिन्ता** कर्त्री । **लूता**; ऊर्णनाभिः ॥ १५ ॥

**प्रभावली**

नियतसंबन्धः यः **स्थिरसंस्कारः** फलाद्यविनाश्यः धर्माधर्मादिलक्षणसंस्कारः, तेन **निरुध्यमानचित्तः** भगवद्विषयात् निवर्त्यमानचित्तः सन् **पितामहोऽपि विवशः** बहिरर्थान् बाह्यविषयान् **स्मरति** । तत्त्वज्ञानेन नाविद्याविनाशः । उत्तराघाश्लेषेऽपि पूर्वाघमध्ये प्रारब्धस्य भोगविनाश्यत्वात् तत्त्वज्ञानेन कर्माख्याविद्याविनाशाभावात् तया चित्तनिरोध उपपद्यत इति भावः ॥ १४ ॥

**बहुरिति** । **बहुः**; संतन्यमानापि । **प्रत्यकचिन्ता**; आत्मज्ञानम् । **लघुः**; परचिन्तापेक्षया अल्पीयसी । **बहिर्विषयाः** शब्दादयः, त **एवाटवी,** तस्या विहारे **चटुलं** चञ्चलं **चेतः कथं रोद्धुं** समर्था भविष्यति । भगवत्कृपां विना केवलप्रत्यक्चिन्तामात्रं रोद्धुं न प्रभवति । तत्र दृष्टान्तमाह—**अनिभृतेति** । **अनिभृता** असंकुचिता **तटक्रीडा,** तस्यामुत्कण्ठया **विजृम्भितः संभ्रमो** यस्य तस्मिन् **कलभचरणे लूतातन्तुः कथं निगलायते;** बन्धकं न भवतीति यावत् ॥ १९ ॥

[1] सिषाधयिषितव्यम् —क.

व्यवसायः—महाराज, किमिह पुनः प्रत्यूहशङ्कया ?

**स्वयमिह विपदो वा स्वप्नवत्संपदो वा**
**नियतिविपरिवृत्तौ नेमिवृत्त्या भवन्त्याम् ।**
**शतमपि विशयानां शस्त्रवच्छातयन्ती**
**नयनिगमसमीची न व्यतिस्ते मतिस्ते ॥ १६ ॥**

राजा—सेनापते, सिद्धमपि सर्वं साध्यशेषावमर्शेनासत्कल्पमिवाभाति । अद्य हि,

**अपि निर्मुक्तजीवानां कामादीनां बलीयसाम् ।**
**अविद्या कर्मसंज्ञा तु मृतसंजीवनी स्थिता ॥ १७ ॥**

प्रभाविलासः

**स्वयमिति । शातयन्ती** ; छिन्दती । **नयेन निगमैश्च समीचीना । तव मतिः । इह** ; संसारे । **नियतेः** ; दैवस्य । **विपरिवृत्तौ** ; विपर्यासे । **नेमिवृत्त्या** ; चक्रधारावर्तनेन । **भवन्त्याम्** ; सत्याम् । **स्वप्नवत्** ; स्वप्न इव । **संपदो वा विपदो वेति** पञ्चमी । **न व्यतिस्ते** ; व्यत्यासं न प्राप्नोति ॥ १६ ॥

**अपीति । निर्मुक्तजीवानाम्** ; परित्यक्तपुरुषाणाम् । गतप्राणाना-

प्रभावली

विघ्नचिन्तया किम् ? अलमित्यर्थः । ननु संपद्विपदोः सुखदुःखहेतुत्वात् तयोश्च समाधिविरोधित्वात् कथं संशयाभावः ? तत्राह—**स्वयमिति । नियतिविपरिवृत्तौ** नेमिवत् संभवन्त्याम् **इह** जगति **संपदो विपदो वा स्वयं** कर्माधीनत्वात् स्वप्नवदस्थिरा इत्यर्थः । किमतः ? तत्राह—**शतमपीति । विशयानां** संशयानां शतमपि **शस्त्रवत् शातयन्ती** खण्डयन्ती **नयनिगमसमीची** सत्तर्कप्रमाणानुगुणा **ते मतिः न व्यतिस्ते** व्यत्यासं न प्राप्नोति । त्वयैवं संशयो न कार्यः । संपदां विपदां च कर्माधीनत्वात् कर्मणां च "यथैषीकतूलम्" इत्यादिभिर्विद्याविनाश्यत्वश्रवणान्न समाधिविघ्नसंभव इति भावः ॥ १६ ॥

**सिद्धमपि सर्वम्** ; लोभविजयादिकम् । साध्यो यः शेषः, तस्य **विचारेण** । कामादिजयेऽपि कर्मसंज्ञया अविद्यया पुनस्तेषामुद्भवो भविष्यतीत्याशङ्कते—**अपीति । निर्मुक्तजीवानाम्** ; मृतानामपि । यद्वा निर्मुक्तो जीवात्मा यैः तेषाम् ।

व्यवसायः—महाराज, त्वत्प्रसादादेषापि[1] न स्थास्यति ।

राजा—(सानुशयम्)

अहितनिवहवन्या हन्त संतन्यमाना
कथमियमपचेतुं कल्पकोट्यापि शक्या ।

व्यवसायः—इत्थमेव ;

दहति निरवशेषं देवसंभूतिरेनां
युगपदिह समिद्धो योगकल्पान्तवह्निः ॥ १८ ॥

न च तदुत्पत्तिरपि कथं भवित्रीति शङ्कनीयम्; यत ईदृगवस्थः पुरुषः—

प्रभाविलासः

मिति च व्यज्यते ॥ १७ ॥

अहितेति । अहितानि; पापानि । वन्या; वनसमूहः । देवसंभूतिः; ईश्वरादुत्पन्नः । निरवशेषं दहतीति सरोषवचनात् संभेदो नाम विमर्शसंधेर्द्वितीयमङ्गमुक्तम्, "रोषसंभाषणं संभेदः" इति लक्षणात् ॥ १८॥

प्रभावली

मृतसंजीवनी; मृतानामुज्जीवयित्री । स्थिता; तिष्ठति । कथं समाधिः संपत्स्यत इति शेषः ॥ १७ ॥

एषा; कर्मसंज्ञा अविद्या । सानुशयम्; सपश्चात्तापम् । अनुशये हेतुमाह—अहितेति । अहितानि पापानि, तेषां समूह एव वन्या महाटवी, पुनः पुनः संतन्यमाना । यद्वा संततिरूपेण क्रियमाणा । अपचेतुम् क्षपयितुम् । इत्थमेवेत्युक्तमाह—दहतीति । एनाम्; कर्मसंज्ञाविद्याम् । देवात् संभूतिः उत्पत्तिर्यस्य । योग एव कल्पान्तवह्निः ॥ १८ ॥

तदुत्पत्तिरपि; योगोत्पत्तिरपि । ईदृगवस्थः; वक्ष्यमाणावस्थः

1 अविद्यापि—क.

**सत्कारकालकूटं तरुणीकुणपं सभाभुजंगीं च ।**
**परिहरति राजधानीकुम्भीपाकं च गुप्तमाहात्म्यः ॥ १९ ॥**

अपिच,

**मुकुन्दे निक्षिप्य स्वभरमनघो मुक्तवदसौ**
**स्वतन्त्राज्ञासिद्धां स्वयमविदितस्वामिहृदयः ।**
**परित्यागे सद्यः स्वपरविविधानर्थजनना-**
**दलङ्घ्यामा मोक्षादनुसरति शास्त्रीयसरणिम् ॥ २० ॥**

प्रभाविलासः

**सत्कारेति** । **कालकूटमिति** "संमानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव" इति मनूक्तिः स्मारिता ॥ १९ ॥

**मुकुन्द इति** । **स्वतन्त्रस्य**; ईश्वरस्य । **आज्ञा**; "श्रुतिस्मृती ममैवाज्ञा" इत्युक्तरूपा । ननु स्वतन्त्रेणैव सर्वधर्मपरित्यागोऽप्याज्ञप्त इति चेत्, नेत्याह—**स्वयमिति** । तद्वचनस्य तात्पर्यं न विज्ञातमाचार्योपदेशे नेति भावः । कुत इत्यत आह—**परित्याग इति** । **स्वस्य**; त्यागकर्तुः । **परेषाम्**; शिष्टाग्रणीरयमेव कर्मत्यागं कृतवानिति तमनुतिष्ठताम । तदुक्तम्—

"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥"

**प्रभावली**

सत्कारेति । अयं पुरुषः गुप्तमाहात्म्यः सन् सत्कारादीन् नापेक्षते । सत्कारं कालकूटमिव तरुणीं कुणपमिव सभां लौकिकगोष्ठीं भुजङ्गीमिव च पश्यति ॥१९॥

इदमपि योगसंवर्धकमस्तीत्याह—**अपिचेत्यादि** । अथ चरमश्लोकोक्त-प्रपदनाङ्गसंपत्तिमाह—**मुकुन्द इति** । **स्वभरं** स्वरक्षाभरं **मुकुन्दे** मुक्तिप्रदे विन्यस्य । **अनघः**; भगवतैव सर्वपापेभ्यो मोचितत्वात् अनघः । मुक्तवदिति व्यतिरेकदृष्टान्तः । **अविदितस्वामिहृदयः**; हेतुगर्भमिदं पदम्; मुक्तवत् स्वाम्य-भिप्रायज्ञानाभावेऽपि । स्वेनैवावगन्तुं शक्यत इत्यभिप्रायेणाह—**परित्याग इति** ।

ततश्च,

अनघमतिरनुज्झन्नाश्रमादिव्यवस्थां
हरिचरणसपर्यास्वादतुष्टो मनीषी
अवतरति विरक्त्या गाढमालिङ्गितोऽसौ
मुषितनिखिलखेदे[1] मुक्तिघण्टापथेऽस्मिन् ॥ २१ ॥

प्रभाविलासः

इति । **विविधानर्थेति**; "वीरहा वा एष देवानां योऽग्निमुद्वासयते" "संकरो नरकायैव" इत्यादिकमुक्तम् । तत्रापि शिष्टगर्हणबहिष्कार-ब्रह्मवर्चसहानिप्रभृतिदृष्टानर्थानां त्यागतुल्यकालिकतया **सद्य** इत्युक्तम् । **अलङ्घ्यामिति**;

"एवं विलङ्घयन्मर्त्यो मर्यादां वेदनिर्मिताम् ।
प्रियोऽपि न प्रियोऽसौ मे मदाज्ञाव्यतिवर्तनात् ॥"

इति भगवद्वचनं स्मारितम् । **आ मोक्षादिति**; "आ प्रायणात्तत्रापि हि दृष्टम्" इति सूत्रं विवृतम् । अत्राविदितस्वामिहृदय इति विरोधशमनात् विमर्शसंधेः पञ्चममङ्गं शक्त्याख्यमुक्तम्, "विरोधशमनं शक्तिः" इति लक्षणात् ॥ २० ॥

**अनघेति** । **आश्रमादी**त्यादिपदेन वर्णादय उच्यन्ते । **मनीषी**त्यनेन "मनीषी वैदिकाचारं मनसापि न लङ्घयेत्" इति स्मारितम् ।

प्रभावली

विहितस्य परित्यागे स्वस्य परेषां च विविधानर्थजननाद्धेतोः आ मोक्षात् **अलङ्घ्याम्** । तत्र हेतुमाह—**स्वतन्त्राज्ञासिद्धामिति** । आज्ञा; श्रुतिस्मृती । शास्त्रीयसरणिमनुसरति ॥ २० ॥

ईदृगवस्थापन्नत्वफलमाह—**अनघेति** । अघं नामात्र क्रियमाणेषु कर्मसु

[1] दोषे—क.

इदमपि यथावत्प्रतिसंधातव्यम् —

**संसाराख्यज्वलनभसितीभूतसंजीवनार्हा**
**धर्मोत्पत्तिप्रथितविभवा धार्यमाणा गिरीशैः ।**
**गम्भीरत्वादकलुषगतिर्गम्यतीर्थोपपन्ना**
**गङ्गेवान्या पुरुषजलधिं गाहते विष्णुभक्तिः ॥ २२ ॥**

प्रभाविलासः

**घण्टापथः**; दशधन्वन्तरो राजमार्गः ॥ २१ ॥

**संसारेति । भसितीभूताः**; अत्यन्ततापिताः । अन्यत्र सागराः । **संजीवनम्**; सद्गतिप्रापणम् । **धर्मः**; वेदोक्तमनभिसंहितफलकं कर्म । तस्मादुत्पत्त्या प्रथितमहिमा । तदुक्तम्—

"वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे ।
नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः ॥

धर्मो मद्भक्तिकृत्प्रोक्तः" इति । अन्यत्र धर्मः युधिष्ठिरः । **गिरीशैः**; विद्वद्भिः, रुद्रैश्च । पूजायां बहुवचनम् । **कलुषम्**; पापं पङ्कश्च । **गम्यतीर्थः**; अभिगम्याचार्थः । गमनयोग्यावतरणदेशश्च ॥ २२ ॥

**प्रभावली**

तत्तद्देवतामात्रविषयत्वम्, देवतान्तरविषयत्वं वा । तत्र मतिर्यस्य नास्ति स **अनघमतिः** । **अवतरति**; प्रविशति ॥ २१ ॥

विरक्तस्यास्य क्रमेण विष्णुभक्तिर्भवतीत्याह—**इदमपीति** । **संसारेति** । संसाराग्निज्वालाभस्मीभूतानां संजीवने समर्था । अन्यत्र भस्मीभूतानां सागराणां स्वर्गदानेन संजीवनार्हा । निवृत्तिधर्मोत्पत्तौ; अन्यत्र पापनोदनधर्मोत्पत्तौ; प्रसिद्धवैभवा । **गिरि** वाग्विषये **ईशैः** समर्थैः विद्वद्भिः । अन्यत्र रुद्रैः । कल्पभेदेन बहुत्वात् पूज्यतया वा बहुवचनम् । **गम्भीरत्वात्**; सर्वोत्कृष्टत्वात् । **अकलुषगतिः**; उपायान्तरवत् केवलसांसारिकप्रदत्वदोषरहिता गतिः, सत्फलोपायरूपा । अन्यत्र बहुव्रीहिः । **अभिगम्यैः तीर्थैः** आचार्यैराश्रिता । अन्यत्र तीर्थानि अवताराः, सरोविशेषा वा ॥ २२ ॥

अपिच शान्तमेव रसमेकं [1]शरणयतो मनीषिणः पुनरपि संप्रति रसान्तराण्यपि पुष्णातीव विष्णुभक्तिः । तथाहि—

जुगुप्सां देहादौ विषयरसभोगेषु हसनं
प्रकोपं निद्रादौ परपरुषवादादिषु भयम् ।
शुचं योगालाभे फलपरिणतौ विस्मयमपि
प्रयच्छत्युत्साहं दुरितविरतौ ब्रह्मणि रतिम् ॥ २३ ॥

न चात्र महाराजेन संस्कारशेषतः समाधिप्रत्यूहः शङ्कनीयः । यतः,

### प्रभाविलासः

जुगुप्सामिति । परपरुषवादादिष्वित्यादिना पैशुन्यादिकं गृह्यते । तदुक्तम्—

"परापवादं पैशुन्यमनृतं च न भाषते ।
अन्योद्वेगकरं वापि तोष्यते तेन केशवः ॥"

इति । अत्र बीभत्सादिव्याजेन शान्तरसस्यैव वर्णनात् छलं नाम विमर्शसंधेरष्टममङ्गमुक्तम्, "छलनं व्याजकल्पना" इति लक्षणात् ॥ २३ ॥

### प्रभावली

अथ शृङ्गारादिरसान्तरविरक्तस्यास्यासौ पुनः शृङ्गारादिरसं पुष्णातीति निन्दास्तुत्या प्रशंसति—अपिचेत्यादिना । शृङ्गारादिरसं परित्यज्य शान्तमेकमेव रसमाश्रयतो मनीषिणः स्वसद्भावकाले शृङ्गारादिरसान्तराण्यपि वर्धयतीव । इदमेवोपपादयति—तथाहीति । देहदेहानुबन्धिषु जुगुप्साम् । विषयरसभोगेषु हासम् । प्रमादालस्यादौ कोपम् । परुषोक्त्यादिषु भीतिम् । समाध्यलाभे शोकम् । आनुषङ्गिकफलसिद्धौ विस्मयम् । पापानामपनोदने उद्योगम् । ब्रह्मणि रतिं शृङ्गाररसमियं प्रयच्छति ॥ २३ ॥

अत्र; विष्णुभक्तिसद्भावे सति । संस्कारशेषतः; सूक्ष्मवासनातः

[1] शरणयतां मनीषिणाम् —क.

**पृथुकतरुणप्रायावस्थाव्यवस्थितसंचया**
**बहुलनिगमप्रत्यादिष्टा बहिर्मुखवासना ।**
**पटुतरदृढप्रत्याहारक्रियापरिपक्त्रिमा**
**ज्वलति महति ज्योतिष्यन्तर्लयं प्रतिपत्स्यते ॥ २४ ॥**

प्रभाविलासः

**पृथुकेति । पृथुकतरुणप्रायाभिः** बाल्ययौवनप्रचुराभिः अवस्थाभिः व्यवस्थितसंचया ।

"बाल्ये क्रीडनकासक्ता यौवने विषयोन्मुखाः ।
अज्ञानं यान्त्यशक्त्या च वार्धके समुपस्थिते ॥"

इत्युक्तप्रकारेण प्रतिनियतसंग्रहा । **निगमप्रत्यादिष्टा;** निषेधशास्त्रोल्लङ्घनी । **बहिर्मुखवासना;** शब्दादिविषयवासना । **पटुतरस्य प्रत्याहारस्य;** बाह्यविषयनिवर्तनस्य । **क्रियया;** अभ्यासेन । **परिपक्त्रिमा;** परिपाकं प्राप्ता । नाशौन्मुख्यं गतेति यावत्,

"प्राणायामेन पवने प्रत्याहारेण चेन्द्रिये ।
वशीकृते ततः कुर्यात् स्थितं चेतः शुभाश्रये ॥"

इति स्मरणात् । **ज्योतिषि;** नारायणे, "नारायणः परं ज्योतिः" इति स्मरणात् । अत्र प्रत्याहारसामर्थ्यकथनेन विमर्शसंधेर्व्यवसायो नाम नवममङ्गमुक्तम् । "व्यवसायः स्वशक्त्युक्तिः" इति लक्षणात् ॥ २४ ॥

**प्रभावली**

समाधिविघ्नो न शङ्कनीयः । तत्र हेतुमाह—पृथुकेति । पृथुकावस्था तरुणावस्था च यस्याः सा । व्यवस्थितः स्थिरः **संचयो** राशिः यस्याः सा । **बहुभिः निगमैः** वेदान्तैः प्रत्यादिष्टा निराकरणीयत्वेनोक्ता । बहिर्विषयवासना । **पटुतरेति । पटुतरा;** विषयान्तरचपलं चेतः प्रत्याहर्तुं क्षमा । **दृढा;** अचञ्चला । प्रत्याहरणविषये सावधानेत्यर्थः । या प्रत्याहारक्रिया, तया परिपक्त्रिमा परिपक्वा शुष्केत्यर्थः । **अन्तःज्योतिः** अन्तस्थितं ब्रह्म । तत्र नाशं प्राप्स्यति । अतः समाधिप्रत्यूहो न शङ्कनीय इति संबन्धः ॥ २४ ॥

अद्य च,

प्रत्यक्तत्त्वसतत्त्ववेदनसुखप्रत्यूहसिद्धिप्रदैः
क्षुद्रैः केवलकालयापनपरैरन्यैरनाकृष्टधीः ।
मुक्तिद्वारकवाटिकाविघटनध्वानप्रतिश्रुन्निभै-
[1]रध्यक्षीकृतसत्पथैर्मुनिरसौ मन्त्रैर्धृतिं विन्दति ॥ २५ ॥

**राजा**—सेनापते, संप्रधारयतापि त्वदुक्तं त्वराधिक्यात्प्रचलितेनेव मया नानुभूयते । यावदिह पुरुषस्य निःश्रेयसोपायमविकलं न निष्पादयामि, यावद्वा प्रियाप्रियेषु सुकृतदुष्कृते न संक्रमयामि, न तावन्निद्रामाद्रिये । अद्य तु,

प्रभाविलासः

**प्रत्यगिति । प्रत्यक्तत्त्वस्य सतत्त्ववेदनं** तत्त्वज्ञानसहितं यत् **सुखं**, तस्य प्रत्यूहसिद्धिप्रदैः । **अन्यैः**; चिन्तामणिप्रभृतिभिः । **प्रतिश्रुन्निभैः**; प्रतिध्वनिसदृशैः । **मन्त्रैः**; भगवन्मन्त्रैः । **धृतिम्**; संतोषम् ॥ २५ ॥

**प्रभावली**

क्षुद्रमन्त्रान् विहाय मुख्यमन्त्रैः संतोषं दधातीत्ययमप्यतिशयोऽस्यास्तीत्याह—**प्रत्यक्तत्त्वेति** । **प्रत्यक्तत्त्वं च सतत्त्वं** चेति द्वन्द्वः । **प्रत्यक्तत्त्वं** ब्रह्मतत्त्वम् । प्रत्यक्तत्त्वसमानतत्त्वं निष्कृष्टात्मा, तस्यापहतपाप्मत्वादिभिर्ब्रह्मणा समानत्वात् । **प्रत्यक्तत्त्वसतत्त्वयोः वेदनेन** साक्षात्कारेण यत् **सुखं**, तस्य विघ्नायमान**सिद्धिप्रदैः क्षुद्रैः** क्षुद्रफलप्रदैः **अन्यैः** मन्त्रैः **अनाकृष्टधीः** सन् **मुनिः मुक्तिद्वारकवाटिकायाः विघटने** यो **ध्वनिः**, तस्य प्रतिध्वनिसंनिभैः, प्रत्यक्षितः **सत्पथः** मनःशुद्धिसंतोषादिर्यैस्तैः मूलमन्त्रादिभिः **धृतिं** संतोषं **विन्दति** लभते ॥ २९ ॥

त्वदुक्तमर्थं निश्चिन्वतापि फले त्वराधिक्यात्प्रचलितेनेव मया न गृह्यते । फलसिद्धिपर्यन्तं मम निद्रा नास्तीत्याह—**यावदिति** । **अविकलं** परिपूर्णं **निष्पादयामि** संपादयामि । अथ पुरुषस्य सांप्रतिकीमवस्थां वर्णयति—**अद्य त्विति** ।

[1] अध्यक्षीकृतसत्पथः—क.

कामातङ्कमतीत्य कोपदहनं निर्वाप्य वित्तस्पृहा-
वेतालीं व्यवधूय बान्धवकथागर्तं समुत्तीर्य च ।
सङ्गोत्तंसितवासनासहचरः संसारकाराकुटी-
निष्क्रान्तिक्रमपादुकां तनुमनुद्विग्नो मुनिः क्षाम्यति ॥ २६ ॥

व्यवसायः—महाराज, मैवमाशङ्केथाः,

स्वापोद्बोधव्यतिकरनिभे भोगमोक्षान्तराले
कालं कंचिज्जगति विधिना केनचित् स्थाप्यमानाः ।
तत्त्वोपायप्रभृतिविषये स्वामिदत्तां स्वनिष्ठां
शेषां कृत्वा शिरसि कृतिनः शेषमायुर्नयन्ति[1] ॥ २७ ॥

प्रभाविलासः

**कामेति । सङ्गः;** सत्संगतिः । तेन **उत्तंसिताः** प्रवर्धिताः **वासनाः** भगवद्विषयवासनाः, ताभिः **सहचरः । संसारकाराकुटीति;** अनेन "तावत् कारागृहं गृहम्" इति वचनं स्मारितम् । तेन बन्धसूचनात् विद्रवो नाम विमर्शसंधेस्तृतीयमङ्गं निरूपितम् । "विद्रवः कथ्यते बन्धवधादिकम्" इति लक्षणात् । **पादुकेति;** समाधिनिष्पत्तिसाधनत्वमुक्तम्, "नृदेहमाद्यं प्रतिपद्य दुर्लभम्" इति स्मरणात् । **अनुद्विग्नः क्षाम्यतीति;** कामाद्यतिक्रमेऽपि शरीर उद्वेगराहित्येन धारणाभिलाषो न निवर्तत इति निर्वेदः ॥ २६ ॥

**स्वापेति । विधिना** प्रारब्धकर्मणा तत्परिपाकावसरस्य निर्धारण-

प्रभावली

विरक्तोऽयं दुःखहेतुं शरीरं मुक्तिसाधनतया कथंचित्क्षाम्यतीत्याह—**कामातङ्कमिति । सत्सङ्गेन** उत्तंसिता अलंकृता या **वासना** सद्विषयानुभवजनितवासना, तस्याः **सहचरः** सन् मुनिः **तनुं** स्वशरीरं **संसार** एव कारागृहं, तस्मात् निष्क्रान्तेः । क्रमशब्देन क्रमहेतुपादतलं लक्ष्यते । तस्य **पादुकाम्;** हेतुगर्भमिदम् । पादुकात्वात् **अनुद्विग्नः** धीरः सन् सहते ॥ २६ ॥

**आशङ्केथा** इति । त्वराधिक्यात् प्रचलितेनेव मयेति येयमाशङ्का तां मा कृथाः । तत्र हेतुमाह—**स्वापेति । स्वापोद्बोधयोः** निद्राजागरयोः, संपर्क-

[1] क्षिपन्ति इति प्रभावलीपाठः

ततश्च,

**सिद्धप्रायसमीहितस्य वितथोदर्को वितर्कः पुनः**
**स्थूलाभ्यूहविसंस्थुलस्थितिमतामत्के[1] चमत्कारिणः ।**
**दूरीकृत्य बलात्त्वया रिपुचमूदुर्वीरदर्वीकरान्**
**किंचिन्न्यूनमनोरथेन कृतिना किं नाम संचिन्त्यते ॥ २८ ॥**

**प्रभाविलासः**

शक्यतया केनचिदित्युक्तिः । **तत्त्वम्**; उपेयं नारायणाख्यं ब्रह्म "तत्त्वं नारायणः परः" इति श्रुतेः । **उपायः**; भक्त्यादिः । प्रभृतिपदेन पुरुषार्थ उच्यते । **स्वामिदत्ताम्**; उद्धवं प्रति भगवता श्रीकृष्णेनोपदिष्टाम्---

"अर्चायां स्थण्डिले वाग्नौ सूर्येऽप्सु हृदि वा द्विजे ।
द्रव्येण भक्तियुक्तोऽर्चेत् स्वगुरुं माममायया ।
पूर्वं स्नानं प्रकुर्वीत धौतदन्तो विशुद्धये ॥"

इत्यारभ्य "इति शेषां मया दत्तां शिरसादाय सादरम्" इत्यन्तेनोक्ताम् । **स्वनिष्ठाम्**; स्वेतिकर्तव्यताम् । **शेषाम्**; शिरसि धार्याम् । अत्र भगवद्वचनेन भाविपुरुषार्थदर्शनात् प्ररोचना नाम विमर्शसंधेरेकादशमङ्गमुक्तम्, "यथाप्तवचनाद्भाविदर्शनं सा प्ररोचना" इति लक्षणात् ॥ २७ ॥

**सिद्धेति । वितथोदर्कः**; विफल इत्यर्थः । **स्थूलाभ्यूहेन** स्थूल-

**प्रभावली**

**सदृशे** । मुमुक्षादशायां ज्ञानस्याज्ञानस्य च दर्शनात् निद्राजागरसंपर्कसदृशत्वम् । **भोगः**; संसारावस्था । **मोक्षः**; शरीरावसानभाविपरमात्मानुभवः । तयोरन्तराले । मुमुक्षुत्वदशायां **केनचिद्विधिना**; हितपरेणेश्वरेणेति भावः । **जगति कंचित्कालं स्थाप्यमानाः** मुमुक्षवो परिगृहीतोपायाः । **तत्त्वम्**; स्वस्वरूपपरस्वरूपम् । **उपायः**; उपासनादिः । प्रभृतिशब्देन फलसंग्रहः । तद्विषये स्वतन्त्रस्वामिना **दत्तां स्वनिष्ठाम्**; तत्त्वे यथार्थज्ञानम्, उपायेऽध्यवसायः, फले त्वरा च निष्ठा, ताम् । **शिरसि शेषां कृत्वा**; शिरोमालां कृत्वा । **शेषमायुः क्षिपन्ति** । तस्मात् देहपरिग्रह एषां विनिपातहेतुर्भवतीति त्वया चिन्ता न कार्येति भावः ॥ २७ ॥

एवमध्यवसाये फलमाह---ततश्चेति । **सिद्धप्रायसमीहितस्य** पुरुषस्य

[1] **अङ्के---क.**

**राजा**—(विचिन्त्य) अस्तु तावदेवम् ;

**विमुक्तिपथदेशिकैर्वितथवृत्तिवैदेशिकै-**
**र्विमृष्टशुकशौनकप्रभृतिभाषितैरुज्झितम् ।**
**भिषज्यति भवं [1]प्रभौ पितरि शेषिणि श्रीपता-**
**वपथ्यविनिवर्तकं किमपि भद्रमभ्यर्थये ॥ २९ ॥**

प्रभाविलासः

विचारेण **विसंस्थुला** दन्तुरा स्थितिर्येषां तेषाम् । **अन्ते**; निकटे । **चमत्कारिणः**; निपुणाभासान् । **दुर्वीराः** महामोहादय एव **दर्वीकराः** सर्पाः, तान् । **किंचिदिति**; प्रारब्धदेहावसानमेव विलम्ब इत्यर्थः । अत्र दुर्वीरदर्वीकरान् दूरीकृत्येति संरम्भप्रतीतेर्विरोधनाख्यं विमर्शसंधेर्दशममङ्गमुक्तम् । "संरब्धा वाग्विरोधनम्" इति लक्षणात ॥ २८ ॥

**विमुक्तीति** । **वितथवृत्तिः**; लौकिकव्यवहारः, "न लोकवृत्तिं वर्तेत वृत्तिहेतोः कदाचन" इति स्मरणात । **भिषज्यतीति**; "वैद्यो नारायणः स्वयम्" इति स्मरणात् । **विभाविति**; अपथ्यनिवारणे सामर्थ्यमुक्तम् । **पितरीति**; अनेन,

प्रभावली

**पुनर्वितर्कः** संशयः **वितथोदर्कः** व्यर्थोत्तरफलकः । संशयो नोदेतीति यावत् । अतस्त्वया चिन्ता न कार्येत्याह—**स्थूलेति** । **स्थूलाभ्यूहेन**; स्थूलविचारेण । **विसंस्थुलस्थितिमताम्**; चञ्चलनिष्ठावताम् । **अन्ते**; समीपे । **चमत्कारिणः**; सामर्थ्यवतः, शत्रुसेनासु **दुर्वीरा** एव **दर्वीकराः**, तान् **बलात् दूरीकृत्य स्थितिमता किंचिन्न्यूनमनोरथेन**, अत एव **कृतिना** कृतकृत्यप्रायेण **किं नाम संचिन्त्यते** । किमपि न चिन्तनीयमित्यर्थः ॥ २८ ॥

**अस्तु तावदेवम्**; त्वदुक्तं सत्यमस्तु । चिन्ता च त्यक्ता । तर्हि भगवतः सकाशादस्यापथ्यविनिवर्तकं किमपि मङ्गलमाशास इत्याह—**विमुक्तीति** । मुक्ति-

[1] विभौ—छ.

अद्य च—

जननविलयवृत्त्या जाङ्घिकस्यास्य जन्तोः
समयमवमृशन् यस्तिष्ठति श्रीसहायः।
प्रभुरयमनुकम्पानिघ्ननिर्विघ्नलीलः
[1]प्रजनयतु समाधिं स्वात्मनैव स्वलक्ष्म् ॥ ३० ॥

प्रभाविलासः

"हरिर्दुःखानि भक्तेभ्यो हितबुद्ध्या करोति हि ।
शस्त्रक्षाराग्निकर्माणि स्वपुत्राय यथा पिता ॥"

इति वचनं स्मारितम् । **शेषिणीति;** शेषस्य परार्थतया शेषारक्षणे शेषिण एव प्रयोजनहानिरिति व्यञ्जितम् । **किमपि भद्रमिति;** भगवत्प्राप्तिरूपमित्यर्थः । तदुक्तं वैष्णवे—

"निरस्तातिशयाह्लादसुखभावैकलक्षणा ।
भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥"

इति ॥ २९ ॥

**जननेति** । जननविलयपदे अवस्थानवकस्योपलक्षके । तदुक्तम् —

"निषेकगर्भजन्मादिबाल्यकौमारयौवनम् ।
वयो मध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥"

इति ॥ ३० ॥

प्रभावली

मार्गोपदेष्टृभिः व्यर्थाचारपराङ्मुखैः सम्यङ्निर्धारितशुकादिप्रबन्धैः **उज्झितम्** उज्झितव्यत्वेन प्रतिपादितं **भवं** संसारं **भिषज्यति** तस्य भेषजं कुर्वति **प्रभौ** अभिलषितदानसमर्थे **अपथ्यस्य** भागवतापचारादेः **विनिवर्तकं किमपि भद्रं** तदनुग्रहरूपं प्रार्थये ॥ २९ ॥

**मङ्गलाशासनं** दर्शयति—**जननेति** । जननमरणयोरावृत्त्या जाङ्घिक-

[1] प्रजनयति—क. छ.

तद्वयमत्यासन्नेन महोदयेन पुरुषमभिनन्दयितुं प्रतिष्ठेमहि ।
(नूपुररवमाकर्ण्य) का पुनरिहेदानीं चरणकमलकलहंसायमानमणिनूपुररवेणामृतं[1] शृण्वतां कर्णेष्वभिवर्षति ?

(नेपथ्ये)

भट्टिणि, दिट्ठिआ वड्ढसि । मोहं जेऊण पडिणिवुत्तो महाराओ । ता इदो इदो भट्टिणी ।

(भर्त्रि, दिष्ट्या वर्धसे । मोहं जित्वा प्रतिनिवृत्तो महाराजः । तदित इतो भर्त्री ।

**राजा**—(कर्णं दत्वा) सेनापते, तदिदं प्रणिधानसिद्ध्या पुरुषमभिनन्दयितुं प्रतिष्ठमानानां नः प्रथमोपस्थितं मङ्गलम् ; यदसावभिमुखमायाति मङ्गलदेवतेव महागुणा देवी ।

**प्रभाविलासः**

**प्रणिधानसिद्ध्या** ; समाधिसिद्ध्या । **पुरुषम्** ; जीवम् ।

**प्रभावली**

स्यास्य जन्तोः रक्षणावसरं प्रतीच्छन् यः श्रियः पतिस्तिष्ठति । **प्रभुः** ; स्वतन्त्रः । **अनुकम्पानिघ्ननिर्विघ्नलीलः** ; अनेन लीला स्वतो निर्विघ्नापि कृपया क्वचिद्विहन्यत इति सूच्यते । **स्वात्मनैव** ; स्वयमेव । **स्वलक्ष्मम्** ; स्वविषयम् । समाधिं प्रजनयतु ॥ ३० ॥

अथ स्वोत्तरकृत्यं दर्शयति—**तद्वयमिति** । **महोदयेन** ; महोत्सवेन । सुमत्या सह विवेकविषयं चेटीवचनं दर्शयति—**नेपथ्य इत्यादिना** । **भट्टिणि-भर्त्रि** । **दिट्ठिआ**-दिष्ट्या । **वड्ढसि**-वर्धसे । इदं मङ्गलाशासनम् । अथ विवेकवृत्तान्तं वदति—**मोहं जेऊण**-मोहं जित्वा । **पडिणिवुत्तो महराओ**-प्रतिनिवृत्तो महाराजः । **ता**-तस्मात् । **इदो इदो**-इत इतः । आगच्छत्विति शेषः । महाराजः भर्त्र्या आगमनं प्रतिपालयंस्तिष्ठति । तस्मात् त्वरितमुपसर्पतु भर्त्री । **जेदु**

[1] अमृतमिव—ग. छ.

(ततः प्रविशति सुमतिश्चेटी च)

**चेटी**—भट्टिणि, एसो महाराओ सेणावइणा सह इदो भट्टिणीए आअमणं पडिपालेंतो ठाइ। ता तुवरिअं एव उवसप्पउ भट्टिणी।

(भर्त्रि, एष महाराजः सेनापतिना सहेतो भर्त्र्या आगमनं प्रतिपालयंस्तिष्ठति। तत्त्वरितमुपसर्पतु भर्त्री।)

**सुमतिः**—(उपसृत्य) जेदु महाराओ।

**गअणंमि अच्छराणं जएण तुह्माण जणिअतोसाणं।**
**[1]वीणावेडिअमहुरं पहरिसगीअं सुणावेइ ॥ ३१ ॥**

(जयतु महाराजः।
गगनेऽप्सरसां जयेन युष्माकं जनिततोषाणाम्।
वीणावादनमधुरं प्रहर्षगीतं श्रूयते ॥)

**राजा**—देवि, जितं मया, यस्य भवत्या जयशब्दः प्रयुज्यते।

**व्यवसायः**—देवि, किमत्राश्चर्यं यत् त्वत्प्रियेण जितं जेष्यते चेति? कस्तावदतः परं निस्तार इति तु निर्धारणीयम्।

**प्रभाविलासः**

**अभिनन्दयितुम्**; संतोषयितुम्। **नः**; अस्माकम् ॥ ३१ ॥

**प्रभावली**

**महाराओ**-जयतु महाराजः। अद्य आकाशे गायन्तीनामप्सरसां वीणा त्वद्विजयं सूचयतीत्याह—**गअणंमीति**। **गअणंमि**-गगने। **अच्छराणं**-अप्सरसाम्। **जएण**-जयेन। **तुह्माण**-तव। **जणिअतोसाणं**-जनिततोषाणाम्। **वीणा मे पिअमहुरं**-प्रियमधुरम्। **पहरिसगीअं**-प्रहर्षगीतम्। **सुणावेइ**-श्रावयति ॥ ३१ ॥

[1] वीणामेडिअ महुरं—ख; वीणा मे पिअमहुरं इति प्रभावलीपाठः

**सुमतिः**—सेणावइ, कज्जसेसणिव्वहणंमि वि णिव्वूडसमरकज्जो महाराओ एव्व पमाणं।

(सेनापते, कार्यशेषनिर्वहणेऽपि निर्व्यूढसमरकार्यो महाराज एव प्रमाणम्।)

**राजा**—देवि, मैवं मय्येव भारमारोपयेथाः। अस्ति खलु सर्वधुरीणः कश्चित्सर्वजगदन्तर्यामी पुरुषः। तथाहि—

**आधेयत्वप्रभृतिनियमैरादिकर्तुः शरीरं**
**सत्तास्थेमप्रयतनफलेष्वेतदायत्तमेतत्।**
**विश्वं पश्यन्निति भगवति व्यापकादर्शदृष्टे**
**गम्भीराणामकृतकगिरां गाहते चित्तवृत्तिम्॥ ३२॥**

प्रभाविलासः

**निर्व्यूढः;** निष्पन्नः। **आधेयत्वेति**। प्रभृतिपदेन नियाम्यत्वशेषत्वे कथिते। नियमपदेन यावद्भावभावित्वमुक्तम्। अनेन श्रीभाष्यकारोक्तशरीरलक्षणं संगृहीतम्। यदाहुः—"सर्वात्मना आधेयतया शेषतया चापृथक्सिद्धप्रकारभूतमाकारः शरीरमिति चोच्यते" इति। नियमेति परकायप्रविष्टस्य परकायशरीरत्वव्यावृत्तिः। लोके शरीरसत्तादयो न शरीर्यधीनाः, कर्मादितन्त्रत्वात्। ईश्वरस्य शरीरभूतविश्वसत्तादयः स्वाधीना एवेति विशेषमाह—**सत्तेति**। **स्थेमा;** स्थितिः, "को ह्येवान्यात् कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्" इति श्रुतेः। **व्यापकादर्श-**

प्रभावली

इतः परमस्माकं को वा कार्यशेषस्य निस्तार इति निश्चेतव्यम्। **सेणावइ**-सेनापते। कज्जसेसनिव्वहणंमि-कार्यशेषनिर्वहणे। णिव्वूडसमरकज्जो-निर्व्यूढसमरकार्यः। समरनिर्वाहक इति यावत्। **महाराओ एव्व**-महाराज एव। **पमाणं**-प्रमाणम्। निर्णायक इत्यर्थः। **आधेयत्वेति**। आधेयत्वविधेयत्वशेषत्वानां

**व्यवसायः**—एतदेव तत्त्वम् । तथापि तन्निबन्धनं किंचिद-हमध्यवस्यामि । कर्मनिगलयन्त्रितस्य हि पुरुषस्य कालक्षेपरहित-कल्याणनिर्वहणाय कश्चित् समाधिकदरिद्रः समाधिराधातव्यः[1] । तदुपसंपत्तये चासौ समयनियतसाधिष्ठसूक्ष्मसन्मन्त्ररहस्यवेदिना पुनरपि दिव्येन केनचित् देशिकेन दत्तदृष्टिर्भावयितव्यः ।

**राजा**—एतदेव ममापि हृदये वर्तते । संपत्तिस्तु परस्मिन्नेव समायतते ।

प्रभाविलासः

**दृष्टे;** "यस्यात्मा शरीरम्" इत्याद्यपरिच्छिन्नवेदान्तशास्त्रवेद्ये भगवति । **इति पश्यन्;** एवं पश्यन् । विश्वं जगत् भगवच्छरीरभूतं तदधीनसत्ताकं चेति जानन्निति यावत् । **गम्भीराणाम्;** शरीरशरीरिभावसमर्पकघटक-श्रुतिस्मृत्यनुग्रहमन्तरेणाशक्यनिर्णयानाम् । **अकृतर्कगिराम्;** "तत्त्वमसि" "अयमात्मा ब्रह्म" "सर्वं खल्विदं ब्रह्म" "तयोरन्यः पिप्पलं स्वाद्व-त्त्यनश्नन्नन्योऽभिचाकशीति" "भोक्ता भोग्यं प्रेरितारं च मत्वा" इत्यादि-भेदाभेदश्रुतीनाम् । **चित्तवृत्तिम्;** तात्पर्यम् । **गाहते;** जानाति ॥ ३२ ॥

**समयेति** । **समयनियतस्य;** सिद्धान्तनियतस्य । **साधिष्ठस्य;** अभीष्टनिर्वाहकस्येति यावत् । **सूक्ष्मस्य;** अविज्ञाततात्पर्यस्य मन्त्रस्य

प्रभावली

नियमैः एतत् विश्वम् आदिकर्तुः **शरीरं** भवति । **सत्तास्थेमप्रयतनफलेषु;** सृष्टिस्थितिसंहारमोक्षेषु **एतदायत्तं च भवति** । व्यापकमन्त्र एवादर्शः, तस्मिन् **दृष्टे भगवत्येवं पश्यन्** पुरुषः पूर्वोक्तप्रकारेण **गम्भीराणां** वेदवाचां भेदाभेद-घटकश्रुतीनाम् अभिप्रायं जानाति । नान्य इत्यर्थः ॥ ३२ ॥

एतदेव **तत्त्वम्;** परमार्थः । **समयेति** । **समयनियतम्;** सिद्धान्ताव्यभि-चारि । **साधिष्ठं सूक्ष्मम्** उपदेशेन विना ज्ञातुमशक्यं यन्मन्त्ररहस्यं, तद्वेदिना **दिव्येन** भूमावसुलभेन **देशिकेन** योगरहस्यविदेति यावत् । **पुनरपि दत्तदृष्टिः**

[1] समाराधयितव्यः—क; समाधिरारोपयितव्यः—ग.

सुमतिः—(अग्रतोऽवलोक्य) अय्यउत्त, अअं अअंड-चंदोदओ विअ अइविसओ कोवि पआसो अग्गदो दीसइ ।

(आर्यपुत्र, अयमखण्डचन्द्रोदय इवातिविशदः कोऽपि प्रकाशोऽग्रतो दृश्यते ।)

राजा—सेनापते, किमिदमैन्द्रजालिकमिव किमप्यतर्कितो-पस्थितम्, अनिर्धारितकारणम्, अमृतपारावारपूरपर्यायप्रसरम्, आप्लावितदशदिशावकाशम्, अवदातमनोहरम्[1], अदृष्टपूर्वं धाम ।

व्यवसायः—नूनं नारदेन भगवता समागतेन भवितव्यम् । न ह्यन्यस्य कस्यचित् [2]आम्रेडितश्वेतद्वीपदेवताद्वैतमेतादृशं तेजः ।

(नेपथ्ये)

अधराहितचारुवंशनाला मकुटालम्बिमयूरपिञ्छमालाः ।
हरिनीलशिलाविभङ्गनीलाः प्रतिभाः सन्तु ममान्तिमप्रयाणे ॥२३॥

प्रभाविलासः

रहस्यं वेत्तीति तथोक्तः; तेनात्र गुरूपदेशकथनात् प्रसङ्गो नाम विमर्श संधेरङ्गमुक्तम् । "गुरूपदेशकीर्तनं प्रसङ्गः" इति लक्षणात् । **अधरेति । वंशनालः**; वेणुवाद्यम् । अतिस्निग्धत्वकथनाय विभङ्गोक्तिः । **प्रतिभाः**; तेजःपुञ्जाः; श्रीकृष्णविग्रहा इत्यर्थः । **अन्तिमप्रयाण इति** अन्तिमस्मृते-

प्रभावली

**भावयितव्यः**; आचार्येण यथा दत्तदृष्टिर्भवति तथाचार्योपसदनं कारयितव्यः । **संपत्तिस्तु**; आचार्यकटाक्षलाभादिः । **परस्मिन्नेव समायतते**; परमपुरुषाधीना; नास्माभिः संपादयितुं शक्येत्यर्थः । अथ नारदागमनं वक्तुं सुमत्यास्तेजोविशेष-दर्शनं प्रस्तौति—**अग्रत इति । आस्थितश्वेताद्वैतम्**; स्वीकृतश्वैत्यैकरूपम् । अखण्डश्वेतमित्यर्थः । अथ नारदगीतिं दर्शयति—**अधरेति । अधरे अर्पितः**

[1] मनोरमम् —ख.  [2] आस्थितश्वेताद्वैतम् —क. छ.

**राजा**—अहो नु खलु भगवतो महामुनेः प्रपञ्चितपरम-पुरुषभावनाविशेषा विपञ्चिकानिनादकर्बुरा विभ्रमगीतिः ।

**सुमतिः**—अय्यउत्त, एदेण खु आअदेण इसिणा तुह्म जाव संवादो होज्ज । अहअं दाव सहीअणसहिदा संलवंती तुह्म समीहिदे तुरम्मि ।

(आर्यपुत्र, एतेन खल्वागतेन ऋषिणा युष्माकं यावत्संवादो भवेत् । अहं तावत्सखीजनसहिता संलपन्ती युष्माकं समीहिते त्वरे ।)

(इति सचेटी निष्क्रान्ता)

**प्रभाविलासः**

रावश्यकत्वमुक्तम् । यत्तु कैश्चिदन्तिमस्मृतेरनपेक्षत्वमुक्तं तेषां तस्याश्चेतनयत्नसाध्यत्वनिषेधे तात्पर्यम्, न तु स्वरूपनिषेधे ; "स्मरयसि बहुलीलम्" इतीश्वरयत्नसाध्यत्वकथनात् । **सन्तु** ; साक्षाद्भवन्तु । षोडश-सहस्रस्त्रीणां मन्दिरेष्वेकदैव बहुविग्रहसाक्षात्कारात तत्प्रत्यभिज्ञया बहुवचन-स्वीकारः ॥ ३२ ॥

**प्रभावली**

**चारुः वंशनालः** यासां ताः । **मकुटालम्बिनी मयूरपिञ्छमाला** यासां ताः । तद्विषया इत्यर्थः । हरिनीलशिलाविभङ्गवत नीलाः । तद्विषया इत्यर्थः । **प्रतिभाः** ; श्रीकृष्णविषयिण्यो बुद्धयः । मम **अन्तिमप्रयाणे** मरणकाले सन्तु ॥ ३२ ॥

**प्रपञ्चितः परमपुरुषस्य भावनाविशेषः** यया सा । **विपञ्चीनिनादेन** शबला विलासगतिः । **अय्यउत्त**-आर्यपुत्र । **एदेण खु**—एतेन खलु । **आअदेण**-आगतेन । **इसिणा**—ऋषिणा । **तुह्म**-तव । **जाव**-यावत् । **संवादो**-संवादः । **होज्ज**-भवेत् । **अहअं**-अहम् । **दाव**-तावत् । **सहीअणसहिदा**-सखीजनसहिता । **संलवंती**-संलपन्ती । तुह **समीहिदे**-तव समीहिते, पुरुषसमाध्यारम्भे ।

(ततः प्रविशति नारदः)

**नारदः**—अहो नु खलु महाराजोऽयमनादिसंसारसागरनिमग्नं पुरुषमाध्यात्मिकविज्ञानपोतमारोप्य बहुधैव बाह्यकुदृष्टिजलजन्तुभिरनुपप्लुतेन सुपथा समाधिपारसंनिकर्षमानीय साध्यशेषे संत्वरमाणस्तिष्ठति। अद्य खलु,

सुमतिबहुमतेन स्वात्मना सत्त्वधाम्ना
बहिरबहिरुदीर्णे वारिते वैरिवर्गे।
जनयति पुरुषस्य ज्यायसीं चित्तवृत्तिं
समविषमविभेदी सार्वभौमो विवेकः॥ ३४॥

ततश्च,

तितिक्षुर्द्वन्द्वानि द्रुतमतिरयत्नोपनतभुक्-
परित्याज्यत्यागी भ्रमर इव सारग्रहरुचिः।
कृतज्ञः प्राप्तव्ये नियतधृतिरेकान्तरसिको
मुमुक्षुः संधत्ते मुनिरनिभृतं ब्रह्मणि मनः॥ ३५॥

**प्रभाविलासः**

सुमतीति। स्वात्मना; स्वस्वरूपेण। ज्यायसीम्; श्रेष्ठतमाम्॥ ३४॥
तितिक्षुरिति। द्वन्द्वानि; सुखदुःखादीनि। द्रुतमतिरिति;

**प्रभावली**

तुरम्मि-त्वरे। सचेटी; दासीसहिता। दूरतो विवेकं प्रशंसति—**अहो नु खल्विति**। अथाद्य विवेकः पुरुषस्य प्रशस्तां चित्तवृत्तिं जनयतीत्याह—**अद्य किलेति**। **सत्त्वधाम्ना**; सत्त्वगुणनिलयेन। **स्वात्मना**; स्वयमेव। **उदीर्णे**; उत्कटे। बहिर्वैरिवर्गः कामाद्यधिष्ठानदेवतारूपः। अबहिरन्तर्वैरिवर्गः आत्मधर्मरूपाः कामक्रोधादयः। **वारिते**; निरस्ते सति। स्वात्मनैवारिवर्गे वारित इत्यर्थः। **समविषमविभेदी**; साध्यसाधकविवेचनसमर्थः। पुरुषस्य विलक्षणां चित्तवृत्तिं जनयति॥ ३४॥

अथ चित्तवृत्तिजननफलमाह—**ततश्चेति**। **द्वन्द्वानि**; सुखदुःखादीनि।

**राजा**—(त्वरितमुपसृत्य) भगवन्, अद्य खलु धन्या वय-मनुगृहीताः स्मः ।

**अयमहमभिवादये भवन्तं [1]सकलसुरासुरबृन्दवन्दनीयम् ।**
**विधिवशपरिभूतमोहपक्षो विनयपरिष्कृतसंनतिर्विवेकः ॥ ३६ ॥**

प्रभाविलासः

"कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाशयः ॥"

इति स्मारितम् । **परित्याज्यानि**; परोद्वेजनादीनि । तदुक्तम्—

"नोद्विजेत जनाद्धीरो जनं चोद्वेजयेन्न तु ।
अतिवादांस्तितिक्षेत नावमन्येत कंचन ।
देहमुद्दिश्य पशुवद्वैरं कार्यं न केनचित् ॥"

इति । **भ्रमर इवेति**;

"अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।
सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥"

इति स्मारितम् । **एकान्तरसिक इति**;

"वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ।
एक एव चरेत्तस्मात् कुमार्या इव कङ्कणम् ॥"

इति स्मारितम् ॥ ३५ ॥

**अयमिति । विधिः**; दैवम् ॥ ३६ ॥

**प्रभावली**

**तितिक्षुः**; सहनशीलः । "न लोक" इत्यादिना कृद्योगषष्ठीप्रतिषेधः । **द्रुता** शीघ्रग्राहिणी मतिर्यस्य सः । **अयत्नोपनतभुक्**; स्वयंप्राप्तभोजी । अजगरवृत्तिरिति यावत् । **प्राप्तव्ये**; सुखदुःखे । **नियतवृत्तिः**; नियतसंतोषः ॥ ३५, ३६ ॥

[1] विविध—क. ख.

**नारदः**—आयुष्मन्, अप्रतिहतमनोरथः पुरुषमपवर्गे स्थापयेथाः। अवधूतमहामोहेन भवता नूनमन्तरितोऽयमन्तिमयुगारम्भः। किंतु,

**वीरश्रीरतिवेलविक्रमभवद्दोःशृङ्गनिःशृङ्खल-**
**क्रीडादत्तकृतार्थतापरवती न त्वत्परं प्रेक्षते।**
**अद्यत्वे पुनरद्भुतप्रणयिनी दृष्टिस्त्वया पाल्यता-**
**मन्तर्द्रष्टुमनन्यदृष्टमनघं त्यक्तावधिं शेवधिम्॥ ३७॥**

**राजा**—भगवन्, किमस्ति कश्चिच्छत्रुशेषः, यत्रास्माभिः सावधानैर्यतितव्यम्?

**नारदः**—न कश्चिदस्ति। तथापि [1]नीतिप्रधानेन भवता नित्यं विमृश्यते। अद्य तु—

**प्रभाविलासः**

**वीरश्रीरिति।** **अतिवेलविक्रमस्य** अतिशयितपराक्रमस्य **भवतः दोःशृङ्गस्य** शृङ्गतुल्यभुजस्य **निःशृङ्खलक्रीडादत्तया कृतार्थतया परवती** नाथवती॥ ३७॥

**प्रभावली**

अथ विवेकनमस्कृतो नारदो विवेकम 'अयं पुरुषः साक्षात्कृतपरब्रह्मरूपस्त्वया कार्यः' इति प्रार्थयते—**वीरश्रीरिति**। **अतिवेलः विक्रमः** यस्य तस्य **भवतः** दोःशृङ्गे निरर्गलं यथा तथा **क्रीडया दत्तायाः कृतार्थतायाः परवती** सती **त्वत्परं** त्वत्तोऽन्यं कंचन **न प्रेक्षते**। त्वदनन्यसाधरणेत्यर्थः। अथापि किंचित्कर्तव्यमस्तीत्याह—**अद्यत्व इति**। **अद्य त्वया अद्भुतरसे** प्रीतिमती **दृष्टिः** पुनः पुनः **पाल्यताम्**। किमर्थमित्यत्राह—**अन्तरिति**। **अनन्यैः दृष्टम्**। **अनघम्**; अखिलहेयप्रत्यनीकम्। **त्यक्तावधिम्**; अनन्तम्। **अन्तः**; अन्तर्वर्तमानम्। **शेवधिम्**; निधिम्। अन्तर्यामिणं पुरुषं साक्षात्कर्तुं यथायं प्रभवति तथेत्यर्थः॥ ३७–३९॥

[1] विनीति—ग.

समग्रबलयोगेन समरे पातितास्त्वया ।
कामक्रोधादयो वीराः स्वर्गस्त्रीभिः स्वयं वृताः ॥ ३८ ॥

किंच,

तत्त्वबोधजनके[1] तवाहवे मोहवीरविजयेन मोहिताः ।
अप्रविष्टसमराः प्रदुद्रुवुर्हर्षशोकभयचापलादयः ॥ ३९ ॥

तथापि किंचिदिह चिन्तनीयम् । इह हि—

त्रैगुण्याम्भोधिवेलावनतृणविषयग्रासदुर्वासनोद्य-
द्भोगैदंपर्यपर्याकुलितमनुयुगोत्कण्ठितोदग्रवृत्तिम् ।
भूयो भूयः स्वचक्रे भ्रमयति नृपशुं गाढबन्धोपरुद्धं[2]
कालोऽसौ कर्ममालाघटितभवघटीयन्त्रतन्त्रस्वतन्त्रः ॥ ४० ॥

प्रभाविलासः

**समग्रेति** । अत्र वीरशृङ्गारः ॥ ३८ ॥

**तत्त्वेति** । अत्र भयानकरसः ॥ ३९ ॥

**त्रैगुण्येति** । **त्रैगुण्यं** संसार एवाम्बुधिः, तस्य **वेलावने** तीरवने । समुद्रजलोपसेकवर्धिततयातिमृदुतरुणस्वादुतृणाश्रयत्वकथनाय वेलावनोक्तिः । **तृणविषयाः**; शब्दादिविषयतृणानीत्यर्थः । तेषां **ग्रासेन** भक्षणेन जातया **दुर्वासनया उद्यतः** जातस्य **भोगस्य** सुखानुभवस्य **ऐदंपर्येण** इदमेव परमित्यभिलाषेण **पर्याकुलितम्** । **अनुयुगे** कृतादिपरिवृत्तौ **उत्कण्ठिता**

प्रभावली

कलियुगाख्यः कश्चित् शत्रुर्वर्तते । स पुनः कामादीनुज्जीवयिष्यतीत्याह— **त्रैगुण्येति** । **त्रैगुण्यं** प्रकृतिमण्डलमेव **अम्भोधिः**, तस्य वेलावनतृणानि तटवनशष्पस्थानीया ये **विषयाः** शब्दादयः, **तद्ग्रासेन** जाता या **दुर्वासना**, तया **उद्यत्** जातं यत् **भोगैदंपर्यं** विषयभोगे तात्पर्यम्; तेन **पर्याकुलितम्**; परवश-

[1] सचिवे—ख. म.    [2] बन्धं—म.

**राजा**—अत एव खल्वहमनेहश्चक्र[1]भ्रमणादह्णाय बहिर्भाव-यितुमभिवाञ्छामि । तथाहि—

**कालावर्तान्प्रकृतिविकृतीः कामभोगेषु दोषा-**
**ञ्ज्वालागर्तप्रतिमदुरितोदर्कदुःखानुभूतिम् ।**
**याथातथ्यं स्वपरनियतं यच्च दिव्यं पदं तत्**
**काराकल्पं वपुरपि विदन् कस्तितिक्षेत बन्धम् ॥ ४१ ॥**

प्रभाविलासः

**उदग्रा वृत्तिः** यस्य तम् । अन्यत्र अनुयुगं यानाङ्गमनु उत्कण्ठिता उद्धूत-कण्ठा उदग्रा वृत्तिर्यस्य तम् । "यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु" इति निघण्टुः । **स्वचक्रे**; दिनपक्षमासर्त्वयनसंवत्सरभेदेन परिवर्तने । **गाढबद्धम्**; उपरुद्धं च । **कर्ममालया घटितस्य** भवाख्यस्य **घटीयन्त्रस्य** उद्घाटनाद्यपरपर्याययन्त्रविशेषस्य **तन्त्रे** प्रवर्तने **स्वतन्त्रः**, कर्तेत्यर्थः । अनेन,

"ततः संसारचक्रेऽस्मिन् भ्राम्यते घटियन्त्रवत् ।
कदाचित् स्वर्गमाप्नोति कदाचिन्नरकं नरः ॥"

इति स्मारितम् । अत्रोद्वेजनप्रतीतेर्द्युतिर्नाम विमर्शसंधेरङ्गमुक्तम् "द्युतिरुद्वेजनं मतम्" इति लक्षणात् ॥ ४० ॥

**कालेति** । **प्रकृतिविकृतीः**; प्रकृतिविकारान् अहंकारादीन् ।

प्रभावली

मिति यावत् । **अनुयुगम्** अनुक्षणम् **उत्कण्ठिता** संजातोत्कण्ठा **उदग्रा वृत्तिः** यस्य सः । **गाढेन** दृढेन **बन्धेन निरुद्धं** नृपशुं पुरुषपशुं **कर्ममालया** पाशेन **घटितं** संयोजितम् । **भव एव घटीयन्त्रं**, तस्य **तन्त्रे** प्रवर्तनरूपव्यापारे **स्वतन्त्रः कालः भूयो भूयः स्वचक्रे** परिवृत्तिरूपे चक्रे कालचक्रे **भ्रमयति** आवर्तयतीति भावः । अयं विशिष्टः शत्रुरिति भावः ॥ ४० ॥

कालचक्रपरिभ्रमणात् । **अह्णाय**; शीघ्रम् । पुरुषमिति शेषः । कालचक्रपरि-भ्रमणं जानतः संसारो दुःसहो भवतीत्याह—**कालावर्तानिति** । **कालस्यावर्तः**;

[1] परिभ्रमणमह्णाय बहिर्भावयितुम्—क. ख.

अत्र तु भगवता निःसमाभ्यधिकनिवृत्तिधर्मात्मना निपुणमस्मन्मनीषिते साहाय्यकमाचरणीयम् । निजदुरितनिदाघनिष्टप्तजन्तुसंजीवनी खलु भव्यवृत्तीनां भवादृशां वागमृतवृष्टिः ।

**लुप्तदृष्टिभिरलब्धदेशिकैर्लोकवेदपदवी दुरत्यया ।**
**तत्प्रसीद भगवन्मदीक्षितं पुण्डरीकमिव पाहि मन्त्रतः ॥ ४२ ॥**

प्रभाविलासः

**ज्वालागर्तः**; ज्वालाभिरावृतगर्तः । **स्वपरनियतम्**; आत्मेश्वरासाधारणं शेषत्वशेषित्वादिकम् । द्वितीयान्तपदेषु कालावर्तानित्यादिषु सर्वत्र विदन्निति पदमावृत्त्या योजनीयम् ॥ ४१ ॥

**लुप्तेति ।**

"पापिष्ठः क्षत्रबन्धुश्च पुण्डरीकश्च पुण्यकृत् ।
आचार्यवत्तया मुक्तौ तस्मादाचार्यवान् भवेत् ॥"

इतीममर्थमभिप्रेत्य **पुण्डरीक**मिवेत्युक्तिः । पुण्डरीको नाम कश्चित् ब्राह्मणः ॥ ४२ ॥

प्रभावली

कालस्य पुनःपुनरावर्तनानि । **प्रकृतिविकृतीः**; चतुर्विंशतितत्त्वानि । ज्वालारूपगर्तप्रतिमं यत् दुरितं, तस्य **उदर्कम्** उत्तरफलरूपं नरकादिदुःखानुभवम् । **स्वपरनियतम्**; स्वात्मपरात्मनोः स्वतः सिद्धम् । **याथातथ्यम्**; स्वाभाविकं रूपम् । **दिव्यं पदम्**; परमं पदम् । **तत्**; विलक्षणम् । कारागृहसदृशं प्राकृतमयं स्वशरीरं च जानन् पुरुषः को वा संसारबन्धं सहेत ॥ ४१ ॥

**अत्र**; अस्मदारब्धे पुरुषस्य मोक्षे । **निःसमाभ्यधिकः यो निवृत्तिधर्मः**, स आत्मा स्वरूपं यस्य तेन । **निपुणं** यथा तथा । साहाय्यकविशेषणं वा । साहाय्यकं मन्त्रोपदेश इति सूचयति—**निजेति** । **दुरितमेव निदाघः**, तेन **निष्टप्ताः** नितरां तप्ताः, ये **जन्तवः**, तेषां संजीवनी । **भव्यवृत्तीनाम्**; कुशलचरितानाम् । भवद्विधानामुपदेशवृष्टिः । आचार्योपदेशरहितानामैहिकामुष्मिक-

**व्यवसायः**—स्वधर्म एव भगवता श्रुतिशिरसि गीतः सूचितोऽसौ देवेन ।

**नारदः**— अस्मदभिमतमेव समादिष्टं महाराजेन । यतिष्ये चाहं यथासारम् ।

प्रभाविलासः

**भगवता श्रुतिशिरसि**; श्रीगीतास्वित्यर्थः । **गीत इति**;

"आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ।
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ।
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं तु ततोऽन्यथा ॥"

इत्यादिनेत्यर्थः ।

**प्रभावली**

सिद्धयो न संपत्स्यन्ते । अत इमं मन्त्रोपदेशतः पाहीत्याह—लुप्तेति । **अलब्धाचार्योपदेशैः**, अत एव नष्टज्ञानैः **लोकपदव्यः** ऐहिकसिद्धयः दुष्प्रापाः । यथा लोकपदवीं तत्तद्देशज्ञः पुरुषो वेद, तथा वेदपदवीमपीति भावः । **तत** तस्मात् **मदीक्षितं** मत्परिगृहीतमिमं पुरुषं **पुण्डरीकमिव**; यथा पुरा बदरिकाश्रमे पुण्डरीकमुनिमष्टाक्षरोपदेशेन त्वं रक्षितवान्, **तथा पाहि मन्त्रोपदेशतः** ॥ ४२ ॥

**भगवता श्रुतिशिरसि गीतः**; उपनिषदि गीतः । **स्वधर्म एव**; आचार्यधर्म एव;

"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥"

अधिकमिह मुमुक्षोरागमग्राह्यवर्गात्
स्वयमिह गुरुभक्त्या दर्शितं स्वानुभूतौ ।
प्रथयति मयि सौम्य त्वन्निदेशेन मन्ये
सपदि भवति लग्ने[1] गाढलग्नः समाधिः ॥ ४३ ॥

तदिह यदभ्यर्थिता वयं भवद्भ्यां किमपि करणीयं तत्साधयितुमितः साधयामः ।

(इति सहर्षनृत्तगत्या निष्क्रान्तः)

### प्रभाविलासः

**अधिकमिति । आगमग्राह्यवर्गात् अधिकमिति ;** शास्त्रैककण्ठ्योक्त्या तात्पर्यतो वा दृष्टाः संप्रदायैकगम्याः केचनार्थविशेषा विवक्षिताः । शास्त्रान्तरस्थैश्च संप्रदायोऽत्र दुर्लभ इत्युक्तम् । **स्वानुभूतौ ;** स्वानुभवे । **दर्शितं प्रथयति ;** प्रकाशयति मयि । **भवति ;** त्वयि । लग्ने **सति** समाधिः गाढलग्नो भवतीति मन्य इति योजना ॥ ४३ ॥

### प्रभावली

इति गीतः । **देवेन** विवेकेन **सूचितः ;** नान्यः । **यतिष्ये ;** उपदेक्ष्यामीत्यर्थः । सारमनतिक्रम्य **यथासारम्** । सारांशं संग्रहेणोपदेक्ष्यामीति यावत् । त्वदाज्ञया मया मन्त्रे उपदिष्टे अस्य मनसि समाधिर्दृढलग्नो भवतीत्याह—**अधिकमिति** । हे सौम्य, **आगमग्राह्यवर्गात् ;** आगमग्राह्याः शमादयः, तद्वर्गादपि **मुमुक्षोः** समाधावधिकमपेक्षितं **गुरुभक्त्या स्वयमेव दर्शितमर्थं त्वन्निदेशेन मयि प्रथयति** सति प्रसिद्धं कुर्वति सति । **सपदि ;** तत्क्षणमेव । **लग्ने ;** चित्तलग्ने । **स्वानुभूतौ ;** स्वेन स्वस्यानुभूतिः प्रकाशो यस्य तस्मिन् दहराकाशे ब्रह्मणीत्यर्थः । **समाधिः ;** ध्यानम् **गाढं लग्नो** भवतीति मन्ये ॥ ४३ ॥

**भवद्भ्याम् ;** विवेकसेनापतिभ्याम् । **यत्किमपि करणीयं** कार्यं **वयमभ्य-**

[1] चित्ते—ख.

राजा—सेनापते, संप्रति सिद्धप्रायं समाधिमुत्पश्यामि। अस्ति तावत्—

षडङ्गमथवाष्टाङ्गं समाधिमधिरोक्ष्यतः।
अवलम्बनमक्षुद्रा दयैका दानवद्रुहः॥ ४४॥

प्रभाविलासः

षडङ्गमिति। षडङ्गम्; प्रपदनम्। अत्र पञ्चाङ्गे प्रपदने सप्ताङ्गे च भजने उपचारादङ्गत्वनिर्देशः। तानि सप्ताङ्गानि यमादीनि। तत्र यमो नामाहिंसादिः। उक्तं च योगवासिष्ठे—

"अहिंसा सत्यमस्तेयं ब्रह्मचर्यं तथा धृतिः।
दयार्जवमिताहाराः शौचं चैव यमा दश॥"

इति। नियमाः तपःसंतोषादयस्तेनैवोक्ताः—

"तपः संतोष आस्तिक्यं दानमीश्वरपूजनम्।
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपः श्रुतम्।
नियमो दशधा प्रोक्तस्तांश्च सर्वान्पृथक्पृथक्॥"

इति। आसनानि स्वस्तिकादीनि पराशरोक्तानि—

"स्वस्तिकं गोमुखं पद्मं वीरं सिंहासनं तथा।
मयूरं कुक्कुटं चैव भद्रं कूर्मासनं तथा।
मुक्तासनं तथैतेषां पृथग्वक्ष्यामि लक्षणम्॥"

इति। प्राणायामास्तु रेचकादयः। तदुक्तम्—

प्राणः स्याद्देहजो वायुरायामस्तन्निरोधनम्।

प्रभावली

र्थिताः, तत् साधयितुं साधयामः गच्छामः। उत्पश्यामि; मन्ये। षडङ्गमिति। षडङ्गो योगः प्रपत्तिः। अष्टाङ्गो योगः उपासनात्मकः। उभयमपि समाधिशब्देनोच्यते। अनयोर्मध्ये यं कंचन समाधिम् अधिरोढु-

प्रभाविलासः

तद्रेचकं पूरकं च कुम्भं चेति त्रिधोच्यते ।
पूरके कुम्भके चैव रेचके प्रणवं स्मरेत् ॥"

इति । प्रत्याहारस्तु विषयेभ्य इन्द्रियाकर्षणम् । तदुक्तम्—

"शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित् ।
कुर्याच्चिन्तानुसारीणि प्रत्याहारपरायणः ॥"

इति । शौनकेन तु प्रकारान्तरेणोक्तः—

"अष्टादशसु यद्वायोर्मर्मस्थानेषु धारणम् ।
स्थानात्स्थानात्समुत्कृष्य प्रत्याहारः स चोत्तमः ॥"

इति । ध्यानधारणसमाधयस्त्वधस्तादुक्ताः । तत्र समाधिर्द्विविधः—सालम्बनं निरालम्बनं चेति । तत्र सालम्बनमधस्तान्निरूपितम् । निरालम्बनं तु वसिष्ठेन दर्शितम्—

"एकं ज्योतिर्मयं शुद्धं सर्वगं व्योमवद् दृढम् ।
तदप्रत्यक्षममलमादिमध्यान्तवर्जितम् ।
स्थूलं सूक्ष्ममनाकाशमसंस्पृश्यमचाक्षुषम् ।
न रसं न च गन्धाढ्यमप्रमेयमनूपमम् ।
आनन्दमक्षरं नित्यं सदसत्सर्वकारणम् ।
अदृश्यं दृश्यमध्यस्थं बहिःस्थं सर्वतोमुखम् ।
सर्वदृक्सर्वतःपादं सर्वदृक्सर्वतःशिरः ।
ब्रह्म ब्रह्ममयोऽहं स्यामिति यद्वेदनं भवेत् ।
तदेतन्निर्गुणध्यानं सगुणं च ब्रवीमि ते ॥"

प्रभावली

मिच्छतः पुरुषस्य । अवलम्बनम्; आधारः, निदानमित्यर्थः । अक्षुद्रा;

तयैव गाढावलम्बितोऽसौ पुरुष इदानीमालक्ष्यते । तथाहि—

**विषयमदिरामुग्धैस्त्यक्तः स एष पृथग्जनैः**
**क्वचन समये यत्रैकाग्र्यं क्वचिच्च तथास्पदे ।**
**निभृतकरणग्रामस्तृप्य[1]न्निरुद्धमरुद्गणः**
**परमिह परे धाम्नि प्रत्यङ्मुखः प्रतितिष्ठति ॥ ४५ ॥**

## प्रभाविलासः

इति । अत्र निर्गुणमिति निरालम्बनपर्यायः । इदमेव सत्त्वोदग्रेति श्लोके निरूपितम् । तत्र षडङ्गं समाधिमिति प्रपदनपक्षे समाधिशब्दः सम्यगाधीयते आत्मात्मीयं सर्वमिति भरसमर्पणपरः । प्रपदनस्य पञ्चाङ्गान्यधस्तादेव सप्रपञ्चं निरूपितानि । **अक्षुद्रा**; निरतिशया । **दया अवलम्बनम्** । अत्र कार्यसंग्रहकथनात् आदानं नाम विमर्शसंधेस्त्रयोदशमङ्गमुक्तम्, "आदानं कार्यसंग्रहः" इति लक्षणात् ॥ ४४ ॥

**विषयेति** । **आस्पदे**; देशे । **मरुद्गणः**; प्राणादिपवनसमूहः । विषयेत्यादिना नियम उक्तः । निभृतेति प्रत्याहारः । निरुद्धेति प्राणायामः । परे धाम्नि तिष्ठतीति समाधिः ॥ ४५ ॥

## प्रभावली

निःसमाभ्यधिका । **दानवद्रुहः**; सकलविरोधिनिवर्तकस्य श्रियः पत्युः दयैका, नान्यास्ति ॥ ४४ ॥

**तया**; दयया । **इदानीं** दृढम् **अवलम्बितः**; परिगृहीतः । **असौ**; पुरुषः । तत्र च **क्वचन समये** । तथा **क्वचित्**; तथैव **क्वचिद्देशे** । उपविश्येति शेषः । निरुद्धसर्वेन्द्रियः तृप्यन् प्रीतो भवन् निरुद्धप्राणवर्गः **प्रत्यङ्मुखः** अन्तर्मुखः सन् **इह परे धाम्नि** ब्रह्मणि **परं** केवलं **प्रतितिष्ठति** निश्चलं वर्तते । ब्रह्म निश्चलं ध्यायतीति यावत् । आस्पदे परे धाम्नि प्रतितिष्ठतीत्यन्वयः ॥ ४५ ॥

[1] तृप्य्या—क.

अपिच,

पुलकमुकुलोत्तुङ्गैरङ्गैरुदश्रुभिरीक्षणै-
रयमनुभवत्यन्तर्दृष्टिः समाधिरसं पुमान् ।
ध्रुवमिह महानन्दब्रह्मोपलम्भनलक्षणे
महति विभवे निष्प्रत्यूहा मनोरथपद्धतिः ॥ ४६ ॥

व्यवसायः—देव, अहमप्येतदवगच्छामि ;

तृणक्षोदं क्षेप्तुं प्रलयपवनो न प्रभवति
क्षमस्तन्निर्दग्धुं यदनभिमतौ कालदहनः ।
तदर्वाचः सर्वानजहदवधिद्वन्द्वनियमान्
विदन्नासौ तृष्यत्यथ च न विषादे निपतति ॥ ४७ ॥

प्रभाविलासः

**पुलकेति** । **विभवे**; ऐश्वर्ये । **उपलम्भनम्**; अनुभवः ॥ ४६ ॥

**तृणेति** । **क्षोदम्**; लघुतरं चूर्णम् । **यदनभिमतौ**; यस्य सर्वेश्वरस्यानुमत्यभावे । **तदर्वाचः**; तस्मात् सर्वेश्वरात् अर्वाचः अर्वाचीनान् ।

प्रभावली

दयावलम्बितत्वे लिङ्गान्तरमाह—**अपिचेति** । **पुलकान्येव मुकुलानि** तदुच्छूनैः अङ्गैः । उद्गतानन्दाश्रुभिः ईक्षणैश्चोपलक्षितोऽयं पुरुषः । **अन्तः**स्थिते स्वात्मशरीरके परमात्मनि दृष्टिमान्; स्वान्तर्यामिपरमात्मसाक्षात्कारवानित्यर्थः । समाधिरसमनुभवति । किंच महान् आनन्दो यस्य **तन्महानन्दं ब्रह्म**, तदनुभवरूपे महत्यैश्वर्ये । **निष्प्रत्यूहा**; निर्विघ्ना । अस्य पुरुषस्य मनोरथसंततिः । **ध्रुवम्**; नूनम् ॥ ४६ ॥

**एतत्**; दयावलम्बित इत्येतत् । इदमपि दयावलम्बितत्वे लिङ्गमित्याह—**तृणक्षोदमिति** । **यदनभिमतौ**; यस्य ब्रह्मणः अनुमत्यभावे । प्रलयकालवायुरपि **तृणस्य क्षोदं** लवमपि चालयितुं न प्रभवति । **तस्मात्** परब्रह्मणः **अर्वाचः** अर्वाचीनान्; तत्सृष्टानित्यर्थः । **अजहदवधि** अपरित्यक्तपूर्वोत्तरावधि, यत् **द्वन्द्वं**

अपिच,

तुलायन्त्रोदन्तक्रमघटितनिम्नोन्नतिभृतौ
गुणौ मूढक्रूरौ युगपदधरीकृत्य मुदितः ।
मुनिर्मुक्तिद्वारं मुरमथनधीसंततिसुधा-
निधिप्रादुर्भावं भजति पुरुषः सत्त्वमनघम् ॥ ४८ ॥

प्रभाविलासः

**न तृप्यति न विषादे निपततीति** हर्षशोकनिमित्तसंमेलने संतोषविषादौ न प्राप्नोतीत्यर्थः । अत्र पुरुषस्य गुणाविष्करणप्रतीतेर्विचलनं नाम विमर्शसंधेरङ्गमुक्तम् "स्वगुणाविष्करणं विचलनम्" इति लक्षणात् ॥ ४७ ॥

**तुलेति । तुलायन्त्रस्य उदन्तस्य** वृत्तान्तस्य **क्रमेण** तारतम्येन **घटिते** निम्नोन्नती बिभृत इति तौ तथोक्तौ । **मूढक्रूरौ;** तमोरजसी । **मुनिः;** मननशीलः । **धीसंततिः;** स्मृतिसंततिः । "सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति श्रुत्या सत्त्वस्य धीसंततिहेतुत्वमुक्तम् । "स्मृतिलम्भे

प्रभावली

शीतोष्णसुखदुःखादि, तन्नियमा येषाम्; द्वन्द्वव्याप्तानित्यर्थः । **विद्न्;** जानन् । **असौ;** पुरुषः । न तृप्यति; संतोषं न प्राप्नोति । **अथच;** अपिच । **विषादे;** तदलाभदुःखे च । न निपतति । यद्वा निष्पन्नयोगः पुरुषः ब्रह्मव्यतिरिक्तं सर्वं चिदचिद्वस्तु ब्रह्मविभूतित्वेन पश्यन् सर्वत्र तृप्यति । कदाचित् ब्रह्मविभूतितया अपश्यन् खिद्यति । अयं तु प्रक्रान्तयोगतया न तृप्यति, न खिद्यति चेति ॥ ४७ ॥

पुनरप्यनिष्पन्नसमाधितामेवास्याह—**अपिचेति । तुलायन्त्रं** नाम कूपजलाहरणसाधनं तुलारूपं यन्त्रम् । **तद्वृत्तान्तः;** निम्नोन्नतिभजनम् । तद्वत् **क्रमेण** घटितां निम्नोन्नतिं बिभ्रतौ । रजस्युन्नते तमो नीचम्; तमस्युन्नते रजो नीचं भवति । **मूढक्रूरौ** गुणौ; तमोरजोरूपौ । **एकदैवाधरीकृत्य;** सत्त्वगुणेनेति शेषः । **मुदितः;** संतुष्टः अयं मुनिः । **अनघं सत्त्वम्;** शुद्धसत्त्वजन्यत्वात्

तदहं निष्पन्नकल्पमेवास्य समाधिमभिमन्ये । अस्य च,

**स्वफलेन तुलारूढः समाधिर्मुक्तिसाधकः ।**
**न्यूनाधिकसमत्वेषु विकल्पायैव कल्पते ॥ ४९ ॥**

**प्रभाविलासः**

सर्वग्रन्थीनां विप्रमोक्षः" इति धीसंततिद्वारा सत्त्वस्य मोक्षहेतुत्वात् **मुक्तिद्वार**मित्युक्तम् । **अनघम्**; तमोरजोभ्याममिश्रितमित्यर्थः ॥ ४८ ॥

**स्वफलेनेति** । **स्वफलेन** मोक्षेण **तुलारूढः**, अविशिष्ट इत्यर्थः । **समाधिः** न्यूनत्वे अधिकत्वे समत्वे च । भक्तेः प्रपत्त्यपेक्षयाधिक्यम्; दहराद्यपेक्षया समत्वम्; प्रपत्तेर्न्यूनत्वम् । **विकल्पायैव**; न तु समुच्चयाय । अनेन "विकल्पोऽविशिष्टफलत्वात्" इति सूत्रार्थोऽभिप्रेतः । अत्र स्वफलेन तुलारूढ इति पुरुषमोचनरूपबीजनिष्पत्तेर्निर्णीतत्वान्नियताप्तिर्नाम विमर्शसंधेः प्रधानांशः सूचितः । तदुक्तम्—"अपायाभावतः प्राप्तिर्नियताप्तिः सुनिश्चिता" इति । एवं नियताप्तिप्रकर्षो: साधनात्मको विमर्शसंधिर्निरूपितः ॥ ४९ ॥

**प्रभावली**

शुद्धसत्त्वमित्युच्यते । **मुक्तिद्वारम्**; मुक्तिसाधनम् । **मुरमथनविषया** या धीः, तस्याः **संततिरेव सुधानिधिः** चन्द्रः, तस्य **प्रादुर्भावम्** उपक्रमं **भजति** । प्रक्रान्तयोग इत्यर्थः ॥ ४८ ॥

अथ किंचिदूननिष्पन्न एवास्य समाधिरित्याह—**तदहमिति** । **तत्**; यत इतः पूर्वं प्रक्रान्तमात्रः, अतः । इदानीं **निष्पन्नकल्पं** मन्य इत्यर्थः । **अस्य च**; निष्पन्नकल्पसमाधेः । **स्वफलेनेति** । अस्य **मुक्तिसाधकः समाधिः स्वफलेन** मुक्त्या सह **तुलारूढः**, तुलितः सदृश इति यावत् । **स्वफलेन सह न्यूनत्वे अधिकत्वे समत्वे च विकल्पायैव** समर्थो भवति । कदाचित्साध्यस्य न्यूनता । कदाचित्साधनस्य न्यूनता । कदाचित्साध्यस्याधिक्यम् । कदाचित्साधनस्याधिक्यमित्येवं समत्वेऽपि विकल्पाय कल्पते ॥ ४९ ॥

**राजा**—सेनापते, अपावृतार्धमहमिह मुक्तिद्वारमभिमन्ये। अद्य पुनरत्यासन्नमनोरथै[1]रस्माभिरवहितमतिभिरेतदास्थेयम्—

**अविकलबहुमत्या सेवितोऽहं सुमत्या**
**नियतिमनतिलङ्घ्यां निर्ममः सान्त्वयामि।**
**त्वरयितुमिह[2] देवीं त्वन्मते विष्णुभक्तिं**
**गणयितुमपि सिद्धिं गच्छ सेनापते त्वम्॥ ५०॥**

**व्यवसायः**—यदादिशति देवः।

(इति निष्क्रान्तः)

**राजा**—(पुरस्तादवलोक्य) सुमतिनिकेतनमेतत्स्वयंप्रभमासीदामि। (सहर्षबहुमानम्)—

**बलदर्शनमण्डपं श्रुतीनां बहुभिर्भावितवैभवं प्रमाणैः।**
**अवधूतरजस्तमस्कमेतत् सुमतेस्तत्त्वमयं विभाति सौधम्॥ ५१॥**

**प्रभाविलासः**

**अपावृतार्धम्**; अर्धमपावृतमित्यर्थः। **अविकलेति**। **नियतिः**; दैवम्॥ ५०॥

**बलेति**। **बलदर्शनम्**; तात्पर्यलिङ्गादिना बलाबलनिर्णयः। अन्यत्र

**प्रभावली**

**अपावृतार्धम्**; उद्घाटितकवाटार्धम्। अत्यासन्नमनोरथफलैः सावधानमतिभिः अस्माभिः एतत् वक्ष्यमाणमनुष्ठेयम्। स्वस्य च सेनापतेश्चानुष्ठेयं विभज्योपदिशति—**अविकलेति**। **अविकला** संपूर्णा **बहुमतिर्यस्याः**, तया **सुमत्या** सहेत्यर्थः। **निर्ममः सन्** दुर्लङ्घ्यं विधिं **सान्त्वयामि** अनुकूलयामि। त्वदभिप्रेते पुरुषमोचने **देवीं विष्णुभक्तिं त्वरयितुं** त्वरमाणां कर्तुं **सिद्धिमपि गणयितुम्** अणिमादिसिद्धिं प्रार्थयितुं च **त्वं गच्छ**॥ ५०॥

**स्वयंप्रभम्**; स्वयंप्रकाशम्। **सुमतेः** निवेशनं गृहम्; मन इत्यर्थः। **बलेति**। **श्रुतीनाम्**; उपनिषदां **बलस्य** प्राबल्यस्य **दर्शनमण्डपम्**। लोके च

[1] मनोरथलाभैः—ग.     [2] अपि—ग.

(विलोक्य) कासाविह विशुद्धसुधासंदोहसौम्यस्वभावा श्वेतद्वीपदेवतेव संदृश्यते? (किंचिदुपसृत्य) प्रत्यभिजानाम्येनाम् । परिणतिविशेषादसावन्येव भाति ।

इयमखिलपुमर्थप्रार्थनाकल्पवल्ली
सितमतिभिरनन्यैः सेविता सिद्धबृन्दैः ।
द्युतिभिरविरलाभिर्द्योतयन्ती दिगन्तान्
विशति सुमतिसौधं[1] विष्णुभक्तिर्विशुद्धम् ॥ ५२ ॥

**प्रभाविलासः**

सेनानिर्णयः । **प्रमाणैः**; प्रत्यक्षादिभिः, परिमाणैश्च । **रजस्तमसी**; गुणौ । अन्यत्र रजः धूलिः । तमः अन्धकारः । **सत्त्वमयम्**; सत्त्वविकारम् । श्लेषोऽलंकारः ॥ ५१ ॥

**इयमिति । सितमतिभिः**; सत्त्वोत्तरमतिभिः । **सिद्धबृन्दैः**; सन-

**प्रभावली**

**सौधः** सेनानां दर्शनस्थानं भवति । **बहुभिः प्रमाणैः भावितवैभवम्**; "मनसो वशे सर्वमिदं बभूव" "मनसा तु विशुद्धेन" इत्यादिप्रमाणैरनुसंहितवैभवं सत्त्वप्रचुरं मनो मनसैव प्रकाशत इति ॥ ९१ ॥

विष्णुभक्तिं स्थितां दृष्ट्वा दूरात् शङ्कते—**कासाविति** । धवलसुधाधारावत् सौम्यस्वभावा । शुद्धश्वेतत्वात् **श्वेतद्वीपदेवतेत्युत्प्रेक्षा** । उपसृत्य एनां विष्णुभक्तिरिति **प्रत्यभिजानामि** । **परिणामः**; अभिवृद्धिः । **असौ** पूर्वदृष्टापि **अन्येव** स्फुरति । पूर्वं बाला, इदानीं प्रवृद्धत्वात् अन्येव भाति । इयं विष्णुभक्तिरिति प्रत्यभिजानाति—**इयमिति** । इयं पुरस्तात् दृश्यमाना सर्वपुरुषार्थप्रार्थनापूरयित्री शुद्धमतिभिः **अनन्यैः सिद्धबृन्दैः** श्वेतद्वीपवासिभिः सेव्यमाना विष्णुभक्तिः **अविकलाभिः** परिपूर्णाभिः कान्तिभिः **दिगन्तान्** भासयन्ती विशुद्धं **सुमतिसौधं विशति** ॥ ९२ ॥

[1] गेहं—ग.

तदहमप्यत्र प्रविश्य यावत्पुरुषं कृतकृत्यं कृतार्थं च निर्धारयामि, तावदवहितः सहधर्मचारिण्या देव्या सुमत्या सह नैःश्रेयसीं नियतिमास्थाय निवत्स्यामि ।

(इति सविमर्शं निष्क्रान्तः)

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदये समाधिसंभवो नाम नवमोऽङ्कः ।



कादिभिः ॥ ५२ ॥

इत्यात्रेयाहोबिलाचार्यविरचिते संकल्पसूर्योदयव्याख्याने प्रभाविलासाख्याने समाधिसंभवो नाम नवमोऽङ्कः ।



अत्र; सौधे । कृतकृत्यम्; कृतोपायपरिग्रहम् । कृतार्थम्; कृतप्रयोजनं च निश्चिनोमि । निःश्रेयससंबन्धिनीं नियतिं नियममङ्गीकृत्य सौधे निवत्स्यामीति सालोचनं निष्क्रान्तः ।

इति श्रीनृसिंहराजाचार्यकृतसंकल्पसूर्योदयव्याख्यायां प्रभावल्यां समाधिसंभवो नाम नवमोऽङ्कः ।



## दशमोऽङ्कः

(ततः प्रविशति विष्णुभक्तिः)

**विष्णुभक्तिः**—(आलम्बनविशेषाधीनमात्मनो वैभवं निर्वर्ण्य)

**अहं वैकुण्ठदास्यैकलास्यलीलाविनोदिनी ।**
**विश्वकिल्बिषसंहार[1]विभ्रमारभटीनटी ॥ १ ॥**

**प्रभाविलासः**

अथ निर्वहणसंधिः प्रस्तूयते—तत इत्यादिना । निर्वहणसंधिर्नाम मुखाद्यर्थानां बीजवतां विप्रकीर्णानामैकार्थ्ययोजनम् । तदुक्तम्—

"बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥"

इति । स च कार्यफलागमयोः संबन्धादुत्पद्यते । तत्र कार्यं नाम फलनिर्वाहको व्यापारः । फलागमश्च परिपूर्णफलसिद्धिः । तदुक्तम्—"समग्रफलसंपत्तिः फलागम उदाहृतः" इति । अत्र वैकुण्ठदास्येत्यादिपरभक्तिव्यापारेण निःश्रेयसरूपफलावाप्तेर्मुखसंध्यादिष्वारब्धाया निर्वाहात्

**प्रभावली**

अतीताङ्कान्ते सूचिताया विष्णुभक्तेः प्रथमं प्रवेशः । **आलम्बनविशेषः**; भक्तेर्विषयभूतः परमात्मा । तदायत्तमात्मनः सामर्थ्यं विचार्य; अन्यविषयभक्तीनामेतत्सामर्थ्याभावात् । **वैकुण्ठस्य**; श्रीमतो भगवतः । **दास्यं** दासकृत्यम्

[1] संरोध—ग.

किञ्च,

**अम्बा मे पुरुषस्य बुद्धिरनघा तातः स[1] धर्मोत्तरः**
**संतुष्टिः सहजा क्षमा प्रियसखी सद्वृत्तिराज्ञाकरी ।**
**विद्यैव स्वयमस्मि विश्ववृजिनप्रध्वंसनं क्रीडितं**
**साहं प्राणिमि विष्णुभक्तिरचला संतिष्ठते संसृतिः ॥ २ ॥**

अपिच प्रत्यक्षितपरावरतत्त्वैर्महर्षिभिर्भगवतैव च[2] गीतं परमार्थभूतमन्यमप्यर्थमनुकथयामि—

**प्रभाविलासः**

सप्रकारं निर्वहणसंधिर्निरूप्यत इति ज्ञेयम् । **अहमिति । विश्वकिल्बिषसंहार एव विभ्रमः** विलासः, स **एवारभटी** उग्रनृत्तम्, तत्र नटी ॥ १ ॥

**अम्बेति । सः;** पुरुषः । **संसृतिः;** संसारः । **संतिष्ठते;** निवर्तते ॥ २ ॥

**प्रभावली**

**एकमेव** लास्यं ललितकृत्यं नर्तनम् । तया कालक्षेपवती । **विश्वेषां विश्वानि** वा यानि **किल्बिषाणि तत्संहाररूपे विभ्रमे** उद्धतनृत्ते, आरभटीनटी ॥ १ ॥

अस्या अभिजनादिप्रयुक्तमाहात्म्यं कथयन्ती तस्यामधितिष्ठन्त्यां संसारोऽवश्यं नश्यतीत्याह—**अम्बेति** । **पुरुषस्य;** जीवात्मनः । **अनघा;** सती । **बुद्धिः मे** माता । **धर्मोत्तरः;** धर्मभूयिष्ठः । **सः;** पुरुष एव **तातः** । तस्य **संतुष्टिः;** यावल्लब्धेन तोषः । सा भगिनी । तस्य **क्षमा;** अपराधिषु क्षान्तिः । मे **प्रियसखी** । **सद्वृत्तिः;** सदाचाररूपा । दासी किंकरी । या विद्येति भक्तिरिति वेदान्ते उच्यते, सैव **स्वयमस्मि** । विष्णुभक्तिरेव हि अतिशयमापन्ना विद्येत्युच्यते । **विश्वेषां विश्वानि** वा यानि पापानि, तत्संहारो **मे क्रीडितं** विहरणम् । एवं महामहिमा **विष्णुभक्तिरचला** अचञ्चला जीवामि । संसृतिरवश्यं **संतिष्ठते;** समाप्ता भवति, नश्यतीत्यर्थः ॥ २ ॥

सर्वज्ञैर्मुनिभिर्भवता च निश्चितं परमार्थं रहस्यं कथयामीत्यर्थः । **प्रत्यक्षि-**

[1] स्वधर्मोत्तरः—क [2] भगवता च—ख.

**निरुध्य तरसा मरुत्करणमण्डलीं कुण्डलीं**
**विचिन्त्य विगणय्य वा धमनिधातुमर्मादिकम् ।**
**किमत्र निगमत्रयस्थितिमतापि लालभ्यते[1]**
**मयि स्थितिरवस्थिता यदि किमुच्यते मुच्यते ॥ ३ ॥**

### प्रभाविलासः

**निरुध्येति** । **मरुताम्**; प्राणादीनाम् । **करणानाम्**; इन्द्रियाणाम् । **मण्डलीम्**; समूहम् । **कुण्डलीम्**; सुषुम्नानाड्याधारम् । **धमनीनाम्**; नाडीनाम् । **धातूनाम्**; त्वगादीनाम् । **मर्मादिकं विगणय्य**; "द्वासप्ततिसहस्रं नाड्यः" इत्यादिनेत्यर्थः । **निगमत्रयस्थितिमता** । त्रैविद्येन । **किं फलं लालभ्यते**; न किमपीत्यर्थः । योगाभ्यासवताऽपि त्रैविद्यनिष्ठेनापि भगवद्भक्तिरहितेनायास एव फलं लभ्यते, नान्यदिति भावः । तदुक्तम्—

"श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेश इहावशिष्यते नान्यद्यथा स्थूलतुषावघातिनाम् ॥"

इति । एवं स्वव्यतिरेके नैष्फल्यमुक्त्वा स्वान्वये फलाविनाभावमाह— **मयीति** । अत्र निर्वहणसंधेश्चतुर्दशाङ्गानि । तदुक्तम्—

### प्रभावली

**तेति** । **अनुकथयामि**; अनुस्मृत्य कथयामि । रहस्यार्थमाह—**निरुध्येति** । **मरुतां** प्राणवायूनां **करणानामिन्द्रियाणां** च **मण्डलं** समूहम् । **तरसा**; बलेन निगृह्य । **कुण्डलीम्**; कुण्डलाख्यनाडीम् । **विचिन्त्य**; विशेषतो ध्यात्वा । **धमनिधातुमर्मादिकम्**; धमनयः सिराः, धातवस्त्वगादयः, मर्माणि प्राणस्थानानि । आदिशब्देन रोमादिर्गृह्यते । **विगणय्य**; विशेषतः संख्याय । वाशब्दश्चार्थे । **अत्र**; एवं प्राणादिनिरोधे सत्यपि । **निगमत्रयस्थितिमतापि**; वेदत्रयोक्तानुष्ठानवतापि पुरुषेण । **किं लालभ्यते**; किं प्रयोजनं भृशमवाप्यते । विष्णुभक्त्यभावे न

[1] फलं लभ्यते—ग.

यश्चासौ निवृत्तिधर्मकाष्ठारूपो नैःश्रेयसो योग[1] उच्यते, सोऽपि मदनुवेधादेव[2] महतीं सिद्धिमापादयति । अद्य च,

**मुमुक्षुत्वे सिद्धे मुषितमतिमोहस्य मुरभि-**
**त्समाधिः संरोहन्नुपहरति सर्वाघविरतिम् ।**
**परस्तादास्थेयं यदिह विदुषानिष्टजनुषा**
**फलार्थं तत्किं वा फलमिति वितर्कः श्रमफलः ॥ ४ ॥**

**प्रभाविलासः**

"संधिर्निरोधो ग्रथनं निर्णयः परिभाषणम् ।
प्रसादानन्दसमयाः कृतिर्भाषोपगूहनम् ।
पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ॥"

इति । तेषु संधिर्नामाङ्गमुच्यत इति पुरुषमोचनरूपबीजोपगमनोक्त्या निरूपितम्, "संधिर्बीजोपगमनम्" इति लक्षणात् ॥ ३ ॥

उक्तार्थं विशदयति—**यश्चासाविति** । **मुमुक्षुत्व इति** । **संरोहन्**; अङ्कुरन् । **मतिमोहः**; बुद्धिविपर्यासः । **उपहरति**; कुरुते । **अनिष्ट-**

**प्रभावली**

**किमपीत्यर्थः** । **मयि**; विष्णुभक्त्याम । **स्थितिः**; निष्ठा । **यद्यवस्थिता**; निश्चला चेत् । **स मुच्यत इति किमुच्यते**; मुक्तो भवतीति वक्तव्यं किम् । मुच्यत एवेत्यर्थः । विष्णुभक्त्यभावे देहेन्द्रियादिनिरोधवैदिकधर्मानुष्ठानादि सर्वं व्यर्थमित्यर्थः ॥ ३ ॥

**निवृत्तिधर्माणां** सीमाभूमिः । **नैःश्रेयसो योगः**; मोक्षोपाय उपासनादिध्यानविशेषः । **मदनुवेधात्**; मत्स्पर्शादेव । एवकारेण नान्यथेत्यर्थः सूच्यते । मोक्षरूपां **सिद्धिम्** । अन्यथा अणिमादिसिद्धिमात्रम् । मुरभिद्विषयः समाधिरुपक्रान्तमात्र एव सर्वपापमोक्षं जनयति । यत्समाधिरनुष्ठीयते, तत् फलस्य साधनं, किं वा फलरूपमिति विचारो व्यर्थ इत्याह—**मुमुक्षुत्व इति** । **मुषितमतिमोहस्य**; नष्टाज्ञानस्य पुंसः । विष्णुविषयसमाधिः संरोहन् उपक्रान्तमात्र एव

[1] इत्युच्यते—क.   [2] मदनुबोधादेव—क.

(विचिन्त्य) कीदृशी पुनरिदानीं किंकर्तव्यता ? इयं तावत्—

**अघपरिणमितैरमित्रभेदैः करणकलेबरपुत्रदारिकाद्यैः ।**
**ग्रहिल इह मयैव मोचनीयो मुरभिदनुग्रहलीलया मुमुक्षुः ॥५॥**

प्रभाविलासः

**जनुषा**; पुनर्भवभीतेन । **परस्तात्**; उपरिष्टात । **आस्थेयं यदस्ति तत् फलार्थं** फलसाधनं **फलं वेति वितर्कः श्रमफलः** । सर्वाघविरतेरेव पुरुषार्थतया अनन्तरभाविभगवदनुभवादिकेवलफलसाधनताबुद्धिर्न कार्येत्यर्थः । अत्र वितर्केण बीजरूपकार्यान्वेषणप्रतीतेर्निर्वहणसंधेर्द्वितीयमङ्गं निरोधाख्यं दर्शितम्, "कार्यान्वेषो निरोधः स्यात्" इति लक्षणात् ॥ ४ ॥

**अघेति** । करणकलेबरादिव्यामोहस्यात्मपरिपन्थित्वात् अमित्रभेदैरित्युक्तम् । **आद्यपदेन** श्वशुरमातुलस्यालादिसंग्रहः । अत्र,

"पुत्रदाराप्तबन्धूनां संगमः पान्थसंगमः ।
अनुदेहं वियन्त्येते स्वप्नो निद्रागमे यथा ॥
एवं परिमृशन् योगी गृहेष्वतिथिवद्विशन् ।
न गृहैरनुबध्येत निर्ममो निरहंकृतिः ॥

प्रभावली

सर्वपापविमोचनम् **उपहरति** जनयति । **अनिष्टं** जन्मान्तरं यस्य, तेन **विदुषा** । **जनुः**; जन्म । **अनिष्टस्य** पापस्य **जनुः** उत्पत्तिः यस्माद्वा तेन । उत्तरपूर्वाघयोरश्लेषविनाशौ जानता । **इह**; जगति । **परस्तात्**; समाध्युपक्रमात् **पश्चात्** । यदास्थेयमनुष्ठेयम् उपासनम् । **तत्फलार्थं वा**; अनिष्टजनुषानुष्ठीयमानत्वात् फलप्रतिबन्धकानिष्टनिरसनद्वारेण फलस्य साधनं वा । किं वा उत्तरपूर्वाघयोरश्लेषविनाशौ जानतानुष्ठीयमानत्वात **फलं वा** इति योऽयं **वितर्कः** विचारः पुंसां भवति, स **श्रमफल** एव; व्यर्थ इत्यर्थः । वितर्कफलस्य निर्णयस्य पक्षद्वयहेतोः समबलत्वेन दुःशकत्वात् । अनेन विष्णुभक्तेरनवधिकातिशयप्रीतिरूपतया मुक्तिसाम्यत्वप्रतिपादनादादरणीयतोक्तेति भावः ॥ ४ ॥

**किंकर्तव्यता**; कर्तव्यांश इति यावत् । **इयं तावत्**; **प्रथममियमेव** । इयमेवेत्युक्तं स्पष्टयति—**अघेति** । पापसंजातैः करणकलेबराद्यैः शत्रुविशेषैः,

अत्र चैतावदभिनिष्पन्नम्—

**भवरोगैकभिषजा विवेकेन विपश्चिता[1] ।**
**शमं दोषगणो नीतः शारीर इव मानसः ॥ ६ ॥**

अयं च क्षेत्रज्ञ इदानीमपुनर्भवयोग्यामवस्थामारूढः ।
तथाहि—

**कामादिकेष्वपगतेषु[2] कथावशेषं**
**संप्रत्यसौ शमदमादिगुणोपपन्नः ।**
**मैत्रीदयादिपरिकर्मविभूषितेन**
**श्रद्धाधनेन[3] मनसा लभते समाधिम् ॥ ७ ॥**

**प्रभाविलासः**

अहो मे पितरौ वृद्धौ भार्या बालात्मजात्मजाः ।
अनाथा मामृते दीनाः कथं जीवन्ति दुःखिताः ।
एवं गृही दयोत्क्षिप्तहृदयो मूढधीरयम् ।
अतृप्तस्ताननुध्यायन्मृतोऽन्धं विशते तमः ॥"

इत्यादिकमनुसंधेयम् ॥ ५ ॥

**भवेति** । **शारीरः**; शिरोरोगादिः । **मानसः**; कामादिः ॥ ६ ॥

**कामादिकेष्विति** । **शमः**; अन्तरिन्द्रियनिग्रहः । **दमः**; बाह्येन्द्रिय-

**प्रभावली**

**करणानि**; इन्द्रियाणि । **दारिकाः**; पुत्र्यः । आद्यशब्देन दारादिग्रहणम् । **ग्रहिलः**; दृढगृहीतः । **मुरभिदनुग्रहलीलया**; विष्णुभक्त्या मुरभिदनुग्रहो भवति । अतोऽनुग्रहो विष्णुभक्तेः लीला ॥ ५ ॥

अत्र मुमुक्षोर्मोक्षणेऽभिनिष्पन्नांशमाह—**भवेति** । **मानसो दोषगणः**; कामक्रोधादिः । शारीरदोषगण इव व्याध्यादिरिव **शमं नीतः** ॥ ६ ॥

**इदानीम्**; मानसदोषगणे नष्टे । मोक्षयोग्यामवस्थामारूढः । **कामादि-**

[1] विपश्चितः—छ. [2] केष्वधिगतेषु—ख. [3] घनेन—ग.

अपि चास्य परःशतप्रत्यूहशालिन्यपि पश्चिमे युगे परमपुरुषचरणयुगलपातिव्रतीप्रभावेन प्रथमयुग इव परंपरितवृद्धिरिव संदृश्यते समाधिसिद्धिः । तथाहि—

### प्रभाविलासः

निग्रहः । आदिपदेनोपरतितितिक्षादिकमुच्यते । **दया**; स्वार्थनिरपेक्षत्वे सति परदुःखनिराचिकीर्षा । आदिपदेन निःस्पृहत्वादि । एवं शान्तरसविभावा उक्ताः । तदुक्तं संगीतरत्नाकरे—

"संसारभीरुता दोषदर्शनं विषयेषु च ।
योगिसङ्गो मुनीनां च कृपाशमदमक्षमाः ।
अध्यात्मविषया गोष्ठी तापसास्तापसाश्रयाः ।
भूरिनिर्झरझांकारिवारितीर्थानि तीर्थकाः ।
विष्णुभक्तिप्रदा विद्या विभावा यत्र संगताः ॥"

इति । एकादशस्कन्धे च—

"दया समस्तभूतेषु तितिक्षानभिमानिता ।
सत्त्वं शौचमनायासो मङ्गलं प्रियवादिता ॥"

इत्यादि ॥ ७ ॥

### प्रभावली

**केष्विति** । **कथावशेषम्**; कथैवावशेषो यस्मिंस्तद्यथा तथा । **मैत्री** सर्वभूतविषया **दया च**, तदादयः, ता एव **परिकर्म** अलंकारः । **श्रद्धाधनेन**; श्रद्धा नाम ध्येयविषयादरः । तदेव धनं प्रधानसाधनं यस्य । यद्वा **श्रद्धायनेनेति** पाठः । **श्रद्धा** अयनं वासो यस्य । **समाधिम्**; समाधियोग्यतां **लभते** ॥ ७ ॥

अथ कलियुगत्वात् समाधेर्बहुविघ्नानाशङ्कय भगवदैकान्त्यप्रभावात् सर्वे विघ्नाः प्रतिहता भवन्तीत्याह—**अपिचेति** । **पातिव्रती**; ऐकान्त्यम् । **प्रथमयुगे**; कृतयुग इव । **परंपरिता** संजातपरंपरा **वृद्धिर्यस्याः** सा । उक्तमर्थं प्रतिपादयति—**तथाहीति** । अत्र पुरुषस्य प्रतिपच्चन्द्रसाम्यमक्लिष्टं प्रतिपद्यते ।

**कलया विहितोदयः कयाचित्प्रतिपच्चन्द्र इवैष विश्ववन्द्यः ।**
**उपयाति दिने दिने समृद्धिं पुरुषो विष्णुपदाश्रितः सितात्मा ॥ ८॥**

अपिच,[1]

**स्वतः सिद्धस्वच्छस्थिरमधुरचिन्तासुरसरि-**
**त्प्रवाहोपश्लिष्टात्प्रणिधिमुखभागादवतरन् ।**
**चिदानन्दोदन्वत्यनघगुणरत्नौघभरिते**
**[2]निमज्जत्यन्यस्मिन्नयमपुनरुन्मज्जनमिह ॥ ९ ॥**

**प्रभाविलासः**

**कलयेति । कलया ;** विद्यया, षोडशांशेन च । **विहितोदयः ;** कृताभ्युदयः, अन्यत्र प्राप्तवृद्धिः । **विश्ववन्द्यः ;** "सर्वेऽस्मै देवा बलिमावहन्ति" इति श्रुतेः । अन्यत्र सर्वजनवन्द्यः । **विष्णुपदम् ;** हरिचरणम्, गगनं च । **सितात्मा ;** परिशुद्धस्वभावः, पाण्डररूपश्च ॥ ८ ॥

**स्वत इति । चिन्ता ;** स्मृतिसंततिः । **मुखभागः ;** अवतरणदेश

**प्रभावली**

**कलया** ब्रह्मविद्यया । **कयाचित् विहितोदयः ;** प्राप्ताभ्युदयः । अन्यत्र एककलया सहोदितः । प्रतिपच्चन्द्रोऽपि **विश्ववन्द्यो** भवति । ब्रह्मविद्यामधिगतोऽपि तथा । **विष्णुपदम् ;** हरिचरणम् । **अन्यत्र** आकाशः । सितः शुद्ध आत्मा मनो यस्य सः । अन्यत्र सितः शुक्लवर्णः ॥ ८ ॥

**स्वतः शुद्धेति । स्वतः ;** स्वस्मादेव । **शुद्धा ; स्वच्छा ;** मलप्रतिभटा । **स्थिरा ;** संततिरूपत्वात् । **मधुरा ;** भोग्या । **चिन्ता ;** ध्रुवानुस्मृतिः, **सैव सुरसरित् ।** सुरसरिदप्येतैर्विशेषणैर्विशिष्टा । तस्याः **प्रवाहेण** संपृक्तात् । **प्रणिधिमुखभागात् ;** समाध्यारम्भसमयात् । अन्यत्र प्रणिधिशब्देन नदीप्रवेशस्थानमुच्यते । **अवतरन्** अयं पुरुषः । **अनघा** हेयगुणासहचरिता **गुणाः** कल्याणगुणा एव **रत्नानि,** तैः ; अन्यत्र अनघगुणवद्भिः रत्नौघैः **भरिते पूर्णे**

[1] स च—ग. [2] निमज्जत्येतस्मिन् —क.

संप्रत्येतस्य संभृतसमाधेरुत्तरपूर्वाघाश्लेषविनाशकरणाय विवेकव्यवसायादिभिरुपचिक्रंसे ।[1]

(नेपथ्ये)

लुलितभुवनपद्मां लुम्पतो वासतेयी-
मुदयशिखरिमध्यादुज्जिहानस्य भानोः ।
अपतमसि पदेऽस्मिन् वैष्णवे दृश्यमारा-
दिह भवति पताकास्थानकं धाम पूर्वम् ॥ १० ॥

**प्रभाविलासः**

इत्यर्थः । **चिदानन्दोदन्वति**; ज्ञानानन्दस्वरूपे ब्रह्मणि । अपरिच्छिन्नत्वकथनार्थमुदन्वन्निरूपणम् । अत्र निमज्जतीति पूर्वोक्तस्य कार्यस्य स्थापनात् ग्रथनं नाम निर्वहणसंधेरङ्गमुक्तम्, "ग्रथनं तन्निबन्धनम्" इति लक्षणात् ॥ ९ ॥

**उपचिक्रंसे**; उपक्रमितुमिच्छामि । **लुलितेति** । **वासतेयीम्**; रात्रिसंबन्धिनीं तमःसंहतिम् । "वसती रात्रिवेश्मनोः" इत्यपरः । **पूर्वम्**;

**प्रभावली**

**चिदानन्दोदन्वति** ज्ञानानन्दस्वरूपे ब्रह्मणि समुद्रे । **अन्यत्र अपुनरुन्मज्जनं** यथा तथा; अन्यस्मिन् संसारसमुद्रे पुनरुन्मज्जनं पुनर्जन्म यथा न भवति तथा **निमज्जति** । यथा लवणसमुद्रे निमज्जन् कश्चित् प्रवाहोपश्लिष्टात् प्रणिधिमुखभागादवतीर्य पुनर्लवणसमुद्रे यथा निमज्जनं न भवति तथा क्षीरसागरे निमज्जति, तद्वत् ॥ ९ ॥

संप्रति स्वकृत्यं निर्धारयति—**संप्रतीति** । **एतस्य**; पुरुषस्य । **उपचिकीर्षे**; उपकर्तुमिच्छामि । अथ विवेकवैतालिकः सूर्योदयं प्रस्तौति—**लुलितेति** । **लुलितानि भुवनपद्मानि** यया ताम् । **वासतेयीम्**; रात्रिम् । यद्वा "वसती रात्रिवेश्मनोः" इति नैघण्टुकपाठात् तत्संबन्धिनीं तमःसंहतिम् । **लुम्पतः**

[1] उपचिकीर्षे इति प्रभावलीपाठः

**विष्णुभक्तिः**—(कर्णं दत्त्वा) सुप्रभातं प्रख्यापयत्यसौ सुमतिपतेर्विवेकस्य वैतालिकः । अपिच निमित्तान्यपि नैःश्रेयसीं सिद्धिं सूचयन्ति । तथाहि—

**त्रिभुवनमिदं शान्तक्षोभं समाधिरनाकुलः**
**प्रसृमरसुधाधाराकारा प्रसीदति शेमुषी ।**
**स्फुरति च मुहुर्दृष्टिः सव्या तदप्युपरि स्फुटं**
**तदिह महतीं सिद्धिं मन्ये झटित्युपतस्थुषीम् ॥ ११ ॥**

**प्रभाविलासः**

प्रथमम् । **धाम**; तेजः । **पताकास्थानकम्**; वैजयन्तीस्थानं भवति । पताकेव दृश्यत इत्यर्थः ॥ १० ॥

**त्रिभुवनमिति** । **प्रसीदति**; विशदतमा भवति । **सव्या**; वामा । "सव्यं दक्षिणवामयोः" इत्यमरः । **उपरि**; उपरिष्टात् । **स्फुरति**; स्पन्दते । इदं शुभनिमित्तम् । "नेत्रस्योर्ध्वं हरति सकलं मानसं दुःखजातं वामे चैतत्फलमविकलं दक्षिणे वैपरीत्यम्" इत्युक्तत्वात् । एवमनुभूतार्थकथनात् निर्णयो नाम निर्वहणसंधेरङ्गमुक्तम्, "अनुभूतार्थकथनं निर्णयः परिकीर्तितः" इति लक्षणात् ॥ ११ ॥

**प्रभावली**

**उज्जिहानस्य** उद्गच्छतः **भानोः** पूर्वं **धाम** प्राथमिकं तेजः **वैष्णवे पदे** गगने दूरात् दृश्यते । **इह पदे पताकास्थानकं भवति**; ध्वजपटवद्भाति ॥ १० ॥

**त्रिभुवनमिति** । **शान्तक्षोभम्**; शान्तोपद्रवम् । **अनाकुलः**; उपद्रवरहितः । पुरुषस्य **शेमुषी**; बुद्धिः । प्रसरणशीला या सुधाधारा, तस्या आकार इवाकारो यस्याः सा । **सव्या**; वामा । **तदपि**; स्फुरणम् । **उपरि**; भागे । **झटित्युपतस्थुषीम्**; शीघ्रमागच्छन्तीम् ॥ ११ ॥

तदयमवसरः समीहितसमर्थनस्य । ततश्च,

**वैकुण्ठकृपया देव्या मदभीष्टे व्यवस्थितम् ।**
**[1]प्राध्वं संकल्पमार्ताण्डं प्रवर्तयितुमुत्सहे ॥ १२ ॥**

न च प्रभूतसंरम्भयापि मया भगवत्कृपामनालम्ब्य प्रारिप्सितपरिसमाप्तिः सुप्रापा । तथाहि—

**शरणागतरक्षणैकदीक्षः समये तत्परिपन्थिनो निरुन्धन् ।**
**प्रभुरायतते परः कृपायां सचिवास्तस्य च सर्व एव देवाः ॥१३॥**

अतस्तामेव तावदुपतिष्ठे । अद्य च प्रत्यक्षितेव मे भाति पद्मापतेरनुकम्पा (साञ्जलिबन्धम्)—

### प्रभाविलासः

**वैकुण्ठेति** । **प्राध्वम्**; अनुकूलम् ॥ १२ ॥

**शरणेति** । **आयतते**; अधीनो भवति । **तस्य**; कृपावतः । **सचिवाः**; सहायाः ॥ १३ ॥

### प्रभावली

**समीहितसमर्थनम्**; संकल्पमार्ताण्डप्रवर्तनम् । **वैकुण्ठेति** । **देव्या**; अतिशयेन दीप्यमानया । भगवत्कृपया नियोजयित्र्या भगवदभिमतकार्ये **व्यवस्थितं** नियमेन स्थितम् **प्राध्वम्** अनुकूलं भगवतः संकल्पसूर्यं पुरुषविमोचने **प्रवर्तयितुं** शक्नोति ॥ १२ ॥

भगवत्कृपावष्टम्भं विना समर्थयापि मया किमपि कर्तुं न शक्यत इत्याह—**न चेति** । **प्रभूतसंरम्भयापि**; भृशोद्योगयापि । **अनालम्ब्य**; अनाश्रित्य । चिकीर्षितकार्यसमापनं न सुप्रापम् । **शरणेति** । **समये**; उचितावसरे । **तत्परिपन्थिनः**; रक्षणविरोधिनः । **निरस्यन्**; सर्वविरोधिनिवर्तकः । सर्वेश्वरोऽपि **परं** केवलं **कृपायामायतते**; कृपापरतन्त्रो भवति । कृपापरतन्त्रस्य **तस्य सर्वे देवा** ब्रह्मरुद्रादयः **सचिवाः**; भगवदभिमतमनुतिष्ठन्तीत्यर्थः ॥ १३ ॥

**तामेव**; तत्कृपामेव । तस्यां प्रसन्नायां भगवान् प्रसन्नो भवतीति भावः । **उपतिष्ठे**; स्तौमि । भगवतोऽनुकम्पा भावनाविशेषेण प्रत्यक्षदृष्टेव भातीत्याह—

[1] प्रायः—ग.

त्वयि बहुमतिहीनः श्रीनिवासानुकम्पे
जगति गतिमिहान्यां देवि संमन्यते यः ।
स खलु विबुधसिन्धौ संनिकर्षे वहन्त्यां
शमयति मृगतृष्णावीचिकाभिः पिपासाम् ॥ १४ ॥

अपिच,

त्वद्दृष्ट्या सकृदीक्षिता दिविषदः स्वं स्वं पदं भुञ्जते
भोगानत्र च भूभुजामभिमतान् पुष्णासि तृष्णाधिकम् ।
किंचोदञ्चदनुग्रहा कृपणतामालक्ष्य वैलक्ष्यतो
नैराश्यप्रमुखानि सौति भवती निर्वाणपर्वाण्यपि[1] ॥ १५ ॥

**प्रभाविलासः**

त्वयीति । **अन्यां गतिम्**; उपायम् ॥ १४ ॥

त्वदिति । **दिविषदः**; ब्रह्मेन्द्रादयः । **भूभुजाम्**; मन्वादीनाम् । **कृपणताम्**; दैन्यम । **वैलक्ष्यतः**; संसारवैमुख्येन । **नैराश्यम्**; वैराग्यम् ।

**प्रभावली**

प्रत्यक्षितेवेति । त्वयीति । बहुमानबुद्धिरहितः । **अन्यां गतिम्**; तद्व्यतिरिक्तोपायान्तरम् । यः संमन्यते, स विबुधसिन्धौ संनिकर्षे प्रवहन्त्यां सत्यामपि **मृगतृष्णावीचिकाभिः** मरीचिकातरङ्गैः पानेच्छां शमयति । अत्यन्तमूढ इति भावः । तदाहुः; "वासुदेवे" इत्यादि ॥ १४ ॥

फलान्तराशया समाश्रितानामपि क्रमेण त्वमेव वैराग्यादिमोक्षपर्वाण्यपि जनयसीत्यभिप्रायेणाह—**अपिचेति** । भो कृपे **त्वद्दृष्ट्या**; त्वद्विशिष्टया भगवद्दृष्ट्येत्यर्थः । **दिविषदः**; ब्रह्मादयः । स्वं राज्यमनुभवन्ति । **अत्र**; इह लोके च ।

[1] मुद्रितपुस्तकेषु पञ्चदशपद्यानन्तरमधो निर्दिष्टाः पङ्क्तयो दृश्यन्ते—

अद्य पुनर्मातेव स्तनंधयानामस्माकमभिरक्षणे पक्षपातिनी भवती ।
फलवितरणदक्षं पक्षपातानभिज्ञं प्रगुणमनुविधेयं प्राप्य पद्मासहायम् ।
महति गुणसमाजे मानपूर्वं दये त्वं प्रतिवदसि यथार्हं पाप्मनां मामकानाम् ॥

(पुरस्तादवलोक्य सहर्षम्)

अयमसाविह विवेकमहाराजागारपूर्वभागे दनुजमथनदया-नियुक्तो नृत्तोद्यत इवावतिष्ठते निखिलनिगमनैगमिकविद्यैकराशि-र्विहंगराजः । प्रसीदति चासौ मे पन्नगरिपुः[1] । ततश्च,

आनेतुमात्मरभसेन समीहमानो
रक्षोन्मुखं नतगृहेषु[2] रमासहायम् ।
प्रायः प्रभोस्तदपृथक्स्थितिवृत्तिशक्ति[3]
संकल्पमप्युपहरिष्यति तद्रथोऽसौ ॥ १६ ॥

**प्रभाविलासः**

अत्र मिथो भाषणात् निर्वहणसंधेः परिभाषाख्यमङ्गमुक्तम्, "परिभाषा मिथो जल्पः" इति लक्षणात् ॥ १५ ॥

**निगमाः**; वेदाः । **नगमिकाः**; वेदान्ताः । **आनेतुमिति** । **आत्मरभसेन**; स्ववेगेन । **समीहमानः**; चेष्टयन् । **नतगृहेषु**; शरणा-

**प्रभावली**

**भूभुजां** तृष्णया अधिकं यथा तथा **भोगान्**; अत्रालभ्यानिति भावः । भोगान् पुष्णासि । तेषां फलान्तराभिलाषिणां **कृपणतां** दुःखितां वीक्ष्य **वैलक्ष्यतः**; मामाश्रित्याप्येते दुःखमेवोपभुञ्जत इति लज्जया उद्गतानुग्रहा सती । तेषां **क्रमेण नैराश्यं** प्राकृतविषये, तत्प्रभृतीनि । प्रमुखशब्देन भगवदाभिमुख्यग्रहः । सर्वाणि मोक्षसाधनान्यप्युत्पादयसि मातेवेति भावः ॥ १९ ॥

**विवेकागारम्**; मनोमण्डपम्; तत्पूर्वभागे । तत्रापि भगवतः संनिधानात् भगवतः पूर्वभाग एव वैनतेयस्यावस्थानात् पूर्वभाग इत्युक्तम् । **नियुक्तः** प्रेरितः । **नृत्तोद्यत इव**; आलीढाख्यस्थानविशेषात् । **ततश्चेति**; प्रसन्नत्वा-दित्यर्थः । **आनेतुमिति** । रमासहायमाश्रितसमीपमानेतुं समर्थोऽयं तत्संकल्पसूर्य-मप्यानेतुं शक्नोतीत्याह—आनेतुमिति । **आत्मवेगेन रक्षोन्मुखं रमासहायम्**

[1] नागरिपुः—क. [2] नतजनेषु—ग. [3] शक्तिः—क.

तदेनमभिष्टौमि—

नमः पन्नगनद्धाय वैकुण्ठवशवर्तिने ।
श्रुतिसिन्धुसुधोत्पादमन्दराय गरुत्मते ॥ १७ ॥

अपिच,

क्षुण्णक्षोणीधराणि क्षुभितचतुरकूपारतिम्यद्गरुन्ति
त्रुट्यत्तारासराणि स्थपुटितविबुधस्थानकानि क्षिपेयुः ।
पातालब्रह्मसौधावधिविहितमुधावर्तनान्यस्मदार्तिं
ब्रह्माण्डस्यान्तराले बृहति खगपतेरर्भकक्रीडितानि ॥ १८ ॥

प्रभाविलासः

गतगृहेषु । **तदपृथक्स्थिता**; तेन विष्णुना अपृथक्स्थिता अविनाभूता वृत्तिर्यस्याः सा, तथोक्ता शक्तिर्यस्य तम् । **उपहरिष्यति**; आनेष्यति ॥ १६ ॥

**नम इति । पन्नगनद्धाय**; सर्पभूषणाय ॥ १७ ॥

**क्षुण्णेति** । क्षुभितेषु चतुरकूपारेषु चतुःसमुद्रेषु तिम्यन्तः क्लिद्यन्तः गरुतः येषां तानि । **स्थपुटितानि**; विषमस्थितानि **विबुधस्थानकानि**

**प्रभावली**

**आश्रितगृहेष्वानेतुं समीहमानोऽयं तत्संकल्पमप्युपहरिष्यति** । कीदृशं संकल्पम् ? तदपृथक्स्थितिवृत्तिशक्तिम्; तस्मात् अपृथग्भूता स्थितिर्ययोस्ते वृत्तिशक्ती यस्य तम् । प्रायः; नूनं, निश्चितमित्यर्थः ॥ १६ ॥

**अभिष्टौमि**; अभितः सर्वतः स्तौमि । **पन्नगनद्धाय**; भूषणभुजगैर्बद्धाय । मन्दरस्य वासुकिना बन्धः । **श्रुतिसिन्धौ सुधोत्पादे**; अमृतवत्सारार्थस्योत्पादने । **मन्दराय**; वेदजन्यसारभूतज्ञानोत्पादकायेत्यर्थः । तस्मै नमः ॥ १७ ॥

एतस्य बालक्रीडनाद्यनुसंधत्ते—**क्षुण्णेति** । **क्षुण्णाः** चूर्णीकृताः पर्वताः यैस्तानि । **क्षुभितैः** चतुःसमुद्रैः **तिम्यन्तः** आर्द्रीभवन्तः **गरुतः** पत्राणि यैः ।

दण्डकेन चैनमण्डजनाथमनुनाथेय—

गरुडमखिलवेदनीडाधिरूढं द्विषत्पीडनोत्कण्ठिताकुण्ठवैकुण्ठ-पीठीकृतस्कन्धमीडे स्वनीडागतिप्रीतरुद्रासुकीर्तिस्तनाभोगगाढोप-गूढस्फुरत्कण्टकव्रातवेधव्यथावेपमानद्विजिह्वाधिपाकल्पविष्फार्यमाण-

प्रभाविलासः

येषां तानि । **ब्रह्मसौधः** ; सत्यलोकः । **अर्भकक्रीडितानि अस्मदार्तिं क्षिपे-युरिति** संबन्धः ॥ १८ ॥

**अनुनाथेय** ; प्रार्थयेय । **गरुडमित्यादि** । **नीडम्** ; कुलायः । **द्विषतां पीडने उत्कण्ठितस्य** ; उत्साहवतः । आरूढस्य **वैकुण्ठस्य पीठीकृतः स्कन्धः** अंसः यस्य तम् । **स्वनीडागत्या** स्वकुलायागमनेन **प्रीतयोः रुद्रासुकीर्त्योः** तदाख्यभार्ययोः **स्तनाभोगयोः** स्तनविस्तारयोः गाढोप-गूढेन गाढालिङ्गनेन स्फुरता **कण्टकव्रातेन** पुलकोद्गमसमूहेन **वेधेन** जातया **व्यथया वेपमानानां द्विजिह्वाधिपाकल्पानां** सर्पश्रेष्ठभूषणानां **विष्फार्य-**

प्रभावली

**त्रुट्यन्त्यः** तारामाला यैस्तैः । **स्थपुटितानि** विषमितानि उद्घाटितानि **विबुधानां स्थानकानि** यैः । क्रीडितापेक्षया अल्पत्वात् कप्रत्ययः । पातालमधस्तात् उपरिष्टात् ब्रह्मलोकसौधं च यथा अवधिः स्यात्, तथा विहितव्यर्थगतागतानि । **अस्मदार्तिं क्षिपेयुः** ॥ १८ ॥

**दण्डकेन** ; गरुडदण्डकेन । दण्डकं नाम प्रबन्धविशेषः । **अण्डजानां नाथं** राजानम् । **अनुनाथेय** ; अनु क्रमेण अभीष्टानि प्रार्थयेय । **गरुडमि-त्यादि** । अखिलवेदा एव नीडं कुलायः, तदधि**रूढम्** ; तत्प्रतिपाद्यमित्यर्थः । **द्विषतां** पीडने उत्कण्ठितश्चासौ अकुण्ठवैकुण्ठश्च ; तेन **पीठीकृतस्कन्धम् ईडे** स्तौमि । **स्वनीडम्** ; स्वकुलायसमीपम् । तत्र आगत्या गरुत्मदागमनेन **प्रीतयोः रुद्रासुकीर्त्योः** सपत्न्योः **स्तनाभोगस्य** स्तनवैपुल्यस्य **गाढालिङ्गनेन स्फुरतामुद्भवतां कण्टकानां** पुलकानां **व्रातेन** यो **वेधः**, तद्व्यथया **वेपमानो** यो **द्विजिह्वाधिपः**, स एव **आकल्पः** भूषणं, तस्य **विष्फार्यमाणायाः** विकास्य-

स्फटावाटिकारत्नरोचिश्छटाराजिनीराजितं कान्तिकल्लोलिनीराजितम् ।

जय गरुड सुपर्ण दर्वीकराहार देवाधिपाहारहारिन् दिवौकस्पतिक्षिप्तदम्भोलिधाराकिणाकल्प कल्पान्तवातूलकल्पोदयानल्पवीरायितोद्यच्चमत्कार दैत्यारिजैत्रध्वजारोहनिर्धारितोत्कर्ष संकर्षणात्मन् गरुत्मन्[1] मरुत्पञ्चकाधीशसत्यादिमूर्ते न कश्चित्समस्ते नमस्ते पुनस्ते नमः ।

**प्रभाविलासः**

**माणानां** विस्तारमीयुषीणां **स्फटानां** फणानां **वाटिकासु** पङ्क्तिषु **रत्नरोचिषां छटाराजिभिः** अविच्छिन्नपङ्क्तिभिः नीराजितं संजातनीराजनम् । कान्तिरेव कल्लोलिनी नदी, तया राजितम् । **जयेति । देवाधिपाहारः** ; सुधा । **दिवौकस्पतिना** इन्द्रेण **क्षिप्तस्य दम्भोलेः** वज्रस्य **धारया** जाताः **किणा** एव **आकल्पः** यस्य सः । **कल्पान्तवातूलेन** प्रलयवायुना **सदृशोदयेन अनल्पेन वीरायितेन उद्यन् चमत्कारः** यस्य सः । **दैत्यारेः** भगवतः **जैत्रध्वज** जयशीलध्वज । **आरोहनिर्धारितोत्कर्ष** ; दैत्यारेरारोहेण निर्णीतशक्त्यतिशय । **मरुत्पञ्चकस्य** प्राणादेः **अधीशाः** अधिष्ठानदेवताभूताः **सत्यादयः** सत्यसुपर्णविजयतार्क्ष्यविहगेश्वरा मूर्तयः विग्रहाः यस्य सः ।

**प्रभावली**

मानायाः **स्फटावाटिकाया** फणापङ्क्तेः **रत्नरोचिषां** समूहेन कृतनीराजनम् । **कान्तिरेव कल्लोलिनी** नदी, तया राजितम् ॥

**दिवौकस्पतिः** इन्द्रः, तेन **क्षिप्ता** या **दम्भोलिः** वज्रं, तस्य **धारया** कृतो यः **किणः**, स एव **आकल्पः** भूषणं यस्य । **कल्पान्ते** वातूलः, तत्सदृशोदयमनल्पं यत् **वीरायितं** पराक्रमः, तेन **उद्यच्चमत्कारः** जातविस्मयो यो **दैत्यारिः**, तस्य **जैत्रो** यो **ध्वजदण्डः**, तदारोहणेन सर्वैः **निर्धारित उत्कर्षः** निश्चितोऽतिशयः यस्य । संकर्षणस्वरूप । **मरुत्पञ्चकस्य अधीशाः** अधिष्ठान

[1] महात्मन् added after—ग.

नम इदमजहत्सपर्याय पर्यायनिर्यातपक्षानिलास्फालनोद्वेल-पाथोधिवीचीचपेटाहतागाधपातालभांकारसंक्रुद्धनागेन्द्रपीडासृणीभाव-भास्वन्नखश्रेणये [1]चण्डतुण्डाय नृत्यद्भुजङ्गभ्रुवे वज्रिणे दंष्ट्रया तुभ्य-मध्यात्मविद्या विधेया विधेया [2]भवद्दास्यमापादयेथा दयेथाश्च मे।

प्रभाविलासः

**नम इति। पर्यायेण निर्यातस्य पक्षानिलस्यास्फालनेन** ताडनेन **उद्वेलस्य पाथोधेः** समुद्रस्य **वीचीभिरेव चपेटैः** विस्तृताङ्गुलिहस्तैः **आहतस्य अगाधपातालस्य भांकारेण** अनुकारशब्देन **संक्रुद्धस्य** कुपितस्य **नागेन्द्रस्य** दिग्गजस्य **पीडायां सृणीभावेन** अङ्कुशीभावेन **भास्वन्त्यः नखश्रेणयः** यस्य तस्मै। **दंष्ट्रया वज्रिणे;** द्रंष्ट्रात्मकवज्रायुधाय। **अध्यात्मविद्या विधेया** वशवर्तिनी **विधेया** कर्तव्या। **दयेथाः;** दयां कुरु।

प्रभावली

देवताः सत्यसुपर्णविजयतार्क्ष्यविहगेश्वरावतारा यस्य। **न समस्ते;** जगति ते समो न कश्चित्। तादृशाय ते नमः॥

**अजहत्सपर्याय;** सदा पूज्याय। **पर्यायः;** परंपरा, तेन **निर्यातस्य पक्षा-निलस्य आस्फालनम्** आघातः, तेन **उद्वेलस्य** पाथोधेः समुद्रस्य **वीचय एव चपेटः** विस्तृताङ्गुलिः पाणिः, **तेनाहतस्य** अगाधस्य **पातालस्य भांकारेण** भांइतिशब्देन **संक्रुद्धानां नागेन्द्राणां** पीडाविषये **सृणीभावेन** अङ्कुशभावेन **भास्वन्ती नखश्रेणिर्यस्य** तस्मै। **चण्डतुण्डाय;** उग्रनासि-काय। **नृत्यन्त्यौ** उग्रे **भुजङ्गाविव भ्रुवौ** यस्य। **दंष्ट्रया** हेतुना वज्रवते। दंष्ट्रास्वरूपवज्रवत इत्यर्थः। **तुभ्यं नम** इत्यन्वयः। **अध्यात्मविद्याः सर्वा विधेया** वशवर्तिन्यः। **मे;** ममाप्यध्यात्मविद्याविविदिषोः। **भगवद्दास्यम्;** भगवद्दास-भावं मम **आपादयेथाः** आपादय। **दयेथाः;** दयां च कुरु। "अधीगर्थ" इति कर्मणि षष्ठी।

[1] वज्रतुण्डाय—क.

[2] भगवद्दास्यमिति प्रभावलीपाठः

मनुरनुगतपक्षिवक्त्रस्फुरत्तारकश्चित्रभानुप्रियाशेखरस्तावकस्त्रायतां नस्त्रिवर्गापवर्गप्रसूतिः परव्योमधामन् बलद्वेषिदर्पज्वलद्वालखिल्यप्रतिज्ञावतीर्ण स्थिरां तत्त्वबुद्धिं परां भक्तिधेनुं जगन्मूलकन्दे मुकुन्दे महानन्ददोग्ध्रीं दधीथा मुधाकामहीनामहीनान्तक। इदं च श्रुतमनुचिन्तयामि—

प्रभाविलासः

**मनुरिति।** **अनुगतपक्षेः;** **अनुगतः** पश्चादुच्चार्यमाणः **पः** पवर्णः यस्य तस्य **क्षेः** क्षिवर्णस्य । **वक्त्रे;** आदौ । **स्फुरन्** तारकः प्रणवः यस्य सः । **चित्रभानुप्रिया** स्वाहा **शेखरः** अन्त्यपदं यस्य सः । **तावकः मनुः** मन्त्रः **नः** अस्मान् त्रायतामित्यन्वयः । एतदभिप्रायेण गरुडपञ्चाशति चोक्तम्— "पक्षिव्यत्यस्तपक्षिद्वितयमुखपुटप्रस्फुटोदारतारम्" इत्यादि । पुरा किल महेन्द्रः अङ्गुष्ठप्रमाणदेहान् वालखिल्यानवेक्ष्य जहास । तेन ते त्वदधिकबलेनावमतो भविष्यसीति शापेन प्रतिज्ञां चक्रुः । तदभिप्रेत्याह—**बलद्वेषीत्यादिना**। बलद्वेषिण इन्द्रस्य दर्पेण ज्वलतां वालखिल्यानां प्रतिज्ञा अवतीर्णा येन । **दधीथाः;** निधेहि । **मुधाकामहीनाम्;** विफलकाम-

प्रभावली

तत्र पञ्चाक्षरमन्त्रो नस्त्रायतां, तत्त्वबुद्धिं परभक्तिं च मे प्रयच्छेत्याह—**मनुरिति**। **अनुगतस्य** पश्चात्स्थितस्य पक्षिशब्दस्य **वक्त्रे** अग्रभागे **स्फुरन्** प्रकाशमानः **तारो** यस्य; पक्षिशब्दात्पुरतः प्रकाशमानप्रणव इत्यर्थः। **चित्रभानुप्रियाशेखरः;** स्वाहाशब्दान्त इत्यर्थः। **तावको मनुः;** गरुडपञ्चाक्षरीमन्त्रः **नः त्रायताम्**। कीदृशः? **त्रिवर्गस्य** धर्मार्थकामानाम् **अपवर्गस्य** च **प्रसूतिः**। **परव्योम** परमपदं **स्थानं** यस्य। **बलद्वेषिणः** इन्द्रस्य **दर्पेण** ज्वलतां **वालखिल्यानाम्** ऋषीणां **प्रतिज्ञया** अवतीर्ण। अत्र भारते सुपर्णाभ्युदयकथा अनुसंधेया[1]। **स्थिरां तत्त्वबुद्धिम्;** परावरतत्त्वयाथात्म्यविषयबुद्धिम्। **जगतां मूलकन्दे;**

[1] आदिपर्वणि अध्यायः ३१.

**व्यक्तौ संनाहसंकल्पौ विश्वगोप्तुरिमौ हरेः ।**
**प्रथितावागमग्रामे पक्षीश्वरसुदर्शनौ ॥ १९ ॥**

(सर्वतोऽवलोक्य) अहो नु खलु विष्वक्प्रकाशा दिशो विदिशश्च । तदासीदतीव[1] देवस्य दयावल्लभस्य[2] संकल्पः ।

(ततः प्रविशति संकल्पः)

**संकल्पः**—(आत्मनं निर्वर्ण्य)

**यस्मिन्विस्मयनीयभूमनि मनागुन्मीलिते नैकधा**
**सिध्यन्त्यस्य सितासितस्य जगतः स्वर्गापवर्गादयः ।**
**ऐशः सोऽहमवासरात्ययभवन्मायामहायामिनी-**
**सत्ताशेषसुषुप्त[3]बोधनपटुः संकल्पसूर्योदयः ॥ २० ॥**

प्रभाविलासः

हीनाम् । **अहीनान्तक ;** सर्पश्रेष्ठनाशक । अत्र गरुडप्रसादप्रतीतेः पर्युपासनाख्यं निर्वहणसंधेरङ्गमुक्तम् । "प्रसादः पर्युपासनम्" इति लक्षणात् । **व्यक्ताविति । आगमग्रामे ;** पाञ्चरात्रसंहितायाम्—

"यदा देवस्य संकल्पः सुदर्शनसमाह्वयः ।
आयुधादिस्वरूपेण कारकत्वं प्रपद्यते ॥"

इत्यादिकायामित्यर्थः ॥ १९ ॥

**यस्मिन्निति** । सत्त्वादिगुणमिश्रत्वात् सितासितत्वम् । **अवासरा-**

**प्रभावली**

जगत्कारणभूते भगवति । महानन्दस्य मोक्षस्य **दोग्ध्रीम् ;** मुक्तिसाधनभूतामित्यर्थः । **इदं च** रहस्यं श्रुतिसिद्धम् **अनुसंदधे** । **व्यक्ताविति** । अखिलगोप्तुः **हरेः संनाहसंकल्पौ ;** पक्षीश्वरः संनाहः ; सुदर्शनं संकल्पः, इत्युपनिषत्समूहे प्रसिद्धौ ॥ १९ ॥

अथ संकल्पागमनं प्रस्तौति—**सर्वत इति । विष्वक्प्रकाशाः ;** सर्वतः प्रकाशाः । तस्मादागच्छतीव दयापरतन्त्रस्य देवस्य संकल्पः । अथ संकल्पः स्वं दृष्ट्वा अयमहं भगवतः संकल्पसूर्योदय इत्याह—**यस्मिन्निति । विस्मयनीयो भूमा**

[1] इव omitted—ग. [2] दयासखस्य—ख. [3] सुषुप्ति—ग. छ.

आदिष्टः सोऽहमिदानीमनघपरविद्याप्रसादितया प्रदित्सितपारितोषिकया सकलगुणसेव्यया देव्या भगवदनुकम्पया । यथा—मदधीनवृत्तिना मोहादिविजयिना विवेकेन जनितभूमा विनिष्पन्नसमाधिः पुरुषस्त्वयैव मोचनीय इति । अहं च सर्वथा निखिलजगदम्बायास्तदनुकम्पायाः प्रियमाचरामि । न च मया तदनुरोधिपरित्राणे[1] तद्विरोधिनिरसने च दुष्करं किंचित् । अहं हि,

### प्रभाविलासः

**त्यये**; दिनान्तरहिते, अनादितयेत्यर्थः । भवन्त्या महायामिन्या **सत्ताशेषाः**; स्वरूपसत्तामात्रशेषाः । **सुषुप्ताः**; तिरोहितज्ञानानन्दादयः ये जनाः, तेषां प्रबोधने पटुः ॥ २० ॥

**परविद्या**; परभक्तिः । **सकलगुणसेव्यया**; वात्सल्यादिगुणोपजीव्यया, "दोषा भवेयुरेते यदि नाम दये त्वया विना भूताः"

### प्रभावली

महिमा यस्य तस्मिन् । मनाक् **उन्मीलिते**; ईषत्प्रादुर्भूते सति । **सितासितस्य अस्य जगतः**; गुणभेदात् शुद्धाशुद्धस्य **स्वर्गापवर्गादयः** अनेकधा **फलन्ति** । **ऐशः**; ईश्वरसंबन्धी । **सोऽयं संकल्पसूर्योदयः** । कीदृशः? **अवासरात्ययभवन्मायामहायामिनी**; सर्वदा विद्यमानमायाख्या रात्रिः । तस्यां **सत्ताशेषं** स्वरूपसत्तैव अवशेषो यस्मिन् तथा ज्ञानशून्यानां सुषुप्तकल्पानां जीवानां **बोधने** उज्जीवने **पटुः** ॥ २० ॥

अथ संकल्पः स्वकृत्यमाह—**आदिष्ट** इति । **सोऽहम्**; तादृशसामर्थ्यवानहम् । **परविद्याया** अनघत्वं मोक्षैकप्रयोजनतया, "अथ परा यया तदक्षरमधिगम्यते" इत्युक्तेः । प्रदित्सितं प्रदातुमिष्टं **पारितोषिकं** यया । ज्ञानशक्त्यादिसकलगुणसेव्यया भगवत्कृपया । किमित्यादिष्टः? तत्राह—**मदधीनेति** । समर्थोऽप्यहं तस्याः प्रियमेवाचरामीत्याह—**अहमिति** । भगवदनुकम्पायाः प्रियं दुष्करं

[1] साधुपरित्राणे—छ.

**अचरन्मधुकैटभान्पयोधीनहिरण्याक्षहिरण्यविप्लुतां द्याम् ।**
**अदशाननकुम्भकर्णघोषां पुनरुर्वीमपि विक्रमैरकार्षम् ॥ २१ ॥**

आस्तामेतत् । अद्य तु,

**अनिदंप्रथमां निद्रामपावर्त्य[1] क्षणादहम् ।**
**अनिदंपश्चिमां पुंसो जनयिष्यामि जागराम् ॥ २२ ॥**

तदर्थमपि तावदिदमिदानीमाददीय; यदुत—

## प्रभाविलासः

इत्युक्तत्वात् । **अचरन्निति** । अचरन्तौ मधुकैटभौ येषु तान् । सर्वस्यापि संकल्पमात्रायत्तत्वेनाकार्षमित्युक्तिः । तदुक्तम्—"संकल्पेनैव संहर्तुं शक्तोऽहमपि वैरिणः" इति "इच्छन् हरिगणेश्वर" इति च ॥ २१ ॥

**अनिदंप्रथमामिति** । **अनिदंप्रथमाम्**; अनादिभूताम् । **निद्राम्**; अविद्याम् । **अपवर्त्य**; निवर्त्य । **अनिदंपश्चिमाम्**; इदं पश्चिमं न विद्यते यस्मात्, अनुत्तरावधिमित्यर्थः ॥ २२ ॥

## प्रभावली

**चेत्**, कथं कर्तुं शक्यत इत्यत्राह—**न मयेति** । तदेवोपपादयति—**अचरन्निति** । अहं मद्विक्रमैः **पयोधीन्** अविद्यमानमधुकैटभान्, **द्यां** हिरण्याक्षहिरण्यविप्लवरहितां च **अकार्षम्** । **उर्वीं** च रावणकुम्भकर्णादिपीडारहितामकार्षम् ॥ २१ ॥

पूर्ववृत्तान्तकथनमेतदास्ताम्; अद्य कर्तव्यं शृण्वित्यभिप्रायेणाह—**अद्य त्विति** । **अनिदंप्रथमाम्**; अनादिकालादनुवर्तमानाम् । **निद्राम्**; अज्ञानरूपाम् । तां क्षणमात्रेण निवर्त्य । **अनिदंपश्चिमां** नित्यां **जागराम्**; नित्यप्रबोधरूपं मोक्षमित्यर्थः । जनयिष्यामि ॥ २२ ॥

**तदर्थम्**; नित्यजागराजननार्थम् । **तावत्**; प्रथमम् । **आददीय**;

[1] विनिवर्त्य—ख.

**मयि विनिहितभारं मध्यमे वृत्तिभेदे**
**स्थिरमनसमुपायापायरथ्यानिवृत्तम् ।**
**मुरमथनसमीक्षाशेखरेण स्वभूम्ना**
**मुषितनिखिलदोषं मोचयिष्यामि जीवम् ॥ २३ ॥**

(परिक्रम्य) क्व पुनरिदानीं मत्समर्थनीय[1]साध्यसाकाङ्क्षा महाभागा निखिलपापनिराकरिष्णुर्विष्णुभक्तिः, यत्प्रीणनार्थोऽयमस्माकमारम्भः ? (पुरस्तादवलोक्य) इयं सा—

**नियतपुलकिताङ्गी निर्भरानन्दबाष्पा**
**गलितनिखिलसङ्गा[2] गद्गदस्तोत्रगीतिः[3] ।**
**अमृतलहरिवर्णा हर्षनृत्तोपपन्ना**
**विगतनरकभीतिर्विष्णुभक्तिर्विभाति ॥ २४ ॥**

### प्रभाविलासः

**मयीति । मध्यमे वृत्तिभेद इति ।** "एषा सा वैदिकी निष्ठा ह्युपायापायमध्यमा" इति संगृहीतम् । **रथ्या ;** मार्गः । **मुरमथनसमीक्षाशेखरेण ;** भगवदवलोकनोत्तंसितेन ॥ २३ ॥

अथ शान्तरसानुभावानाह— **नियतेति ।** तदुक्तं भरतेन—

### प्रभावली

**आदास्ये ।** आदास्यमानमेव दर्शयति—**मयीति । मयि मध्यमे वृत्तिभेदे ;** नित्यनैमित्तिकनिर्वर्तने । **स्थिरमनसम । उपायापायरथ्यानिवृत्तम् ; उपायाः** काम्यकर्माणि ; **अपायाः** निषिद्धकर्माणि ; तान्येव **रथ्या,** अपरीक्षकैराश्रितत्वात्, तया रहितम् । निषिद्धकाम्यरहितमित्यर्थः । **मुरमथनसमीक्षा ;** भगवत्कृपा । सैव यस्य शिरोभूषणं तेन **स्वभूम्ना** मोक्षितसर्वपापमेनं **जीवं** संसारबन्धान्मोक्षयिष्यामि ॥ २३ ॥

अथ विष्णुभक्तिसद्भावं प्रस्तौति—**परिक्रम्येति । क्व** तिष्ठतीति **शेषः ।**

[1] साध्य omitted—ग. [2] दोषा—ख. [3] कीर्तिः—ग.

अपिच,

**नियताक्षहयं सैषा स्फुरत्प्रशमपत्तिकम् ।**
**मनोरथमधिष्ठाय विष्णुभक्तिरिह स्थिता[1] ॥ २५ ॥**

**विष्णुभक्तिः**—(सहर्षसाध्वसम्) देव, इयमहमस्मि ।

(इति गद्गदस्वरा दूरतः साष्टाङ्गपातं[2] प्रणमति)

**संकल्पः**—(सत्वरधीरोदारगतिरुपसृत्य सहस्तावलम्बमुत्थापयति)

**विष्णुभक्तिः**—देव, नन्तव्योऽसि मया त्वं नाथसंकल्पः ।

(इति पुनः पुनः प्रणमति)

**प्रभाविलासः**

"मन्दस्पन्दं बहिश्चित्तमानन्दाश्रुप्लुते दृशौ ।
रोमाञ्चकञ्चुका मूर्तिर्मोक्षशास्त्रार्थचिन्तनम् ॥
ब्रह्मविद्योपदेशश्च संगमस्तत्त्वगोचरः ।
नासाग्रमागते नेत्रे ज्ञानमुद्राप्रदर्शनम् ॥

इत्यादयोऽनुभावाः स्युः" इति । भगवता चोक्तम्—"मत्कथाश्रवणे भक्तिः स्वरनेत्राङ्गविक्रिया" इत्यादि ॥ २४ ॥

**नियताक्षेति । प्रशमः**; शान्तिः ॥ २५ ॥

**प्रभावली**

विष्णुभक्तिं वर्णयति—**नियतेति** । अमृतलहरिवत् स्वादुवचना ॥ २४ ॥

**नियताक्षेति** । **नियताः** नियमिताः अक्षाण्येव हयाः यस्य तम् । **स्फुरन्त्यः**, प्रकृष्टः शमः; शमशब्देन दमादयोऽप्युपलक्षिताः; शमदमादयः **पदातयो** यस्य तम् । **मन एव रथमधिष्ठाय विष्णुभक्तिरिह** तिष्ठति ॥ २५ ॥

**हर्षः** संकल्पदर्शनात् । तस्य गौरवात् केत्यन्वेषणात् साध्वसम् । सहस्ता-

[1] उपस्थिता—ग. [2] साष्टाङ्गं—क.

**संकल्पः**—भद्रे, अलमलमेतावता। महायोगेश्वरे,[1] महाप्रभावा खल्वसि। तदिह नामयति भवती मामप्यनेन नमसा[2]।

**विष्णुभक्तिः**—देव, धन्येयं[3] खल्विदानीमहमस्मि, याहमिह निरङ्कुशैश्वर्यशालिना भवतैवं संभाव्ये।

**संकल्पः**—भद्रे, परावरनिखिल[4]तत्त्वान्तरात्मना भगवतापि संभावनीयां त्वामहं संभावयामीति किमत्र चित्रमवगच्छसि? यदीदृशी भवती—

**शमधननिधिः संविद्वल्लीसमग्रफलोदयः**
**श्रुतपरिणतिः शुद्धिस्थेमा सुखप्रतिभूरसि।**
**भवभयतमःप्रातःसंध्या परावरदीपिका**
**भगवति हरौ भक्तिर्दिव्या परिष्कृतिरात्मनः॥ २६॥**

अपिच,

**जनन्या सर्वलोकानां विष्णुवल्लभया तया।**
**कृपया कल्पितः सोऽहं त्वद्भ्रूविभ्रमकिंकरः॥ २७॥**

**प्रभाविलासः**

**शमेति**। **स्थेमा**; स्थैर्यम्। **परावरयोः**; परमात्मजीवात्मनोः **दीपिका**। भगवतीति संबोधनम्॥ २६॥

**जनन्येति**। "तुष्टा तेन जनार्दनस्य करुणा कुर्वीत तत्किंकरम" इति प्रत्यभिज्ञातम्॥ २७॥

**प्रभावली**

**वलम्बम्**; हस्तमालम्ब्येत्यर्थः। **महान्तो ये योगा** उपायाः, तेषाम् **ईश्वरे**; प्रधानभूते; विष्णुभक्तेरुपायप्रवर्तकत्वादिति भावः। संकल्पो विष्णुभक्तिं स्तौति—**शमधनेति**। शमधनानां योगिनां **निधिः**; अवश्यसंपादनीया। **संवित्**; तत्त्वज्ञानम्। सैव वल्ली। तस्याः समग्रफलोदयः। आत्मनः; जीवस्य। **परिष्कृतिः**; अलंकारः॥ २६॥

सोऽहं भगवत्कृपया त्वत्किंकरत्वेन नियमितोऽस्मीत्याह—जनन्येति॥ २७॥

[1]योगेश्वरि—क. ख. [2]मनसा—क. [3]धन्यैव—छ. [4]निखिल omitted—ख.

तदादिशतु भवती मामभिमतप्रसाधनाय ।

**विष्णुभक्तिः**—अहो देव, पारतन्त्र्यपरिग्रहोऽपि[1] स्वातन्त्र्यकाष्ठैव भवतः । तदहमिदानीं भवतैव भावनीयं[2] प्रहर्षपरवशा प्रत्यभिज्ञापयामि । अद्य हि,

**प्रकृतः क्रियया धिया च योगः परमैकान्त्यपरिष्कृतस्य पुंसः ।**
**निधिदर्शनवन्निरूढहर्षं प्रणिधत्ते विशदं परप्रकाशम् ॥ २८ ॥**

अयं तावदिदानीमान्तरस्य योगस्य परिपाकः । बाह्यस्य चैतादृशीं[3] दशामनुभवति पुरुषः । यथासौ—

**सिद्धे महति पाण्डित्ये सनिर्वेदश्चतुर्विधे ।**
**प्रणवद्विचतुष्काद्यैः प्रशान्तैरेव मोदते ॥ २९ ॥**

**प्रभाविलासः**

**प्रकृत इ**ति । एकः अन्तः निश्चयः यस्य, तस्य भाव ऐकान्त्यम् । परमं च तदैकान्त्यं चेति परमैकान्त्यम् । **परप्रकाशम्;** परस्य भगवतः प्रकाशम् । अत्र निधिदर्शनवदितीष्टार्थप्राप्तिप्रतीतेः आनन्दो नाम निर्वहणसंधेरङ्गमुक्तम्, "इष्टार्थप्राप्तिरानन्दः" इति लक्षणात् ॥ २८ ॥

**सिद्ध इति । चतुर्विधे;** श्रुतिस्मृतीतिहासपुराणज्ञानरूपे । **द्विच-**

**प्रभावली**

परमैकान्तिना पुंसा साङ्गमनुष्ठीयमानो योगो भगवत्साक्षात्कारं विधत्त इत्याह—**प्रकृत** इति । ज्ञानयोगभक्तियोगपरिकर्मित इत्यर्थः । **निधिदर्शनवत्;** अन्तर्यामिणो निधिरूपत्वेन वेदान्तेषु वर्णनात् । **निरूढः** प्रकृष्टो हर्षो यत्र तम् । **विशदं परप्रकाशं** प्रत्यक्षसमानाकारं साक्षात्कारं विधत्ते ॥ २८ ॥

एवमान्तरसिद्धिरुक्ता । अथ बाह्यसिद्धिं प्रतिपादयति—**सिद्ध इति । पाण्डित्यम्;** वैदुष्यम । तस्य चातुर्विध्यं बहुशास्त्रप्रवचनश्रवणकथाकविता-

[1] परिग्रहेऽपि—ग. छ. [2] संभावनीयं—क. [3] चेदृशीम् ग.

**संकल्पः**—अहो वैभवमकम्पनीयभगवदनुकम्पासंभृतमहिम्नो विवेकस्य; यदयमिह कर्मशृङ्खलैर्निगलितः कलेबरकारागृहे निरुद्धगतिरन्तर्लुठन्नपि निर्मोचितमोहमहाग्रहो निवृत्तिधर्मकाष्ठां प्रापितः। अथवा भवत्या एवायं प्रभावः।

**विष्णुभक्तिः**—देव, विश्ववेदिना भवतापि विवेके मयि च किमिति वैभवमारोप्यते? पश्यतु भवानेतत्—

**स्वमायाशैलूषीविहरणपरिभ्रान्ततनुभृ-**
**त्परित्राणोद्योगप्रवणकरुणावेशविवशः।**
**[1]प्रतिक्षेप्तुं तापान् प्रभुरयमपर्यन्तमहिमा**
**हिमानीमानीय स्वपदनतिमेनः प्रणुदति ॥ ३० ॥**

**प्रभाविलासः**

**तुष्कः**; अष्टाक्षरमन्त्रः। आद्यपदेन मन्त्ररत्नद्वादशार्णषडर्णादय उच्यन्ते॥२९॥

**स्वमायेति**। **शैलूषी**; नटी। **स्वपदनतिं** शरणागतिमेव हिमानीम्। तापशमनात हिमानीनिर्देशः ॥ ३० ॥

**प्रभावली**

रूपम्। एवं चतुर्विधे पाण्डित्ये सिद्धे **निर्वेदवान** गर्वरहितः। **प्रणवः**; तारः। **द्विचतुष्कः**; मूलमन्त्रः। **तैर्मोदते** ॥ २९ ॥

ईदृशपरिपाकस्य मूलं विवेकं प्रशंसति—**अहो** इति। पूर्वोक्तोऽयं भवत्या एव प्रभावः। विष्णुभक्त्यभावे केवलविवेकस्य व्यर्थत्वादित्याह—**अथवेति**। उक्तस्य सर्वस्य परिपाकस्य भगवानेव हेतुरित्याह—**स्वमायेति**। **स्वमाया**; प्रकृतिः। सैव **शैलुषी**; नटी। तस्याः **विहरणं** नर्तनं, तेन **परिभ्रान्तस्य** जीवस्य, **परित्राणोद्योगे** रक्षणसंनाहे **प्रवणा** या **करुणा**, तया परतन्त्रः। **अपर्यन्तमहिमा**; निःसमाभ्यधिकमहिमा। **प्रभुः**; सर्वेश्वरः। **तनुभृतः तापान्**; तापत्रयम्। **प्रतिक्षेप्तुम्**; शमयितुम्। **स्वपदनतिं हिमानी-**

[1] परिक्षेप्तुं—क.

ततश्च,

उपायः स्वप्राप्तेरुपनिषदधीतः स भगवान्
प्रसत्त्यै तस्योक्ते प्रपदननिदिध्यासनगती ।
तदारोहः पुंसः सुकृतपरिपाकेन महता
निदानं तत्रापि स्वयमखिलनिर्माणनिपुणः ॥ ३१ ॥

अपिच,

ग्रस्ते पित्तेन चित्ते गलकुहरमुखे संनिरुद्धे कफेन
व्याप्ते वातेन गात्रे विलपति लपने कांदिशीके हृषीके ।
जङ्घाले जीवितांशे जिगमिषति बले जन्तुमुद्भ्रान्तबन्धुं
कस्त्रातुं चक्रहस्तादपर इह [1]दयादत्तदृष्टिः क्षमेत ॥ ३२ ॥

प्रभाविलासः

**उपाय इति । स्वप्राप्तेरुपाय इति**; "अमृतस्यैष सेतुः" इति श्रुत्यर्थोऽभिप्रेतः । **उपनिषदधीत इति**; "तं त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुत्यर्थोऽभिप्रेतः । **प्रसत्त्यै**; प्रसादाय । **तदारोहः**; प्रपत्तिभक्त्युपाययोरधिकारः । **तत्रापि**; सुकृतपरिपाकेऽपि । **स्वयं निदानम्**; आदिकारणम् ॥ ३१ ॥

**ग्रस्त इति । गलकुहरमुखे**; कण्ठरन्ध्रमुखे । **कफेन**; श्लेष्मणा ।

प्रभावली

**मानीय** हिमसंततिं प्रापय्य स्वचरणारविन्दसमाश्रयणमुत्पाद्य, **एनः** तापत्रयहेतुभूतं पापं **प्रणुदति** ॥ ३० ॥

अनेन किमुक्तं भवतीत्यत आह—**उपाय इति । उपनिषदधीतः**; "अमृतस्यैष सेतुः" "उतामृतत्वस्येशानः" इत्याद्युपनिषद्भिः स्वप्राप्त्युपायतया अधीतः **भगवानेव स्वप्राप्तेः** प्रधानोपायः । भक्तिप्रपत्ती तद्वशीकरणाय । **तयोः** वशीकरणोपाययोः **आरोहः महता सुकृतपरिपाकेन** । तद्धेतुरपि सर्वेषां करणकलेबरप्रदाता भगवानेवेति भावः ॥ ३१ ॥

चक्रहस्त एव रक्षणे पटुः, नान्य इत्याह—**ग्रस्तेति । चित्ते पित्तेन ग्रस्ते**

[1] घृणा—क.

संवेद्मि च भगवद्दृष्टस्य सर्वविद्भिरपि दुरूहां सांपरायिकीं संपदम् । यथा—

कालोपयातकमलापतिदृष्टिपाताद्
[1]दूरापनीतदुरितादिपरिप्लवोऽसौ ।
सुप्तोऽपि जागरमुपैत्यपुनर्निमेषं
स्वान्तेन निष्प्रतिघमुक्तिमनोरथेन ॥ ३३ ॥

प्रभाविलासः

लपने; मुखे । हृषीके; इन्द्रिये । उद्भ्रान्तबन्धुम्; बन्धुभिरावृत्य शोच्यमानम् । अत्र

"ततस्तं म्रियमाणं तु काष्ठपाषाणसंनिभम् ।
अहं स्मरामि मद्भक्तं नयामि परमां गतिम् ॥"

इति श्रीवाराहवचनं द्रष्टव्यम् । गजेन्द्रमोक्षणं च ध्वनितम् ॥ ३२ ॥

कालेति । अपिः विरोधे । जागरमिति; ज्ञानानन्दादिविकासः ॥ ३३ ॥

प्रभावली

मोहिते । गलकुहरस्य कण्ठरन्ध्रस्य मुखे अग्रभागे कफेन श्लेष्मणा पिहिते । गात्रे वातेन व्याप्ते आक्रान्ते । आस्ये विलपति । हृषीके इन्द्रियगणे भयद्रुते । जीवितांशे; जीवित इत्यर्थः । जङ्घाले; गन्तुमुद्युक्ते । बले सत्त्वे गच्छति सति । एवंभूतापदि उद्भ्रान्ताः वियोगभीत्या विलपन्तः बन्धवो यस्य तम् । जन्तुं रक्षितुं चक्रहस्तादपरः कृपया दत्तदृष्टिः कः क्षमेत ॥ ३२ ॥

भगवता कटाक्षितस्यान्यैरूहितुमशक्यामुत्तरकालभाविनीं संपदं वेद्मीत्याह—समिति । तामेव दर्शयति—काल इति । काले आपत्काले उपनीतात् कमलापतिदृष्टिपातात् दूरापनीतः दुरिताद्युपद्रवः यस्य सः । निष्प्रतिघः निरर्गलः मुक्तिमनोरथः यस्य तेन । स्वान्तेन हृदयेन उपलक्षितः अनादिमायया

[1] दूरापयात—छ.

अत्यद्भुतप्रेक्षणीयमिदं त्वदनुग्रहसुधासारचातकव्रतिनः पुरुषस्येदानीमवस्थानम् । अयं हि—

कलत्रसुतसोदरप्रभृतिकल्पनाबर्बरै-
रशक्यविनिवर्तनैरहितशृङ्खलैर्यन्त्रितः ।
निसर्गसुहृदि प्रभौ निहितगुप्तिभारः पुमा-
नुपस्थितमुपस्थितं[1] हितमशेषमुद्वीक्षते ॥ ३४ ॥

अतः परं तु भगवन्निविष्टमेव भव्यमवधारयामि ।

संकल्पः—यदिह भवत्या प्रख्याप्यते प्रत्यक्षयामि तावदेतदखिलम् ।

दुरितजलधिद्वीपप्राये सुखे विगतस्पृहा
पुरुषविषये यत्त्वं ब्रूषे पुरस्कृतगौरवम् ।
हिततमतया दुर्लङ्घ्येऽस्मिन् क्रिया परमुत्तरं
तदपि किमपि प्रत्युक्तं नः प्रतीक्षणमर्हति ॥ ३५ ॥

प्रभाविलासः

**कलत्रेति । गुप्तिः** ; रक्षणम् । **उद्वीक्षते** ; न त्वाशास्त इत्यर्थः ॥ ३४ ॥

**दुरितेति** । दुःखमपरिच्छिन्नं, सुखं तु स्वल्पमिति वक्तुं **जलधिद्वीपग्रहणम्** । **सुखे विगतस्पृहा** निःस्पृहा त्वं **पुरुषविषये पुरस्कृतगौरवं**

**प्रभावली**

सुप्तोऽपि अपुनर्निमेषं पुनर्निमीलनरहितं जागरमुपैति । मोक्षयोग्यो भवतीति भावः ॥ ३३ ॥

**कलत्रसुतसोदरादीनां कल्पनया** आरोपेण **बर्बरैः** परुषैः स्वेन परैश्च अशक्यनिवर्तनैः । अहितानि पापान्येव शृङ्खलाः ; तैर्बद्धः । अयमिदानीं **निसर्गसुहृदि** सर्वेश्वरे न्यस्तरक्षाभरः सन्, उपस्थितं सुखं वा दुःखं वा, **तदशेषं हितमेवोद्वीक्षते** ; प्रारब्धविग्रहात् हृष्टो भवतीत्यर्थः ॥ ३४ ॥

**प्रख्याप्यते** ; ज्ञाप्यते । पुरुषमुद्दिश्य ब्रह्मादिपदसुखे विगतस्पृहा सती त्वं यद् ब्रूषे, तस्य तस्य हिततमतया शीघ्रक्रियैव केवलमुत्तरं दातव्यम् ; अथापि कंचित्कालं प्रतीक्षस्वेत्याह—**दुरितेति** । **दुरितजलधिद्वीपस्थानीये**

[1] उपस्थितः—ग.

यद्यसावनादिभवरसभोगवासनापरवशः पुरुषः सत्यलोकप्रभृतिषु संसारमरुकान्तारपथिकपानीयशालासु विश्रममभिकाङ्क्षेत्, तदा कथमहमेनमस्थाने सपदि मोक्षयेयम्?

**विष्णुभक्तिः**—(कर्णौ पिधाय करकमले धून्वाना) मा मैवमाशङ्कनीयं मदेकसाक्षिकमनोरथे महात्मनि पुरुषे भूतभाविसमस्तवस्तुसाक्षात्कारिणा भवता। इदं च विज्ञापयामि—

प्रभाविलासः

यथा तथा यत् **ब्रूषे** पुरुषो मोचनीय इति, **हिततमतया दुर्लङ्घ्ये अनुपेक्ष्ये अस्मिन्** पुरुषमोचनकर्मणि। **क्रिया परमुत्तरम्**; क्रिया केवलमुत्तरम्। **नः**; अस्माकम्। **किमपि प्रत्युक्तम्**; मोचयामीति प्रतिवचनम्। **प्रतीक्षणमर्हति**; परिपालनमर्हति। युष्मदुक्तं परिपाल्य तिष्ठाम इत्यर्थः॥ ३५॥

अतस्त्वया पुरुषो मोक्ष्यत इत्युक्ते तद्विस्रम्भवशात् मया परिपाल्य स्थीयते। परं त्वस्माकं मनसि मोक्ष्यत इति न विश्वास इत्याह—

**प्रभावली**

**सुखे**; ब्रह्मेन्द्रादिलोकसुखे। निराशा त्वं गौरवं पुरस्कृत्य यन्मां **ब्रूषे**, इदं पुरुषस्य हिततमतया दुर्लङ्घम्। तत्र **क्रिया** केवलमुत्तरं भवति। **तदपि**; तथापि। **किमपि प्रत्युक्तम्**; प्रत्युत्तरम्। **प्रतीक्षणम्**; प्रतिपालनम्। **अर्हति**; मदुक्तं प्रतीक्षस्वेत्यर्थः। तद्विषये मम किमपि प्रत्युत्तरं वक्तव्यमस्ति; तच्छृणिवत्यर्थः॥ ३६॥

प्रत्युत्तरं दर्शयति—**यद्यसाविति**। **अनादिः** या **भवरसभोगभावना**, सैव **पाशः**; **तत्परवशः** सन् **संसार** एव **मरुकान्तारं**, तत्र **पथिकानां** श्रान्तानां प्रपारूपासु ब्रह्मलोकादिषु **विश्रमम् अभिकाङ्क्षेत्** यदि, **तदा अस्थाने सपदि एनं कथं मोचयेयम्**। मा मा एवम्; एवं मा शङ्किष्ठाः। भवता एवं मा शङ्कनीयमिति संबन्धः। इदं च मद्विज्ञापनं शृणिवत्यभिप्रायेणाह—

**अपि पद्मयोनिरवशो भजते मधुकैटभादिजनिता विपदः[1] ।**
**इति दृष्टदोषनिवहः पुरुषो न वहेत नाकनरकेषु रतिम् ॥ ३६ ॥**

[2]अपिच,

**अमृतस्यन्दिनं [3]कश्चित्कृष्णमेघं द्विजः स्मरन् ।**
**उदन्यया न वेशन्तमुदन्वन्तं च वीक्षते ॥ ३७ ॥**

**प्रभाविलासः**

यदीत्यादिना । **अपीति** । **अवशः** ; अस्वतन्त्रः । अत्र,

"कर्मणां परिपाकत्वादा विरिञ्चादमङ्गलम् ।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥"

इत्यनुसंधेयम् ॥ ३६ ॥

**अमृतेति** । **कश्चित् द्विजः** ; विद्यया द्वितीयजन्मा, "स हि विद्यातस्तं जनयति । तच्छ्रेष्ठं जन्म । शरीरमेव मातापितरौ जनयतः" इत्यापस्तम्बोक्तेः ;

"उत्पादकब्रह्मपित्रोर्गरीयान् ब्रह्मदः पिता ।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥"

इति मनूक्तेश्च । ननूपनयनसंस्कारमात्रस्य द्विजत्वापादकत्वेन कथं विद्यायास्तदापादकत्वमिति चेत्—नैष दोषः ; द्विपदं हि द्रव्यविशिष्टात्मवाचकम् ।

**प्रभावली**

**इदं चेति** । अयं तावद्विवेकित्वात् स्वर्गादिषु रतिं न करोतीत्याह—**अपीति** । अण्डाधिपो ब्रह्मापि **परवशः** सन् मधुकैटभाद्यसुरजनिता विपदो भजत इति ब्रह्मलोकादिषु दृष्टदोषसमूहः **पुरुषः** स्वर्गाद्याख्यनरकभेदेषु **रतिं न वहेत** ॥ ३६ ॥

किं च कृष्ण एव मोक्षप्रद इति जानन् स्वर्गं ब्रह्मलोकं वा तत्फलप्रददेवतान्तरं वा न वीक्षत इत्याह—**अमृतेति** । **द्विजः** ; पक्षी ब्राह्मणश्च । यथा

[1] जनितां विपदम् —ग. [2] किंच—ख. [3] कंचित्—ख.

तदसौ झटिति निस्त्रुटितनिगलयुगलस्त्वया विधातव्यः[1] ।
अहं त्विदानीमभिनिर्वर्तिताभिगमननियतिरहिंसादिमयीमष्टपुष्पी-

**प्रभाविलासः**

तत उपनयनसंस्कारः शरीरशुद्धिकरः । ब्रह्मविद्या तु आत्मशुद्धकरीति द्विजत्वप्रतीतिरिति । तदुक्तं श्रीशुकैः—

"कालेन स्नानशौचाभ्यां संस्कारैस्तपसेज्यया ।
शुध्यन्ति दानैः संतुष्ट्या द्रव्याण्यात्मात्मविद्यया ॥"

इति । अन्यत्र द्विजश्चातकः । "दन्तविप्राण्डजा द्विजाः" इति निघण्टुः । कृष्ण एव **कृष्णमेघः** तोयपूर्णमेघः, "शरद्धनं नार्दति चातकोऽपि" इत्यभिधानात् । अनेनाकारत्रयसंपत्तिः फलिता । **स्मरन्**; शरण्यतया जानन् । **वेशन्तम्**; स्वाराज्यादिक्षुद्रसुखम् । **उदन्वन्तम्**; कैवल्यपारमेष्ठ्यादिसुखं वा । अन्यत्र प्रसिद्धम् । **न वीक्षते**; न स्मरति । नापेक्षत इति किमुतेति भावः । अत्र निदर्शनम्—

"एक एव खगो मानी चिरं जीवतु चातकः ।
पिपासया वा म्रियते याचते वा पुरंदरम् ॥"

इति द्रष्टव्यम् ॥ ३७ ॥

**तदसावित्यादि** । **निस्त्रुटितेति** दुःखनिवृत्तिप्रतीतेः समयो नाम निर्वहणसंधेरङ्गमुक्तम्, "समयो दुःखनिर्गमः" इति लक्षणात् । **निगलयुगलम्**; पुण्यपापरूपशृङ्खलाद्वयम् । **अभिनिर्वर्तिताभिगमननियतिः**; कृत-

**प्रभावली**

पिपासया पीडितोऽपि चातकद्विजः पल्वलं वा समुद्रं वा न वीक्षते, कृष्णमेघमेवाभिवाञ्छति, तद्वदयमपीत्यर्थः ॥ ३७ ॥

अहं त्विदानीम्; प्रातःकाले निर्वर्तिताभिगमननियमः **अहिंसादिमयीमष्टपुष्पीम्**; अहिंसा, इन्द्रियनिग्रहः, सर्वभूतदया, क्षमा, ज्ञानं, तपः,

[1] निध्यातव्यः—क.

मुपादाय त्वत्प्रभावनष्टाश्लिष्टपूर्वोत्तरपुण्यपापराशिमनन्ययाजिनमनन्यध्यायिनं च पुरुषमासन्नमुक्तिलाभव्यवसायजनितनिरवधिकप्रमोदमनुमोदितुं त्वदेकान्तिना विवेकेन सह त्वरितमागमिष्यामि ।

(इति निष्क्रान्ता)

**संकल्पः**—(परितोऽवलोक्य) अयमसावनवधिकस्वमाहात्म्यगोपनप्रदर्शितबालभावः प्रशान्तमधुरगम्भीराकृतिः परब्रह्मसमाधिप्रारम्भभावितममन्दमानन्दमनुभवन् पुलकितनिखिलगात्रविडम्बितकदम्बगोलकमलनालः पुण्यतमदर्शनः पुरुषः । अहो महदिदमाश्चर्यम्—

**प्रभाविलासः**

भगवदाराधनयोग्यतुलसीकल्हारादिपुष्पाद्याहरणनियमा । **अष्टपुष्पी**; अष्टपुष्पसमाहारः । तदुक्तम्—

"अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः ।
सर्वभूतदया पुष्पं क्षमा पुष्पं विशेषतः ।
ज्ञानं पुष्पं तपः पुष्पं ध्यानं पुष्पं तथैव च ।
सत्यमष्टविधं पुष्पं विष्णोः प्रीतिकरं भवेत् ॥"

**प्रभावली**

ध्यानं, सत्यमित्येतान्यष्टपुष्पाणि । **उपादाय**; उपादानमपि कृत्वा । अनन्ययाजकं पुरुषं देहावसान एवावश्यं मुक्तिर्भविष्यतीति तल्लाभव्यवसायजातनिरतिशयप्रीतियुक्तमनुमोदितुं त्वय्येव न्यस्तभरेण विवेकेन सह त्वरितमागमिष्यामि । अथ समाधिमत्पुरुषदर्शनं प्रस्तौति—**परितोऽवलोक्येति** । **अनवधिकस्वमाहात्म्यगोपनेन** लौकिकेषु **प्रदर्शितबालभावः**; बालभावोऽज्ञत्वम् । **प्रशान्ता** औद्धत्यरहिता **मधुरा** मनोहरा **गम्भीरा** परैः दुरवगाहा **आकृतिर्यस्य** । **समाधिप्रारम्भे** संभृतम् **अमन्दम्** अधिकम् **आनन्दमनुभवन्** **पुलकितेन** **निखिलगात्रेण** **विडम्बितः** अनुकृतः **कदम्बगोलः** कदम्बवृक्षसंस्थानं **कमलनालश्च** येन सः ।

शृङ्गारवीरकरुणाद्भुतहास्यभीति-
बीभत्सरौद्रविषयानतिवर्तमानः ।
तत्त्वावलोकनविभावसमेधितात्मा
शान्तो रसः स्फुरति मूर्त इवैष धन्यः ॥ ३८ ॥

अपिच,

अङ्गान्यस्य मुहुर्मुहुः पुलकितान्यन्तर्मुखं मानसं
चिन्ता च द्रुतशर्करामतिनिधिः शीताश्रुणी लोचने ।
मायासारथिगीतयोपनिषदा दृष्टक्रमं द्रागसौ
मन्ये याति मनोरथेन पुरुषो वैकुण्ठघण्टापथम् ॥ ३९ ॥

प्रभाविलासः

इति । **गोपनम्**; संवरणम् । **शृङ्गारेति** । **विभावः**; प्रभावः ॥ ३८ ॥

**अङ्गानीति** । **मायासारथिः**; श्रीकृष्णः । **गीतया**; श्रीगीतया । **उपनिषदा दृष्टक्रमः**; विदितक्रमः । यथोक्तम्—

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥"

इति । **वैकुण्ठस्य**; परमपदस्य, "वैकुण्ठे तु परे लोके" इत्यभिधानात् । **मनोरथेन**; कामेन ॥ ३९ ॥

प्रभावली

**अयमसौ**; दृश्यत इति शेषः । मूर्तिमान् शान्तिरस इवायं स्फुरति । संप्रतीदं महाश्चर्यमित्याह—**अहो इति** । शृङ्गारादिरसविषयानतीत्य **वर्तमानः**; तदगोचरो भूत्वेत्यर्थः । **तत्त्वावलोकनं विभावः** सहकारी ; शान्तिरसस्य विभावैः स्थायिभावादिभिः संवर्धितरूपः धन्य एषः **शान्तो रस इव परिस्फुरतीत्यन्वयः** ॥३८॥

अत्र बाह्याबाह्यानाकारान्वर्णयति—**अङ्गानीति** । अवयवाः **पुलकिताः** । **मनस्त्वन्तर्मुखम्**; स्वात्मशरीरकपरमात्मध्यानपरमित्यर्थः । **चिन्ता**; ध्यानरूपानुस्मृतिः विलीनशर्करावत्स्वादुभूता । **लोचने** आनन्दबाष्पवर्षिणी । **माया-**

तमेतं सर्वधर्मक्षेत्रगिरिनगरतीर्थाश्रमारण्यसारसमाहारमिवैकत्र संभृतमस्मदागमनप्रतीक्षमकालक्षेपेणोपसर्पामि । अथवा अन्तर्हितः क्षणमस्याभिप्रायमवधारयामि ।

(ततः प्रविशति श्रद्धादत्तहस्तः[1] प्रशान्तमधुरवेषः पुरुषः)

पुरुषः—(स्वावस्थां परामृश्य सनिर्वेदम्) हन्त, निरन्तरदुरन्तदुरितकान्तारजाङ्घिकस्य मम दुःसहदुःखजालजटिला [2]जन्मसंततिरनन्तातिक्रान्ता । अतः परमपि पूर्वावस्थानिर्विशेषपुनर्भवपरंपराहेतुभिरपरिमितैः कर्मसंचयैरावृतोऽहमवसरप्रतीक्षया भगवदनुकम्पया कथंचिन्निवृत्तिधर्मे निवेशितः प्रबलतमविवेकवैभवप्रतिक्षिप्तमोहपक्षोऽपि परप्राप्तिविरहादवसीदामि । (दीर्घं निश्वस्य)

**प्रभाविलासः**

सर्वधर्मेत्यादिना

"तत्रैव गङ्गा यमुना च तत्र गोदावरी सिन्धुसरस्वती च ।
सर्वाणि तीर्थानि वसन्ति तत्र यत्राच्युतोदारकथाप्रसङ्गः ॥"

**प्रभावली**

**सारथिना कृष्णेन गीतया उपनिषदा** गीतोपनिषदा प्रतिपादितस्वभावं **वैकुण्ठघण्टापथम्** अर्चिरादिमार्गं **मनोरथेन यातीति मन्ये** । तत्समीपं गच्छतीति मन्य इत्यर्थः ॥ ३९ ॥

**तमेतमिति** । सर्वधर्मशब्दः सर्वत्रान्वेति । धर्मक्षेत्रं कुरुक्षेत्रम् । **गिरयः**; वेंकटाद्र्यादयः । **नगराणि**; काञ्च्यादयः । **आश्रमाः**; बदरिकाश्रमादयः । तेषां सारांशस्य समाहारः । एकत्रैव संभृतं समाहारमिव स्थितम । एतद्दर्शनेन सर्वधर्मक्षेत्रादिदर्शनफलं लभ्यत इति भावः । **अकालक्षेपेण**; कालक्षेपमकृत्वेत्यर्थः । विवेकवैभवेन निरस्तमोहादिकोऽपि परप्राप्त्यभावेनावसीदामीत्याह—**प्रबलतमेति** ।

[1] श्रद्धयालिङ्गितः—क. [2] निरन्तरजन्म—ख.

**चिरपरिचितदेहाद्यर्थचिन्तानुवृत्त्या**
**नियतिमनुसरन्त्या नित्यडोलायितात्मा ।**
**अयमहमिह मन्दोद्द्योतखद्योतकल्पः**
**कति कति दिवसानि क्षीणशक्तिः क्षिपेयम् ॥ ४० ॥**

अपिच,

**न मुक्तो न च बद्धोऽहं यथा पश्चाद्यथा पुरा ।**
**कृपणः किं करिष्यामि न करिष्यामि वा स्वयम् ॥ ४१ ॥**

अस्ति वा कश्चिदनिदंप्रथमनिरवधिककारुण्यराशिरभङ्गुर-स्वातन्त्र्यः पथ्यप्रवृत्तावपथ्यपरिहारे च प्रभुरेकः प्रमाणम् ।

### प्रभाविलासः

इति स्मारितम् । **जटिला**; बद्धजटा । पिच्छादित्वादिलच् । **चिरेति** । **मन्दोद्द्योतः**; मन्दालोकः ॥ ४० ॥

**न मुक्त इति** । यथा पश्चात्, तथा न मुक्तः । यथा पुरा, तथा न बद्धः ॥ ४१ ॥

### प्रभावली

इतः परमस्मिन् देहे कति कति दिनानि कालं क्षिपामीत्याह—**चिरेति** । नियतिवशात् आपतन्त्या देहाद्यर्थचिन्तया तदनुवृत्त्या च चञ्चलचित्तोऽहं मन्दप्रकाशखद्योतसदृशः, अज्ञ इत्यर्थः । अल्पशक्तिः सन् कति दिनानि स्थास्यामीति । क्षेपणीयदिवसानामन्तं न पश्यामीति भावः ॥ ४० ॥

**न मुक्त इति** । यथा **पश्चात्** देहपातानन्तरं **मुक्तो** भविष्यामि यथा वा आचार्योपसदनात्पूर्वं **बद्धः**, न तथेदानीम् । एवं **कृपणोऽहं किं करिष्यामि** । पथ्यकरणे अपथ्यनिवर्तने च नाहं समर्थ इति भावः ॥ ४१ ॥

एवं चिन्तयितुमपि नाहमधिकारीत्याह—**अस्ति वेति** । वाशब्दो ह्यर्थे । **अनिदंप्रथमम्; अनादिसिद्धम्** । कारुणिको यः स्वतन्त्रः, स एव श्रियः पतिः पथ्यप्रवृत्त्यादौ प्रमाणनिर्णायकः समयः । यत् स्वस्येष्टं तत्करोतु । अहं च स एव

तदाहितमतिस्तदेकाधीनप्रवृत्तिश्चाहं[1] प्रतिबुद्धोऽस्मि । (विचिन्त्य मुहूर्तमिव स्थित्वा)

**अमतिविहितै[2]रंहःस्तोमैर्झटित्यहमुज्झितः**
**शमितविपथैः सत्त्वोदग्रैः शमादिभिराश्रितः ।**
**परमपुरुषध्यानस्तोत्रप्रणाममुखैर्मखैः**
**परिहृतमुधाकालक्षेपः फलोदयमाद्रिये ॥ ४२ ॥**

**प्रभाविलासः**

**अमतीति** । **अंहःस्तोमैः**; पापसमूहैः । **प्रणाममुखैरिति**; मुखपदेन कथाश्रवणादिकमुच्यते । यथोक्तमेकादशे—

"श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनम् ।
परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ।
आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् ।
मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः ।
मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ।
मय्यर्पणं च मनसः सर्वकामविवर्जनम् ।
मदर्थेऽर्थपरित्यागो भोग्यस्य च सुखस्य च ।
इष्टं दत्तं हुतं भुक्तं मदर्थं मद्व्रतं तथा ।
एवं धर्मो मनुष्याणामुद्धवात्मनिवेदनम् ।
मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥"

इति ॥ ४२ ॥

**प्रभावली**

प्रवर्तकोऽपीति ज्ञानवानस्मीत्याह—**तदाहितेति** । **मुहूर्तं** क्षणमिव **स्थित्वा** । भगवति न्यस्तभरत्वानुसंधानेन मुहूर्तं क्षणमिव भावयित्वेत्यर्थः । चिन्तां विहाय अभिगमनादिभिः कालं क्षिपन् फलसिद्धिं प्रतीक्ष इत्याह—**अमतीति** । अबुद्धि-

[1] वृत्तिश्चाहं—ग. [2] जनकैः—क. ग.

**श्रद्धा**—भट्टा, [1]अण्णाअपरमत्था इत्थिआ वि किं वि विण्णवेमि । पहरिसजोग्गे वि समए किं उणो अप्पा अवमाणिज्जइ । णं अच्चासण्णा खु तुम्हाणं मोक्खसिद्धी ।

(भर्तः, अज्ञातपरमार्था स्त्र्यपि किमपि विज्ञापयापि । प्रहर्षयोग्येऽपि समये किं पुनरात्मा अवमन्यते । नन्वत्यासन्ना खलु युष्माकं मोक्षसिद्धिः ।)

**पुरुषः**—भद्रे, भविष्यत्यपि परमपुरुषार्थे दृष्टिं प्रतिरुणद्धि मे दुर्वारासौ दोषानुवृत्तिः । तथाहि—

**सकृदपि विनतानां सर्वदे सर्वदेहि-**
**न्युपनिषदभिधेये[2] भागधेये विधेये ।**
**विरमति न कदाचिन्मोहतो हा हतोऽहं**
**विषमविषयचिन्तामेदुरा मे दुराशा ॥ ४३ ॥**

प्रभाविलासः

**सकृदिति** । **सर्वदे**; सकलपुरुषार्थप्रदे । **सर्वदेहिनि**; सर्वशरीरिणि । **अवधेये**; ज्ञेये । **भागधेये विधेये**; देवे वश्ये सत्यपि । **मे दुराशा**

प्रभावली

पूर्वकृतैः पापराशिभिः । परमपुरुषध्यानस्तोत्रादिभिः परिहृतव्यर्थकालक्षेपः सन् फलसिद्धिं प्रतिपालयामि ॥ ४२ ॥

भट्ट-भर्तः । **अण्णाअपरमत्था**-अज्ञातपरमार्था । **इत्थिआ वि**-स्त्र्यपि । **किं वि**-किमपि । **विण्णवेमि**-विज्ञापयामि । **पहरिसजोग्गे वि**-प्रहर्षयोग्येऽपि । **समए**-समये । **किं पुणो**-किं पुनः । **अप्पा**-आत्मा । **अवमाणिज्जइ**-अवमन्यते । त्वयेति शेषः । **णं**-नूनम् । **अच्चासण्णा खु**-अत्यासन्ना खलु । **तुम्हाणं**-युष्माकम् । **मोक्खसिद्धी** मोक्षसिद्धिः । दोषानुवृत्तौ ज्ञानप्रतिरोधमुपपादयति—**तथाहीति** । सकृत्प्रपन्नानां सर्वफलप्रदत्वेनोपनिषत्प्रसिद्धे सर्वशरीरिणि भगवति

[1] अमुणिअ—ख.

[2] अवधेये इति प्रभाविलासपाठः ।

**श्रद्धा**—भट्टा, बालिसबुद्धि अहअं किं वो[1] पडिभणामि? तह वि तरलसहावाए मए भणिज्जइ। चिरगअं वि उत्तंतं एण्हिं[2] वि चिंताहिं आअड्ढिऊण भट्टिणा अप्पा विलपज्जइ।

(भर्तः, बालिशबुद्धिरहं किं वः प्रतिभणामि? तथापि तरलस्वभावया मया भण्यते। चिरगतमपि वृत्तान्तमिदानीमपि चिन्ताभिराकृष्य भर्त्रा आत्मा विलप्यते।)

**पुरुषः**—अयि सूनृतवादिनि श्रद्धे, कीदृशः पुनरनागतः प्रारब्धकर्मफलप्रवाहो भविष्यतीति नित्यं बिभेति मे चेतः। अथवा किमनया निरर्थकचिन्तया? अच्छिद्रपरभजनयोगिना तु मया नित्यमवहितेन वर्तितव्यम्। तत्र च,

**मृत्युरद्येति विदुषा यत्कर्तव्यं[3] हितैषिणा।**
**तदेव नित्यं कर्तव्यमनिर्धारितमृत्युना॥ ४४॥**

प्रभाविलासः

**न विरमति**। अत्र हेतुमाह—विषमेति। **मोहतः**; मोहाद्धेतोः। **हतोऽस्मि**। हेति खेदे॥ ४३॥

**अयीत्यादि**। **अनागतः**; भविष्यन्। **अच्छिद्रम्**; निरन्तरम्। **मृत्युरिति**। अद्यैव मृत्युरिति निश्चये सति, तस्मिन् काले **यदास्थेयं**

प्रभावली

शरणागतपरतन्त्रे सत्यपि दुराशा विषमाणां विषयाणां चिन्तया मांसला सती कदाचिदपि न विरमति; न निवर्तते। हा हतोऽस्मि॥ ४३॥

भट्टा-भर्तः। बालिशबुद्धि-बालिशबुद्धिः। अहअं-अहम्। किं वो-किं वः। पडिभणामि-प्रतिभणामि। तह वि-तथापि। तरलसहावाए-तरलस्वभावया। मए-मया। भणिज्जइ-भण्यते। चिरगअं वि-चिरगतमपि। उत्तंतं-वृत्तान्तम्।

[1] किं वा—ग. [2] दणिं—ख. [3] यदास्थेयं क. छ.

**श्रद्धा**—एव्वं वि, पडिऊलचिंता भट्टिणा ण कादव्वा। अज्ज वा परं वा मोक्खो होहित्ति[1] विस्सद्धहिअएण होदव्वं।

(एवमपि प्रतिकूलचिन्ता भर्त्रा न कर्तव्या। अद्य वा परं वा मोक्षो भविष्यतीति विस्रब्धहृदयेन भवितव्यम्।)

**पुरुषः**—भद्रे, साधु भवत्या संस्मारितोऽस्मि यत्तदाम्नातम्—"[2]इति यस्य स्याच्छ्रद्धा न विचिकित्सास्ति" इति। तद्भवती मद्विमोक्षणैकतानमनसो विष्णुभक्त्याः सकाशं गत्वा ममेदृशीमवस्थामावेदय।

### प्रभाविलासः

यत्कर्तव्यं, तदेव नित्यं कर्तव्यम्। कुत इत्यत आह—**अनिर्धारितेति**। मृत्युकालस्य निश्चेतुमशक्यत्वादित्यर्थः॥ ४४॥

**विस्सद्धहिअएण होदव्वमिति**। अत्र प्रयोजनस्थिरीकरणात् कृतिर्नाम निर्वहणसंधेरङ्गमुक्तम्,। "स्थिरीकरणमर्थस्य लब्धस्य कृतिरुच्यते" इति लक्षणात्। **भद्रे इत्यादि**। "इति यस्य स्याच्छ्रद्धा न विचिकित्सास्ति"

### प्रभावली

**दाणिं वि**-इदानीमपि। **चिंताहिं**-चिन्ताभिः। **आअड्ढिऊण**-आकृष्य। **भट्टिणा**-भर्त्रा। **अप्पा**-आत्मा। **विलपज्जइ**-विलप्यते। **अत्र चेति**। अत्र; परभजने। मृत्युर्भविष्यतीति ज्ञानवता यदनुष्ठेयं, तदेवानिश्चितमृत्युनाप्यनुष्ठेयम्॥ ४४॥

एव्वं वि-एवमपि। **पडिऊलचिंता**-प्रतिकूलचिन्ता। **भट्टिणा**-भर्त्रा। **ण कादव्वा**-न कर्तव्या। **अज्ज वा**-अद्य वा। **परं वा**-परं वा। **मोक्खो**-मोक्षः। होहित्ति-भविष्यतीति। **विस्सद्धहिअएण**-विस्रब्धहृदयेन। होदव्वं-भवितव्यम्। **यत्तदाम्नातं** तत्साधु संस्मारितोऽस्मीत्यन्वयः। आम्नायं दर्शयति—**यस्य स्यादिति**। अयमर्थः—यस्य पुंसः श्रद्धा निश्चय एव। **न विचिकित्सा** न संदेहः, मोक्षसंशयो नास्तीति। अथ श्रद्धायाः कर्तव्यमुपदिशति—**तद्भवतीति**।

[1] होत्तित्ति—क. [2] इति omitted—क.

श्रद्धा—जं भट्टा आणवेइ ।

(यद्भर्ता आज्ञापयति ।)

(इति निष्क्रान्ता)

पुरुषः—(विचिन्त्य साभिलाषमिव स्थित्वा) नाद्यापि तावत्

पितृपथघटीयन्त्रारोहावरोहपरिभ्रमै[1]-
निरयपदवीयातायातक्रमैश्च निरन्तरैः ।
अधिगतपरिश्रान्तीनाज्ञाधरैरतिवाह्य नः
सुखयति निजच्छायादायी स्वयं हरिचन्दनः ॥ ४५ ॥

प्रभाविलासः

इति श्रुतिः । अस्या अयमर्थः—इति पूर्वोक्तप्रकारेण यस्य पुरुषस्य अद्धा अञ्जसा विचिकित्सा संशयः नास्तीति । **पितृपथेति** । पितृपथो नामागस्त्यमण्डलाजवीथ्योर्मध्यमो वैश्वानरात् बहिर्भूतो मार्गविशेषः । तदुक्तम्—

"उत्तरं यदगस्त्यस्य अजवीथ्याश्च दक्षिणम् ।
पितृयानः स वै पन्था वैश्वानरपथाद्बहिः ॥"

इति । अयमेव धूमादिमार्ग इत्युच्यते । **निरयपदवी**; नरकमार्गः । सा चोक्ताश्वमेधिके—

"अष्टाशीतिसहस्राणि योजनानां युधिष्ठिर ।
मानुषस्य च लोकस्य यमलोकस्य चान्तरम् ।
न तत्र वृक्षच्छाया वा वाप्यो वा न च दीपिका ।
न ग्रामो नाश्रमो वापि नोद्यानं काननानि वा ।

प्रभावली

जं भट्टा आणवेइ-यद्भर्ता आज्ञापयति । मोक्ष इव नाद्यापि सुखयतीत्यन्वयः । **पितृपथघटीति** । पितृयानमेव घटीयन्त्रम्, तदारोहावरोहपरिभ्रमणैः निरन्तरैः

[1] परिश्रमैः—क.

संकल्पः—(सहर्षम्) अवधारितस्वभावोऽय[1]मस्मत्स्वामिसंमतोऽनन्यभक्तिः[2]।

मिथ्यादृष्टिमुखैर्विवेकमुषितैरस्पृष्टधीः कश्मलै-
रुत्तीर्य प्रतिबुद्धदोषचिदचिद्भोगस्पृहाकर्दमात्।
निध्यानस्थिरदर्पणप्रतिफलन्नैःश्रेयसश्रीरसा-
वद्य प्रत्यवपत्तुमिच्छति भवाकूपारपारस्थलीम् ॥ ४६ ॥

प्रभाविलासः

न किंचिद्विश्रमस्थानं पथि तस्मिन्युधिष्ठिर।
कण्टकाकीर्णमार्गेण तप्तवालुकपांसुना।
दह्यमानास्तु गच्छन्ति नरा दानविवर्जिताः ॥"

इति। **आज्ञाधरैः**; अर्चिरादिभिः। **अतिवाह्य**; गमयित्वा। **निजच्छाया**; आत्मसाम्यम्। हरिरिति चन्दनः। वृक्षोऽपि श्रान्तानां छायादायीति प्रसिद्धिः। अत्र,

"इति संसारदुःखार्ततापतापितचेतसाम्।
विमुक्तिपादपच्छायामृते कुत्र सुखं भवेत् ॥"

इति श्रीविष्णुपुराणवचनम्, "वासुदेवतरुच्छाया नातिशीता न घर्मदा" इत्यादि च स्मारितम् ॥ ४५ ॥

**मिथ्येति। मिथ्यादृष्टिः**; नास्तिकता। **प्रत्यवपत्तुम्**; प्राप्तुम् ॥ ४६ ॥

प्रभावली

**निरयपदव्या यातायातक्रमैः** ॥ ४९ ॥

प्राप्तिरूपावस्थादर्शनात् सहर्षम्। क्रमेण योग्यतामापन्नोऽयं मोक्षं वाञ्छतीत्याह—**मिथ्यादृष्टीति**। विवेकसंहृतत्वात् मिथ्याज्ञानादिविरोधिभिः **अस्पृष्टा** अप्रतिबद्धा **धीः** यस्य सः। **प्रतिबुद्धदोषे चिदचिद्भोगे**; चिद्भोग

[1] स्वभावोऽसौ—क. [2] भक्तः—ख.

अपिच,

**प्रगुणवृत्तिरपथ्यपराङ्मुखः कृपणचित्तहरैर्व्यसनग्रहैः ।**
**अयमपत्रपते निरुपप्लवः परगतैरपि दृष्टपरावरः ॥ ४७ ॥**

अहह कति कति जगति सन्ति कर्मिणो योगिनस्तपस्विनश्च ? [1]न तेषु कस्यचिदेतादृशः स्वभावः—

**कम्पन्ते यमकिंकराः स्वयमसौ कालश्च सर्वंकषः**
**शङ्कन्ते किल निर्जरा निजपदावष्टम्भनं पाक्षिकम् ।**
**रक्षोदानवयक्षगुह्यकमुखा धावन्त्यतो दूरतः**
**पद्मावल्लभपादपद्मयुगलप्रत्यर्पितस्वात्मनः ॥ ४८ ॥**

### प्रभाविलासः

**प्रगुणेति** । **अपथ्यपराङ्मुखः** ; स्वर्गादिकामनाविमुखः । **निरुपप्लवः** ; अणिमादियोगान्तरायरहितः । **व्यसनग्रहैः** ; दुर्विषयाभिलाषग्रहैः ॥ ४७ ॥

**कम्पन्त इति** । अत्र,

### प्रभावली

आत्मानुभवः, अचिद्भोगः स्वर्गादिः । स्पृहैव कर्दमः, तस्मादुत्तीर्य **निध्यानम्** उपासनं ब्रह्मसाक्षात्कारः, तदेव दर्पणं, तत्र **प्रतिफलन्ती मोक्षसंपत्** यस्य । उपासने ब्रह्मसाक्षात्कारसुखानुमितमोक्षसंपदित्यर्थः । एवं क्रमेण योग्यो भूत्वा **अद्य** संसारसमुद्रस्य **पारस्थलीं** परमपदं प्रत्यवपत्तुं प्राप्तुमिच्छति ॥ ४६ ॥

मोक्षयोग्यतान्तरमप्यस्य वर्णयति—**प्रगुणेति** । दृष्टपरावरत्वात् **प्रकृष्टगुणा वृत्तिर्यस्य** । **अपथ्ये** निषिद्धकाम्ये **पराङ्मुखः** । एवं **निरुपप्लवोऽयं परपुरुषगतैरपि कृपणचित्तहरैः** कृपणचित्तापहरणसमर्थैः । **व्यसनान्येव ग्रहाः**, तैः पिशाचैः **अपत्रपते** ॥ ४७ ॥

अथास्य माहात्म्यं वक्ति—**अहहेति** । **कति कति** ; बहव इत्यर्थः । **कर्मिणः** ; ज्ञानयोगपराः । **तपस्विनः** ; उपासकाः । तेषु कस्यचिदप्येतादृशस्वभावो नास्ति । तदेव दर्शयति—**कम्पन्त इति** । **सर्वंकषः** ; ब्रह्मरुद्रादि-

[1] न तेषु कश्चिदेतादृशः—ग.

अपिच,

**यत्राप्यसौ सुकृतिभिर्विदितानुभावै-**
**रभ्यर्चितो जनपदे निवसत्यनन्यः ।**
**सिद्धाश्रमप्रतिनिधाविह सर्वे एते**
**निर्व्याधयश्च विचरन्ति निराधयश्च ॥ ४९ ॥**

**प्रभाविलासः**

"सर्पं दृष्ट्वा यथा लोके दर्दुरा भयविह्वलाः ।
ऊर्ध्वपुण्ड्राङ्कितं तद्वत्कम्पन्ते यमकिङ्कराः ॥"

इति स्मारितम् । रक्षोदानवादिभयहेतुत्वमुक्तमष्टाक्षरब्रह्मविद्यायाम्—

"भूतवेतालरक्षांसि तथा रोगापमृत्यवः ।
अष्टाक्षरस्य संस्मृत्या विद्रवन्ति दिशो दश ॥
देवदानवगन्धर्वसिद्धविद्याधरादयः ।
प्रणमन्ति महात्मानमष्टाक्षरविदं नरम् ॥"

इत्यादि ॥ ४८ ॥

**सिद्धाश्रमः**; कर्मसिद्धिहेतुराश्रमविशेषः । तदुक्तं बालकाण्डे—

"अयं सिद्धाश्रमो नाम प्रसादात्ते भविष्यति ।
सिद्धे कर्मणि देवेश उत्तिष्ठ भगवन्नितः ॥"

इति । तस्य **प्रतिनिधौ** सदृशे । **सर्वे निर्व्याधयः**; नीरोगाः । **निरामयाः**; निरातङ्काः । अत्र,

**प्रभावली**

सकलसंहारकः । **कालः**; कालाधिष्ठानदेवता च बिभेति । **पद्मावल्लभपादपद्मयुगले न्यस्तस्वरक्षाभरस्य** ॥ ४८ ॥

यत्रासौ वर्तते तत्रस्थाः सर्वे व्याध्यादिरहिताः सुखं तिष्ठन्तीत्याह— **अपिचेति** । **यत्र**; देशे । **असौ**; पुरुषः । स्वानुभाववेदिभिः **सुकृतिभिः**

अहो नु खल्वमुष्य परमपुरुषप्रीतितोऽपि तद्भक्तप्रीतिरतिशेते[1] । इत्थं किलास्य नियतमालापः—

**नाथे नस्तृणमन्यदन्यदपि वा तन्नाभिनालिकिनी-**
**नालीकस्पृहणीयसौरभमुचा वाचा न याचामहे ।**
**शुद्धानां तु लभेमहि स्थिरधियां शुद्धान्तसिद्धान्तिनां**
**मुक्तैश्वर्यदिनप्रभातसमयासत्तिं प्रसत्तिं मुहुः ॥ ५० ॥**

प्रभाविलासः

"यत्राष्टाक्षरसंसिद्धो महाभागो महीयते ।
न तत्र संचरिष्यन्ति व्याधिदुर्भिक्षतस्कराः ॥"

इति स्मारितम् ॥ ४९ ॥

**तद्भक्तप्रीतिरतिशेत इति ;**

"आराधनानां सर्वेषां विष्णोराराधनं परम् ।
तस्मात्परतरं प्रोक्तं तदीयाराधनं परम् ॥"

इति, "मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत्" इति च स्मारितम् । **नाथ इति । नः ;** अस्माकम् । **नाथे ;** स्वतः पुरुषार्थतया नाथनीये सति । **अन्यत् ;** कैवल्यान्तं यत् तत्सर्वम् । **तृणम् ;** "तृणं ब्रह्मविदो विश्वम्" इति स्मरणात् । **अन्यदपि ;** ब्रह्मणः प्राप्त्यादिरूपम् । **तन्नाभिनालिकीनीनालीकेन ;** पद्मनाभनाभिकमलिनीकमलेन । **स्पृहणीयं**

प्रभावली

**अभ्यर्चितो वसति ।** सिद्धाश्रमतुल्ये वामनाश्रमतुल्ये स्थिताः सर्वे जना निरामयाः तस्करादिपीडारहिताश्चरन्तीति ॥ ४९ ॥

अस्य भगवतो भागवतेषु प्रीतिरधिकेत्याह—**अहो इति** । तत्र लिङ्गं तदालापं दर्शयति—**नाथ इति** । नः नाथे ; सकलफलप्रदेऽपि । तृणम् ; तृणसमम् । भगवतोऽन्यत् वस्त्वपि वा । अथवा अन्यदपि ; ब्रह्मानुभवमपि ।

[1] शोभते—क.

## प्रभाविलासः

**सौरभं मुञ्चतीति** तथोक्तया । स्वनिकेतनचतुर्वदनसरस्वतीतोऽप्यतिविस्मयनीयविद्यावत्त्वेन वाक्सौरभस्य नालीकेन स्पृहणीयत्वं, साक्षाद्भगवत्संबन्धे सत्यपि पृथगीशमानिदेवताविशेषतया स्वस्याकारत्रयसंपत्त्यभावात संपन्नवाक्सौरभ्यस्पृहणीयत्वं वेति द्रष्टव्यम् । अत्र,

"तुलायाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥"

इति प्रथमस्कन्धोक्तमनुसंधेयम् । **शुद्धानाम्**; शुद्धान्तःकरणानाम् । अत एव **स्थिरधियां शुद्धान्तसिद्धान्तिनाम्**; शुद्धः अन्तो निश्चयो यस्य, स चासौ सिद्धान्तश्चेति, तद्वताम् । यद्वा शुद्धाः कामोपधापरिशुद्धाः अन्ते समीपे रक्षका यस्येति । शुद्धान्त इत्यन्तःपुरमुच्यते । "सप्तमीविशेषणे बहुव्रीहौ" इति पूर्वनिपाते प्राप्ते आहिताग्न्यादित्वात् परनिपातः । तेन लक्षणया अन्तःपुरवासिनी श्रीर्लक्ष्यते । तस्याः सिद्धान्तः पारतन्त्र्यं पुरुषकारत्वं वा एषामस्तीति तथोक्तानाम् । **आसत्तिम्**; आसन्नत्वम् । प्रसत्तिं मुहुर्लभेमहि । अत्र

"सिद्धिर्भवति वा नेति संशयोऽच्युतसेविनाम ।
निःसंशयस्तु तद्भक्तपरिचर्यारतात्मनाम ॥"

इत्यादिकं द्रष्टव्यम् ॥ ५० ॥

## प्रभावली

भगवन्नाभिः, सैव नालीकिनी, तत्र स्थितं यन्नालीकं पद्मं, तद्याचनीयम् । किं तत्राह—**शुद्धानामिति** । **दृढधियाम्**; दृढाध्यवसायानाम् । **शुद्धः अन्तः** निश्चयः यः, स शुद्धान्तसिद्धान्तः, तद्वताम् । यद्वा—शुद्धान्तसिद्धान्तः; **अन्तः**-पुरभोगः, तद्वताम्; लक्ष्मीसमानभोगानामित्यर्थः । तेषां प्रसादं मुहुर्लभेमहि । **इदमेव** नो मुहुर्याच्यमिति भावः । कीदृशम्? **मुक्तैश्वर्यपरिपूर्णदिनं**, तस्य **प्रभातसमयः**, तस्यासत्ति समीपवर्तिनीं, तत्सदृशीमित्यर्थः । **मोक्षदिनस्य भागवतप्रसादः प्रभातस्थानीयः** ॥ ५० ॥

तदेनमतिगाढसमाधिसंश्लेषादमृतजलधिनिहितमकरन्दबिन्दुवदविभक्तमिव [1]भगवत्यवस्थितमनन्ययोगिनमनन्यं बहु मन्यमानः[2] स्वयमपि धन्यो भवितुमिच्छामि। (सहर्षबहुमानमुपसृत्य) महात्मन्, आश्चर्यचर्योऽसि धन्योऽसि परमपुरुषदास्यप्रियस्त्वम्[3]।

पुरुषः—(सहर्षसंभ्रमसाध्वसमुत्थाय तत्प्रभावपरवशः प्रणिपत्य प्राञ्जलिस्तिष्ठन्) भगवन्,

**अनवधिकवैभवं त्वामवधारयितुं न पारयति चेतः।**
**आद्यः स एव भगवानथवा तस्य त्वमन्तरङ्गतमः॥ ५१॥**

संकल्पः—महाभाग, अहं किल परमपुरुषसंकल्पः परमैकान्तिपरिषदग्रगण्यमनन्तसुकृतदुष्कृतनिगलयुगलविगलनपूर्वि -

प्रभाविलासः

**अनन्तसुकृतेत्यादि**; अभ्युपगतप्रारब्धव्यतिरिक्तसुकृतदुष्कृतविगलनमभिप्रेतम्। अत्र सर्वत्र भगवत्कृपैव निदानमित्याह—**कृपयेति**। तदुक्तम्—

" तत्तेऽनुकम्पां प्रसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम्।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक्॥"

इति॥ ५१॥

**प्रभावली**

एवं परमपुरुषमुपस्तुत्य तं मोचयन्नहमपि धन्यो भविष्यामीत्याह—**तदेनमिति**। समाधिरूपविशेषात् भगवति युक्तं संप्रयुक्तमिव स्थितम्। अनन्ययोगवन्तम्। अनन्यम्; न अन्यप्रयोजनं यस्य। अनन्यप्रयोजनं तम्॥ ५१॥

अथ संकल्पः कुशलप्रश्नपूर्वकं भगवत्प्रसादपात्रस्य ते किं दुर्लभमिति पुरुषं

[1] भगवतावस्थितम्—क. [2] अनन्यं नीयमनः—ख, छ.
[3] दास्यप्रियोऽसि—क.

कया परमपदपर्यङ्कपरिष्कारपरब्रह्मसेवापर्यन्तया भक्तिपरिपाकसंपदा संघटयितुं तदेकवल्लभया कृपणजनविषयकृतपक्षपातया कृपया नियुक्तश्चिरप्रार्थितदर्शनं भवन्तमुपगच्छामि । तदिह निकटवर्तिन्यां निःश्रेयससंपदि निर्विशङ्केन भवता भवितव्यम् । अद्य च,

**कच्चित्क्षिप्तरजस्तमस्कमधुना सत्त्वं समुज्जृम्भते**
**कच्चिन्मोचितविप्लवश्च[1] करणग्रामो वशे तिष्ठति ।**
**कच्चित्संघटते समाधिरनघः कच्चित्प्रसन्नं मनः**
**किं वा कैटभकण्टकस्य कृपया जुष्टस्य ते दुर्घटम् ॥ ५२ ॥**

**पुरुषः**—(सहर्षगद्गदम्) अहो नु खलु धन्योऽयमनन्यशरणो जनः, यमेनमनिदंप्रथमसंपदा भगवदनुकम्पया प्रचोदितस्तत्र-

**प्रभाविलासः**

**कच्चिदिति** । अनभिसंहितफलकर्मानुष्ठानाविच्छेदं फलेन **पृच्छति-क्षिप्तेति** । तदुक्तम् —

"धर्मो रजस्तमो हन्यात्सत्त्ववृद्धिरनुत्तमा ।
आशु नश्यति तन्मूलो ह्यधर्म उभये हते ॥"

इति ॥ ५२ ॥

**प्रभावली**

प्रशंसति—**कच्चिदिति** । भो सौम्य, ते सत्त्वगुणः निरस्तरजस्तमस्कः समुज्जृम्भते कच्चित । विप्लवेभ्यो मोचितो यो भवतः करणग्रामः वशे तिष्ठति किमु ? अनघः विघ्नरहितः समाधिः संघटते प्रतिदिनमनुवर्तते कच्चित् । मनश्च प्रसन्नं कच्चित् । किं पृच्छयते । कैटभजितः कृपया जुष्टस्य तव दुर्लभं किं वा; न किमपीति भावः । किं तु प्रयोजनं मोक्ष इति भावः ॥ ५२ ॥

[1] विभ्रमश्च—ख.

भवान् प्रसीदन् प्रेक्षते । कश्च त्वदीक्षितः समीहितसिद्धौ संदिग्धे? निर्धारितश्च निगमान्तनिरूढबुद्धिभिस्त्वदनुभावः—

**यस्याज्ञा विबुधेन्द्रमौलिवलभीवास्तव्यपारावती**
**यद्भ्रूविभ्रमकिंकरी विधिशिवस्वस्थानसुस्थासिका ।**
**ब्रह्मस्तम्बधुरंधरेण मुरभित्संकल्पभूम्ना त्वया**
**कस्मिन्किं नु न जाघटीति न च किं कस्मिन्न जाघट्यते ॥५३॥**

**प्रभाविलासः**

**यस्येति** । **पारावती**; पक्षिविशेषः । **यद्भ्रूविभ्रमेति** । ब्रह्मादीनां भ्रूविभ्रमाधीनत्वं भागवत उक्तम्—

"त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव
आत्मात्मदश्च जगतामिति मे वृतोऽसि ।
हित्वा भवद्भ्रुव उदीरितकालवेग-
ध्वस्ताशिषोऽब्जभवनाकपतीन् कुतोऽन्ये ॥"

इति । **ब्रह्मस्तम्बः**; देवमनुष्यादिबहुप्ररोहहेतुः । **कस्मिन्** पुरुषे **किं वस्तु न जाघट्यते**; न संघटते ॥ ५३ ॥

**प्रभावली**

निर्विशङ्केन भवता भवितव्यमित्यस्योत्तरमाह—**कश्चेति** । त्वया कटाक्षितः; त्वद्विशिष्टभगवत्कटाक्षवीक्षित इति भावः । संकल्पप्रभावं प्रकाशयति—**यस्याज्ञेति** । **विबुधेन्द्राः**; ब्रह्मादयः । तन्मौलिरेव वलभिः, तत्र वर्तुंस्शीला पारावती । विधिशिवयोः स्वस्थानं, सत्यलोककैलासादिः; तत्र या **सुस्था आसिका** सुखेन स्थितिः, सा यस्य ते भ्रुकुटीक्षेपप्रेक्षा । आब्रह्मस्तम्बस्य जगतः रक्षणधूर्वहेन, **मुरभित्संकल्पभूम्ना** महामहिमवता त्वया हेतुना, **कस्मिन्** पुरुषे; अतिकृपणेऽपीति भावः । **किं नु**; किं प्रयोजनम्, मोक्षोऽपीति भावः । **न जाघटीति** । यदभिलषितं तत्सर्वं संपत्स्यत एवेति भावः । **न चेति** । तव

**संकल्पः**—(स्वगतम्) प्रष्टव्यः पुनरसौ विशेषतः सांयमिकीं सिद्धिम्। (प्रकाशम्) भद्र, कीदृशी भवत इदानीं कृपणजनदवीयसी कृतमुखसंमुखी समाधिसंपत्तिः?

**पुरुषः**—देव, प्रस्पष्टमनुभूयमानाप्यसौ विशेषतो निर्देष्टुं न शक्यते। तथापि किंचिदावेदयामि—

[1]निरूढनिगमत्रये निखिललोकचिन्तामणौ
प्रसत्तिमधिजग्मुषि प्रणिदधानभावास्पदे।
रतिं भजति भावना लयमिवोपयाति द्रुतं
रमावसुमतीसहाचरितधर्मणि ब्रह्मणि॥ ५४॥

**प्रभाविलासः**

**सांयमिकीम्**; योगसंबन्धिनीम्। **निरूढेति**। **निरूढनिगमत्रये**; निगमत्रयनिरूढे। **प्रणिदधानस्य** पुरुषस्य **भावास्पदे**; ध्यानविषयभूते। **लयम्**; लीनताम्॥ ५४॥

**प्रभावली**

हेतुत्वाभावे इति शेषः। **कस्मिन्** पुरुषे गुणवत्यपि। **किम्**; प्रयोजनम्, न किमपीति भावः। न न जावध्यते; न किमपि घटत इति भावः॥ ९३॥

**संयमः**; समाधिः। तत्संबन्धिनीं सिद्धिम्। **पुनरयं विशेषतः प्रष्टव्यः**। कृपणजनदुर्लभा कुशलजनसुलभा समाधिसिद्धिः। **असौ** समाधिसंपत्तिः **विशेषतः** इत्थमिति वक्तुं **न शक्यते**। **निरूढेति**। निगमत्रयशब्देन सर्वोपनिषदो विवक्षिताः। तत्र प्रसिद्धे सकललोकानां सर्वफलप्रदे। प्रणिदधानानां युञ्जानानां **भावस्य** आश्रयभूते। **रमावसुमतीभ्यां** सहानुष्ठितशरणागतरक्षणधर्मणि। भूम्याः शरणागतरक्षणे सहोक्तिरुपचारात्। तस्मिन् **ब्रह्मणि** प्रसादं प्राप्तवति सति भावना **रतिं** प्रीतिं प्रथमतो भजति। ततः तस्मिन् सक्तं लीनं तथा तथा **लयमुपयातीव**; एकतामापन्नेव॥ ९४॥

[1] निगूढ—ख.

**संकल्पः**—(सहर्षम) महात्मन्, अनन्यलभ्या तवेयमवस्था विस्मयावेधविह्वलं विदधाति मामकं मानसम् । इयं हि—

निवृत्तिरसवासनानिरवशेषितोपप्लवा
परप्रणिधिपद्धतौ धृतिमुपेयुषी शेमुषी ।
द्रुतप्रवरशर्कराभरितदुग्धधाराकृति-
प्रतिक्षणविकल्पनाकलहलङ्घनी वर्तते ॥ ५५ ॥

अपिच,

कवित्वमदकश्मलं कथकदर्पतिग्मज्वरं
विकत्थनमिलद्बहुप्रलपनाभिमानग्रहम् ।
परप्रतिपदर्पणप्रथनयातनां च स्वयं
निवर्त्य निरवग्रहां निभृतवृत्तिमातिष्ठसि ॥ ५६ ॥

प्रभाविलासः

**निवृत्तीति । निवृत्तिरसे**; शान्तरसे **वासनया निरवशेषिताः उपप्लवाः** विषयतृष्णादयः यस्याः सा । **विकल्पनाकलहः**; इदं स्वादुतमम्, इदमितोऽपि स्वादुतममित्येवंरूपः ॥ ५५ ॥

**कवित्वेति ।** पूर्वं ज्ञानोत्पत्तिप्रतिबन्धकीभूतपरपक्षनिरासादिज्ञानाय

**प्रभावली**

इयमवस्था श्रुता मम विस्मयं जनयतीत्याह—**अनन्यलभ्येति** । अन्यैः अनुपक्रान्तयोगैः अलभ्या । **विस्मयावेधेन** व्याकुलितं मामकमपि मानसम् । तत्र हेतुं दर्शयति—**इयं हीति** । यत इयं तव शेमुषी एवं वर्तते, तत इति भावः । निवृत्तिधर्मे रसः प्रीतिः, तद्वासनया निःशेषनष्टोपद्रवा परमात्मविषयसमाधिमार्गे संतोषं धैर्यं वा प्राप्तवती तवेयं बुद्धिः द्रुता विलीना प्रकृष्टा शर्करा तया पूर्णा या दुग्धधारा, तस्या आकृतेः **प्रतिक्षणविकल्पनाकलहम्**; विकल्पनाशब्देन साम्यं लक्ष्यते, समयोरेव प्रायेण विकल्पदर्शनात, यथा व्रीहियवयोः । **लङ्घनी**; परिभावयित्री । द्रुतप्रवरशर्करापूर्णक्षीरधारया अपि परिभावयित्रीत्यर्थः ॥ ५५ ॥

त्वयीदमप्यन्यदस्तीत्याह—**अपिचेति । कवित्वेति** । कवितया यो मदः ।

पुरुषः—देव, [1]भवत्प्रभावसंभवेयं पराङ्मुखस्वभावस्य मे प्रत्यङ्मुखी बुद्धिवृत्तिः। अचिन्त्यप्रभावश्च भवानागमेषु जोघुष्यते—

क्रियाशक्तिं केचिद्दनुजमथनीं[2] हेतिमपरे
मनस्तत्त्वं चान्ये मधुविजयिनस्त्वामभिदधुः।
तमेवैके तत्तत्पदविषयजुष्टं तदिह नः
सदोत्तुङ्गः[3] प्रादुर्भवसि भवसिन्धुप्रमथनः[4] ॥ ५७ ॥

प्रभाविलासः

स्वमतसंरक्षणाद्यर्थं च कवितावादाद्यनुमतिः। इदानीमत्यन्तनिभृतावस्थायां तन्निवृत्तिरिति विशेषः। तदुक्तम्—

"वेदवादरतो न स्यान्न पाषण्डी न हैतुकः।
शुष्कवादविवादेन न किंचित्पक्षमाश्रयेत् ॥"

इति। **विकत्थनम्**; आत्मश्लाघा। **परप्रतिपदर्पणम्**; परेभ्यः शिष्येभ्यः प्रतिपदो ज्ञानस्यार्पणम् उपदेशः। तत्र **प्रथनं** प्रसिद्धिरेव **यातना** तीव्रवेदना। यावत्प्रतिपत्त्युपदेशक्लेशस्य दुःसहतया यातनेत्युक्तिः। अनेन गुणवति शिष्ये संप्रदायगोपनार्थमुपदेशातिरिक्तव्याख्यानप्रसिद्धिर्निरस्ता ॥५६॥

**क्रियेति। केचित्**; पाञ्चरात्रप्रवर्तकेषु केचिदहिर्बुध्न्यादयः। **तत्तत्पद-**

प्रभावली

**कथकाः**; वादिनः। तेषां दर्प एव तापज्वरः। विकत्थनेन आत्मश्लाघनेन **मिलत्** मिश्रितं यत् **बहुप्रलपनम्** असंबद्धप्रलापः, तत्र यः अभिमानः 'अत्र मया सदृशो नास्तीति' अहंकारः। स एव ग्रहः पिशाचः, तं च। **परस्य** शिष्यादेः **प्रतिपदः** बुद्धेः प्रतिपादनम्, व्याख्यानमित्यर्थः, तस्मिन् प्रथनं प्रसिद्धिः, सैव यातना पीडा। तां च परित्यज्य **निरवग्रहाम्**; निरुपद्रवाम्। **निभृतां वृत्तिम्**; पाश्चकालिकीमित्यर्थः। **आतिष्ठसि**; अनुतिष्ठसि ॥ ५६ ॥

परम् अञ्चतीति पराक् अचित्; तत्रैव मुखम् आभिमुख्यं यस्य तस्य मे।

[1] भवत्प्रसाद—छ. [2] मथितुः—ग.
[3] सदोत्तुङ्गेति संबुद्ध्यन्तः प्रभावलीपाठः [4] प्रशमनः—क.

संकल्पः—भद्र, अप्रत्यूहस्त्वयि भगवत इदानीमनघः प्रसादः। अहमपि तदनुप्लवः। ततश्च,

**निरपायमुख्यरागं निजपक्षनिविष्टनित्यहरितत्त्वम्।**
**गुणपञ्जरस्थितं त्वां शुकमिव मोक्ष्यामि दिव्यगतियोग्यम् ॥५८॥**

### प्रभाविलासः

**विषयजुष्टम्**; तत्तत्पदप्रवृत्तिनिमित्तयुक्तम। **तमेव**; मधुविजयिनमेव ॥५७॥

**निरपायेति**। **निरपायः मुख्ये** पुरुषोत्तमे **रागः** प्रीतिर्यस्य सः। पुरुषे व्याससुते च समानमेतत्। कीरे तु—मुखे भवो मुख्यः। रागः रक्तिमा। **निजपक्षे**; स्वपक्षे। **निविष्टं नित्यहरितत्त्वम्**; हरिरिति तत्त्वम्। तुल्यमुभयत्र, "हरिर्दैवं शिवो दैवं भास्करो दैवमित्यपि" इति बहुपक्षव्याकुलितं परीक्षितं प्रति हरिरेव तत्त्वमिति निर्णयात्। कीरे तु—निजपक्षयोर्निविष्टं हरितत्त्वं पलाशवर्णत्वम। **गुणाः** शमदमादय एव पञ्जरः। यद्वा गुणाः सत्त्वादयः, तैः कृतः पञ्जरः शरीरं, तत्र स्थितम्। अन्यत्र गुणाः तन्तवः, तद्रचितः पञ्जरः। **दिव्यगतिः**; दिव्या अपुनरावृत्तिर्गतिः

### प्रभावली

**इयं प्रत्यङ्मुखी** आत्मपरमात्माभिमुखी **बुद्धेर्वृत्तिः भवत्प्रसादसंभवा; न** त्वन्यायत्तसाध्या। **अचिन्त्यप्रभावतया आगमेषु** श्रीपाञ्चरात्रादिषु वेदान्तेषु वा "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" इत्यादिभिः प्रख्याप्यते। तदेव दर्शयति—**क्रियाशक्तिमिति**। **क्रियाशक्तिं केचित्** संहिताप्रणेतारः भगवतो जगत्सृष्ट्यादिसामर्थ्यं त्वाम अभिदधुः। **अन्ये तु मनस्तत्त्वम्**। **तत्तत्पदविषयजुष्टम्**; तत्तत्पदार्थेन क्रियाशक्त्यादिना जुष्टं विशिष्टम् **तमेव**; मधुविजयिनमेव आहुः। हे सदोत्तुङ्ग, त्वं नः भवसिन्धुप्रमथनः ॥ ५७ ॥

**तदनुप्लवः**; तदनुचरः। पञ्जरस्थशुकमिव त्वां संसारान्मोचयिष्यामीत्याह—**निरपायेति**। निरपायो जगन्मुख्ये रागो यस्य। अन्यत्र मुख्यः मुखसंबन्धी निरपायो रक्तिमा यस्य। निजपक्षेषु भागवतेषु निविष्टम् अभिनिविष्टं हरिरूपतत्त्वं यस्य। अन्यत्र स्वपत्रे प्रविष्टं हरितवर्णत्वं यस्य। **गुणाः**;

शृणु चेदानीमागामिनीमनन्यलभ्यामपवर्गसिद्धिम् —

**निर्णिक्तत्रिगुणाञ्जनस्य परमब्रह्मोपसंपत्तितः**
**प्रादुर्भूतगुणाष्टकस्य च परं[1] साधर्म्यमभ्येयुषः ।**
**पारावर्यविभागलक्षणपरित्यागप्रसङ्गोज्झिता**
**शेषादेरिव शेषवृत्तिरपि ते सत्तावधिः सेत्स्यति ॥ ५९ ॥**

**प्रभाविलासः**

अर्चिरादिः, तस्याः योग्यम् । अन्यत्राकाशगमनम् । **शुकमिव**; व्याससुतमिव, "शुको मुक्तो वामदेवो वा" इति श्रुतेः । अन्यत्र कीरमिव । "शुकः कीरे व्याससुते रावणस्य च मन्त्रिणि" इति निघण्टुः ॥ ५८ ॥

**निर्णिक्तेति । निर्णिक्तम्**; मृष्टम् । **त्रिगुणा**; प्रकृतिः । सैव **अञ्जनं** यस्य । अनेन "निरञ्जनम्" इति श्रुतिप्रतीको विवृतः । **परमं साधर्म्यमिति**; "शरवत्तन्मयो भवेत्" "ब्रह्मैव भवति" "ब्रह्मणो महिमानमाप्नोति" "ब्रह्मणः सायुज्यं गच्छति" "परमं साम्यमुपैति" इत्यादिप्रतीका व्याख्याताः । साधर्म्यमेवाह—**प्रादुर्भूतेति । गुणाष्टकम्**; अपहतपाप्मत्वादिकम् । **आविर्भावः**; अभिव्यक्तिः, "स्वेन रूपेणाभिनिष्पद्यते" इति श्रुतेः । प्रादुर्भावे हेतुमाह—**परमब्रह्मेति** । तेन "परं

**प्रभावली**

सत्त्वरजस्तमांसि । तेन त्रिगुणं प्रधानं लक्ष्यते । प्रकृतिपञ्जरस्थितम् । **अन्यत्र** पाशमयपञ्जरस्थितं शुकमिव दिव्यगतियोग्यं यथा तथा मोक्ष्यामि ॥ ५८ ॥

**आगामिनीम्**; चिरभाविनीम् । अपवर्गसिद्धिं विविच्य दर्शयति—**निर्णिक्तेति । निर्णिक्तम्**; क्षालितम् । **त्रिगुणा**; प्रकृतिः । सैवाञ्जनम् । निर्धूतसूक्ष्मशरीरस्येत्यर्थः । **परब्रह्मणः**; श्रीवैकुण्ठनिलयस्य उपसंपत्त्या । **प्रादुर्भूतगुणाष्टकस्य**; गुणाः अपहतपाप्मत्वादयः । अत्र "स एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुत्यर्थो

[1] परमं—ग.

अपिच,

सुहृदस्तवाददीरन् सुकृतफलं[1] यत्त्वया परित्यक्तम् ।
दुष्कृतफलं[1] द्विषन्तः प्रारब्धान्ते परं पदं विशतः ॥ ६० ॥

प्रभाविलासः

ब्रह्मोपसंपद्य" इत्यवयवो व्याख्यातः । अनेन नैयायिकाद्यभिमतपाषाणकल्पतादिमुक्तिव्यावृत्तिः । पारावर्यविभागस्य परावरभेदस्य यत् लक्षणं श्रियःपतित्वशेषित्वशेषत्वादिकं, तस्य परित्यागप्रसङ्गोज्झिता । अनेन शिवसाम्यं स्वातन्त्र्ययुक्तमुक्तिरित्यादिव्यावृत्तिः । शेषादेरिति; "तद्विप्रासो विपन्यवो जागृवांसः समिन्धते" इति श्रुतिविवरणम् । सत्तावधिरिति; "सदा पश्यन्ति" इति विवृतम् । अनेन स्वर्गादिव्यावृत्तिः । शेषवृत्तिः; शेषस्य परार्थस्य, परगतातिशयाधानेच्छयोपादेयस्येत्यर्थः । वृत्तिः; वर्तनम् । "शेषः परार्थत्वात्" इति सूत्रितत्वात् । अनेन कैवल्यव्यावृत्तिः, केवलस्य स्वतन्त्रोपासकत्वात् ॥ ५९ ॥

सुहृद इति । "सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति श्रुतिः ।

प्रभावली

दर्शितः । परमं साधर्म्यम्; "निरञ्जनः परं साम्यमुपैति" इत्युक्तम् । अभ्येयुषः; प्राप्तस्य । जगद्व्यापारवर्जमिति सूत्रितत्वात् परमं साम्यं ज्ञानभोगाभ्यामेवेत्यभिप्रायेणाह— पारावर्येति । पारावर्यविभागः परावरतत्त्वविभागः, स एव लक्षणम् । विभागस्य वा लक्षणं चिह्नं जगद्व्यापारभावाभावौ, तत्परित्यागप्रसङ्गरहिता । शेषगरुडविष्वक्सेनादीनामिव ते तवापि शेषवृत्तिः कैंकर्यं, सत्ता आत्मसत्तेति यावत्, यावदात्मसत्तं सेत्स्यति संपत्स्यते । यावदात्मभाविनीति भावः ॥ ५९ ॥

किंच प्रारब्धान्ते परमपदं प्रविशतस्तव सुहृदः सुकृतस्य फलमाद-

[1] अत्र सुहृद्भिर्द्विषद्भिश्च सुकृतदुष्कृतफलस्यादानवचनेन अश्लेषविनाशाभ्यामुत्तरपूर्वाघयोरभावात् प्रारब्धस्य चानुभाव्यत्वात् कथं श्रुतौ सुकृतदुष्कृतयोः संक्रान्तिवचनमिति शङ्का प्रत्युक्ता, तत्फलस्यैव संक्रान्तेरभिप्रेतत्वात् ।

**पुरुषः**—देव, भवत्प्रसादलभ्यां भाविनीमवस्थां प्रतिबुध्य निरूढहर्षा मुक्तकलिर्नृत्यतीव मे बुद्धिः । [1]अपुनर्भवस्तु भविष्यति न वेति संदिहानमानसो[2] भृशं दूये कथं कल्पितोऽहमिति ।

**वितमसि पदे लक्ष्मीकान्तं विचित्रविभूतिकं**
**सचिवगमितः संपद्याविर्भवत्सहजाकृतिः ।**
**स्फुटतदपृथक्सिद्धिः सिध्यद्गुणाष्टकतत्फलो**
**भजति परमं साम्यं भोगे निवृत्तिकथोज्झितम् ॥ ६१ ॥**

**प्रभाविलासः**

रभिप्रेता । अत्र ब्रह्मवित्सुकृतदुष्कृतयोर्निवृत्तिरेव, "तत्सुकृतदुष्कृते विधूनुते" इति श्रुतेः । परं तु तत्सौहार्दविद्वेषजनिततत्तुल्यपापाद्युक्तिरभिप्रेता । अन्यथा "शास्त्रफलं प्रयोक्तरि" इति न्यायो भज्येतेति संप्रदायः ॥ ६० ॥

**कलिः**; पापम् । **वितमसीति** । **सचिवगमितः**; अर्चिराद्यतिवाहितः ॥ ६१ ॥

**प्रभावली**

दीरन् । द्विषन्तस्तु दुष्कृतस्य फलम् । "तत्सुकृतदुष्कृते धूनुते सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति श्रुत्यर्थो दर्शितः ॥ ६० ॥

त्वयोक्तां भाविनीं दिव्यावस्थां ज्ञात्वा मच्चेतोवृत्तिर्नृत्यन्तीव भातीत्याह—**भवदिति** । **निरूढहर्षा**; प्राप्तहर्षा । कलिशब्देन कलिधर्माः कामादय उच्यन्ते । मुक्तः कलिः यया सा । **अपुनर्भवस्तु**; पुनर्भवाभावस्तु । **दूये**; परितपामि । इह; पुनर्जन्माभावे । **कथं कल्पितः**; पुनर्जन्मरहितत्वेन कल्पितो वा पुनर्जन्मसहितत्वेन वेति । **वितमसीति** । रजस्तमोभ्यां रहिते पदे वैकुण्ठे । **विचित्राः विभूतयो** यस्य तं लक्ष्मीकान्तं **सचिवैः** आतिवाहिकैः **गमितः संपद्य** परं ज्योतिरुपेत्य प्रकाशमानसहजाकृतिः **स्फुटः** करतलामलकवत् प्रत्यक्षितः

[1] पुनर्भवस्तु—ग. [2] संदिहानः—ख.

ततश्च यद्यहमभिज्ञातुमर्हामि तदा ज्ञापयितुमभिवाञ्छामि ।

**संकल्पः**—भद्र, कथं नु भवते प्रदित्सितस्वाराज्याय सिद्धं न संवेद्यते[1] ?

**अवताररहस्यतत्त्ववेदी विबुधग्रामटिकासु[2] वीतरागः ।**
**अपुनर्भवनेन निर्व्यपायं[3] प्रतिगन्तासि परं पदं त्रिधाम्नः ॥ ६२ ॥**

**प्रभाविलासः**

**अवतारेति । रहस्यतत्त्ववेदी ;** "यो जातमस्य महतो महि ब्रवात्" "जन्म कर्म च मे दिव्यम्" इति महिदिव्यशब्दौ विवृतौ । **विबुधग्रामटिकासु ;** पारमेष्ठ्यादिषु । तदुक्तम्—

"न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मां विनान्यत् ॥"

इति । **त्रिधाम्नः ;** त्रीणि क्षीरोदभानुमण्डलौपेन्द्राणि धामानि यस्य तस्य । तदुक्तम्—

**प्रभावली**

**तदविनाभावो** येन सः । **सिध्यत् प्रादुर्भवत् गुणाष्टकम्** अपहतपाप्मत्वादिकं तदात्मकं **तत्फलं** तदपृथक्सिद्धिदर्शनेन तत्फलत्वेन गुणाष्टकमपि सिध्यत्येवेत्यर्थः । **भोगे ;** परिपूर्णब्रह्मानुभवरूपे । परमात्मना **परमं साम्यम्** । कीदृशम्? **निवृत्तिकथा ;** पुनर्जन्मप्रसङ्गः । तद्रहितं, नित्यमित्यर्थः ॥ ६१ ॥

एवमुक्तपुनर्जन्माभावेऽहं कथं कल्पित इत्येतदर्थज्ञापने मम योग्यतास्ति चेत् मत्पक्षे ज्ञापयितुमिच्छामि । त्वया ज्ञापयितव्योऽहम् । **प्रदित्सितस्वाराज्याय भवते** सिद्धिः कथं न संवेद्या? संवेद्यैव । अपुनर्भवे ते संदेहो मास्त्वित्याह । पृष्टमर्थं संवेदयितुमुपक्रमते—**अवतारेति । अवताररहस्यतत्त्वम् ;** अवतारस्य सत्यत्वम्, अजहत्स्वभावता, शुद्धत्वं, सनिदानता, धर्मग्लानिनिवृत्त्यर्थता, इत्येवमादितत्त्ववेदी । विबुधानां ब्रह्मरुद्रादिदेवानां ग्रामेषु वीतरागः सन्

[1] न संवेद्येति प्रभावलीपाठः [2] ग्रामकथासु—क, ख. [3] निर्व्यपायः

श्रद्धत्स्व चैनमपि सत्यवाचो मे सशपथं व्याहारम्—

स्वसेवासार्वभौमत्वं भवते परमात्मना ।
विवेकस्य च वीरस्य यौवराज्यं प्रदित्सितम् ॥ ६३ ॥

अपिच,

मुक्तस्त्वं सकृदेव सांप्रतमितः प्रागुत्तरैः कर्मभिः
प्रत्यक्षाल्परसं परित्यज न वा प्रारब्धभोगं प्रियम् ।
अस्माभिः पुनरादिपूरुषदया देव्या कृतप्रेक्षणै[1]-
स्त्वद्वृत्तान्तसतत्त्वविज्ञपनतः सिद्धास्सदा सेव्यते ॥ ६४ ॥

प्रभाविलासः

"क्षीरोदो मण्डलं भानोरौपेन्द्रं च तथा दिवि ।
त्रीणि धामानि मे सन्ति त्रिधामाहमिति स्मृतः ॥"

इति ॥ ६२ ॥

**स्वसेवेति** । अत्र पुरुषविवेकयोर्बहुमानप्रतीतेर्भाषाख्यं निर्वहणसंधेरङ्गमुक्तम् , "बहुमानादिसंप्राप्तिर्भाषेति परिकीर्तिता" इति लक्षणात् ॥ ६३ ॥

**मुक्त इति । परित्यज न वेति ;** आर्तदृप्तविभागादेवमुक्तिः ॥ ६४ ॥

प्रभावली

पुनर्जन्माभावेन निरपायं त्रिधाम्नः भगवतः परमं पदम् एतद्देहावसान एवावश्यं गमिष्यसि ॥ ६२ ॥

इदमन्यदपि मे भाषितं श्रद्धत्स्वेत्याह—**श्रद्धत्स्वेति** । **श्रद्धत्स्व ;** विश्वसिहि । एनं शपथसहितं **व्याहारम् ;** वचनम् । तत्किमित्यत्राह—**स्वसेवेति** । **परमात्मना स्वसेवायाः सार्वभौमत्वम्** एकाधिपत्यं **तुभ्यं प्रदित्सितम्** । महामोहविजयिनो **विवेकस्य च** स्वसेवाविषये **यौवराज्यं** प्रदित्सितम् । परमपदे विवेकसहितस्त्वं भगवत्सेवां प्राप्स्यसीति भावः ॥ ६३ ॥

संचितानां कर्मणामानन्त्यात् कथं सशपथं व्याहृतवानसीत्यत्राह—**अपिचेत्यादिना** । **मुक्त इति** । **इतः प्रागुत्तरैः कर्मभिः ;** प्राक्कर्मभिः पूर्वाघैः,

[1] कृतप्रेषणैः इति प्रभावलीपाठः

तदामन्त्रयामि भवन्तम् (इति द्वित्रिपदमतिक्रम्य) विद्यासंतत्यविच्छेदाय जगति [1]विख्यापयामि किंचित्—

भगवति निहितात्मा भागधेये श्रुतीनां
पुरुष इह महात्मा वर्तते भूतधात्र्याम् ।
तदयमवदधानैः सर्वमन्तेवसद्भिः
पृथुमतिभिरभीष्टं पृच्छयतां विश्वदर्शी ॥ ६५ ॥

(इति पुरुषं परिवृत्य पश्यन्निष्क्रान्तः)

**प्रभाविलासः**

भगवतीति । श्रुतीनां भागधेये भगवति निहितात्मा न्यस्तमनाः पुरुषः इह भूतधात्र्यां वर्तते । अभीष्टं वेदान्तरहस्यं पृच्छयताम् । अन्यथा वेदान्तसंप्रदायविच्छेदः स्यादित्यर्थः ॥ ६५ ॥

**प्रभावली**

उत्तरकर्मभिः उत्तराघैः सकृदेव; एककाल एव । त्वं सांप्रतं मुक्तः । एवं सर्वपापविमोकात् मया सशपथं व्याहियत इति भावः । अनेन "अश्व इव रोमाणि विधूय पापम्" इति श्रुत्यर्थो दर्शितः । प्रत्यक्षतः अल्परसम् । अथापि पूर्ववासनया आपाततः प्रियम् । प्रारब्धभोगान्; प्रारब्धकर्मप्रयुक्तफलभोगं, सुखानुभवमित्यर्थः, दुःखानुभवस्य प्रियत्वाभावात् । तं परित्यज्य वा न वा; प्रारब्धभोगानामपरित्यागेऽपि न दोष इति भावः । एवं पुरुषस्य हितोपदेशं स्वकर्तव्यं दर्शयति—अस्माभिरिति । पुनःशब्दस्त्वर्थः । देवी; आश्रितसंरक्षणेन क्रीडन्ती आदिपूरुषस्य दया । कृतप्रेषणैः; अनुष्ठितशासनैः । त्वद्वृत्तान्तसतत्त्वविज्ञपनतः; त्वद्वृत्तान्तस्य सतत्त्वं याथात्म्यं, तद्विज्ञापनात् यथार्थविज्ञापनात् । एवं पुरुषस्य मोक्षो जात इति निवेदनात् सिद्धोत्सवा; संपन्नहर्षेत्यर्थः । अस्माभिः सेव्यते । देव्याः सेवार्थमस्माभिर्गम्यत इत्यर्थः ॥ ६४॥

विद्यायाः संततिः; संप्रदायः । तदविच्छेदाय । जगति; जगद्विषये; निवेदयामि । भगवतीति । श्रुतीनां भागधेये; प्रतिपाद्ये इत्यर्थः । एतत्प्रतिपादनाभावे तासामपार्थत्वापत्तेर्भागधेयत्वोक्तिः । निहितात्मा; न्यस्तात्मभरः । अत एव महात्मा पुरुषोऽयमिह समीपे भूतधात्र्यां भूम्यां वर्तते । तत्;

[1] विज्ञापयामि—ख.

**पुरुषः**—(सहर्षम्) प्रत्यक्षितप्रभावा मयीदानीं विश्रुतपूर्वा विश्वकर्तुरघटितघटनाशक्तिः, यदहमनन्तापराध[1]संततोऽप्यपवर्गहेतुना प्रसादेन परिगृहीतोऽस्मि । किंच,

**यदिह पुरा पुराणपुरुषेण बहिष्करणात्**
**प्रमितविरुद्धवृत्ति विषमं प्रचचार बहिः ।**
**तदिदमहो तमेकमनुभूय रसातिशयात्**
**स्वपिति मनो मदीयमवलिम्पति मुह्यति वा ॥ ६६ ॥**

**प्रभाविलासः**

**अवरोधाः**; विघ्नाः । **यदिहेति** । **यत्**; मनः । **इह**; भुवि । **पुरा**; पूर्वम् । **पुराणपुरुषेण बहिष्करणात् प्रमितविरुद्धवृत्ति**; शास्त्रनिषिद्धाचारवत् । **विषमं** यथा तथा **बहिः** विषयेषु प्रचचार । **तदिदम्**; मनः । **एकम्**; समाभ्यधिकरहितम् । **तम्**; पुराणपुरुषम् । **अनुभूय रसातिशयात्**; आनन्दातिशयपारवश्यादित्यर्थः । **अवलिम्पति**; गर्वमुपयाति ॥ ६६ ॥

**प्रभावली**

तस्मात् । अयं **विश्वदर्शी अवदधानैः** अन्तेवसद्भिः शिष्यैः **पृच्छ्यतां** प्रष्टव्यः ॥ ६९ ॥

स्वस्य सिद्धिविशेषदर्शनात् **सहर्षम्** । **विश्रुतपूर्वा**; पूर्वं विश्रुता । प्रत्यक्षितत्वे लिङ्गान्तरमप्याह—**यदिहेति** । **इह**; जगति । **यदिदं मनो** मदीयं **पुरा**; पूर्वकाले सर्वत्र । **पुराणपुरुषेण बहिष्कृतत्वात् प्रमितविरुद्धवृत्ति**; भगवत्स्वरूपादिषु यत्प्रमितं प्रमाणविषयं, तद्विरुद्धबहिर्विषये वृत्तिर्यस्य तत् । **विषमं** दुष्टं सत् विपरीतं यथा तथा । **बहिर्विषय** एव **प्रचचार** । **तदिदं मनः तं** पुराणपुरुषम् **एकमेवानुभूय रसातिशयात् स्वपिति वा**; परवशतया स्थितत्वात् । **अवलिम्पति**; गर्वायते वा औद्धत्यात् । **मुह्यति वा**; अनिश्चेष्टत्वात् । मया न ज्ञायत इति भावः ॥ ६६ ॥

[1] अवरोधेति प्रभाविलासपाठः.

अपरमपि विचित्रमेतदनुभवामि—

**अन्येषामजहत्त्रिवर्गमनसामायुःक्षयत्रासदै-**
**रप्रत्यूहगतिक्रमैरवितथव्यापारधन्यस्य मे ।**
**भ्रश्यद्भिर्दिवसैः [1]प्रवृद्धवृजिनाकूपारपारीभवन्**
**प्रत्यासीदति मुक्तिवासर इति प्रीतिः प्रतिष्ठाप्यते ॥ ६७ ॥**

इदमपि च महत्तरं प्रीतिकारणम्; यदेतत्—

**दहरकुहरे देवस्तिष्ठन्निषद्वरदीर्घिका-**
**निपतितनिजापत्यादित्सावतीर्णपितृक्रमात् ।**
**धमनिमिह नस्तस्मिन्काले स एव शताधिका-**
**मकृतकपुरप्रस्थानार्थं प्रवेशयति प्रभुः ॥ ६८ ॥**

**प्रभाविलासः**

**अन्येषामिति । अवितथव्यापारः** । अभिगमनादिव्यापारः । **प्रीतिः** संतोषः **प्रतिष्ठाप्यते** । अत्र

"प्रायशः पापकारित्वान्मृत्योरुद्विजते जनः ।
कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम् ॥"

इत्यादिकमनुसंधेयम् ॥ ६७ ॥

"तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया" इति सूत्रार्थमनुसंधत्ते—**दहरेति** ।

**प्रभावली**

**अन्येषामिति । अवितथव्यापारैः** पाञ्चकालिकधर्मैः क्रियमाणैः **धन्यस्य मे । भ्रश्यद्भिः दिनैः** । कीदृशैः? **अजहत्त्रिवर्गमनसाम् अन्येषाम्, आयुः क्षीयते,** मरणानन्तरं किं भविष्यतीति भीतिं **वर्धयद्भिः । निष्प्रत्यूहः** अपरिहार्यो **गतिक्रमो** येषां तैः । **गतिक्रमैः** हेतुभिः **प्रवृद्धः** संसारः, तेन जातं यद्वृजिनं पापं, तद्रूपस्य **अकूपारस्य** तीरायमाणो **मुक्तिवासरः प्रत्यासीदतीति प्रीतिः प्रतिष्ठाप्यते** ॥ ६७ ॥

इदमपि महत्तरं प्रीतिकारणम् । तत्किमित्यत्राह—**यदेतदिति । दहर-**

[1] **प्रवृत्त—छ.**

### प्रभाविलासः

**दहरकुहरे**; दहराख्यहृदयगुहायाम्। अनेन 'तदोकः' इति प्रतीको विवृतः। **देव** इति हार्दपदं विवृतम्। **तिष्ठन्निति** उपासकेनोपास्तिः। अनेन विद्यासामर्थ्यादिति पदं विवृतम्। **निषद्वरेत्यादिना** तत्प्रकाशितद्वार इति पदं विवृतम्। निषद्वरस्तु जम्बालः। **धमनिम्**; नाडीं सुषुम्नाम्। **शताधिकां प्रवेशयतीति** अनुगृहीतपदं विवृतम्। अत्र

"शतं चैका च हृदयस्य नाड्य-
स्तासां मूर्धानमभि निःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति
विष्वङ्ङन्या उत्क्रमणे भवन्ति॥"

इति श्रुतिर्भाव्या। **अकृतकपुरेति**; त्रिगुणबहिर्भूतमक्षरादिपदवाच्यं स्थान-मुच्यते। तदुक्तमारण्यके पर्वणि त्रिषष्टितमेऽध्याये[1]—

"यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं पराम्।
अनादिनिधनं देवं प्रभुं नारायणं परम॥
ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते।
अपि देवा न गच्छन्ति दिवि तेजोमयं शुभम्॥
अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः।
स्वयैव प्रभया राजन् दुष्प्रेक्षं देवदानवैः॥
तद्ध ज्योतींषि सर्वाणि प्राप्य नो भान्ति तेजसा।
स्वयंप्रभुरदीनात्मा यत्र द्युतिविराजते॥

### प्रभावली

**कुहरे**; हृदयगुहायाम्। **निषद्वरदीर्घिका**; पङ्कहृदः। तत्र निपतितस्य निजपुत्रस्य आदित्सार्थम् उद्धरणार्थम् अवतीर्णो यः पिता, तन्न्यायेन।

[1] कुम्भकोणस्थकृष्णाचार्यप्रकाशिते महाभारतपुस्तके १६४ तमोऽध्यायः।

अधिगतं च महदिदानीमस्माभिरैश्वर्यम् । तथाहि—

**प्रत्यूहानवधीद्विवेकसुभटो युद्धेषु बद्धेषुधि-**
**स्तद्भूम्नैव हता धियस्तरलता संभूय सा भूयसा ।**
**प्रत्यक्षागमयुक्तिभिः प्रणिहितत्रित्वेषु तत्त्वेष्वमी**
**लक्ष्यालक्ष्यगुणेषु [1]लब्धधिषणोत्सेधाः समेधामहे ॥ ६९ ॥**

**प्रभाविलासः**

यतयस्तत्र गच्छन्ति भक्ता नारायणं हरिम् ।
परेण तपसा युक्ता भाविताः कर्मभिः शुभैः ॥
योगसिद्धो महात्मानस्तमोमोहविवर्जिताः ।
तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत ॥
स्थानमेतन्महाभाग ध्रुवमक्षरमव्ययम् ।
ईश्वरस्य सदा ह्येतत्प्राणिकर्तुर्युधिष्ठिर ॥ ''

इति ॥ ६८ ॥

**प्रत्यूहानिति । प्रत्यूहान्**; योगान्तरायान् कामादीन् । **इषुधिः**; निषङ्गः । **तरलता**; चाञ्चल्यम् । **भूयसा**; बहुलेन । **प्रत्यक्षम्**; घटमहं जानामीति । **आगमः**; "भोक्ता भोग्यं प्रेरितारं च मत्वा" इत्यादि । **युक्तिः**; भोक्त्रनङ्गीकारेऽचेतनस्य शरीरस्य भोक्तृत्वानुपपत्तिरित्यादिका ।

**प्रभावली**

**दहरकुहरे तिष्ठन् देवः तस्मिन् काले अकृतकपुरप्रस्थानार्थम् इह शरीरे शताधिकां धमनीम् एकशततमीं सुषुम्नाख्यनाडीं नः प्रवेशयति ॥ ६८ ॥**

अथ पुरुषः स्वस्यैहिकमैश्वर्यं सिद्धमित्याह—**प्रत्यूहानिति** । विवेकवीरः **प्रत्यूहान्** हतवान् । कथम्? **युद्धेषु** पृष्ठे बद्धनिषङ्गः सन् । **भूयसा तद्भूम्ना**; विवेकमहिम्ना । बुद्धेः **तरलता संभूय हता**; निवर्तिता । प्रत्यक्षश्रुत्यनुमानैः यथा-संभवं **प्रणिहितत्रित्वेषु** साधितं त्रित्वं येषां तेषु । 'इदमहं जानामि' इति

[1] बद्ध—क.

अपिच निरन्तरमन्तरात्मानुभवरसमीश्वराज्ञानुवर्तनप्रीतिं च यावज्जीवमनुपालयतो मे नित्यसंनिहितैव नैःश्रेयसी सिद्धिः। तदेतदखिलं यन्मुखेन मया समधिगतं तमसहायवीरं विवेकं विचित्रमहिमशालिनीं[1] विष्णुभक्तिं चामोघवाञ्छितः संद्रष्टुमिच्छामि। अत्र चैतौ तुलसीवननिवासिनीं द्वादशीमुपसेवमानौ नूनमुपस्थास्येते। यावदिमावुपसर्पामि।

(ततः प्रविशति विवेकः सुमतिर्विष्णुभक्तिश्च)

**विष्णुभक्तिः**—महाराज, दिष्ट्या त्वया जिताः शत्रवः। पुरुषश्चाशेषविकृतिप्रसूत्या प्रकृत्या अनिदंप्रथमबम्भ्रम्यमाणगर्भजन्म-

**प्रभाविलासः**

**प्रणिहितत्रित्वेषु**; निश्चितत्रित्वसंख्यावत्सु। **तत्त्वेषु**; चिदचिदीश्वरेषु। **धिषणोत्सेधः**; ज्ञानौन्नत्यम। **समेधामहे**; वर्धामहे ॥ ६९ ॥

**प्रभावली**

प्रत्यक्षेण "भोक्ता भोग्यम्" इति श्रुत्या च चिदचित्तत्त्वे साधिते। ईश्वरतत्त्वं त्वागमेनैवेति भावः। **युक्तिभिः**; प्रमाणानुग्राहकैस्तत्त्वमुक्ताकलापादिषु प्रपञ्चितैस्तर्कैः। **लक्ष्यालक्ष्यगुणेषु**; चिदचितोर्गुणा लक्ष्याः; ईश्वरस्य गुणास्त्वलक्ष्याः। **लब्धः धिषणाया उत्सेध** औन्नत्यं सर्वविषयता येषां ते। **अमी वयं समेधामहे**; वृद्धिं प्राप्ताः स्मः ॥ ६९ ॥

ममात्रैव नैःश्रेयसी सिद्धिः सिद्धेत्याह—**निरन्तरमिति**। **निरन्तरपरमात्मानुभवरसं** तदाज्ञानुवर्तनप्रीतिं **च**। **यन्मुखेन**; यद्द्वारेण। **अमोघवाञ्छितः अहम्**। **तुलसीवनवासिनीं द्वादशीम्**; तुलसीवनप्रिया द्वादशी, तुलस्यां द्वादश्याः स्थितत्वेन तुलसीमाहात्म्ये दर्शनात्। **उपस्थास्येते**; आगमिष्यतः; सेविष्येते वा; मयेति शेषः। **इमौ**; विष्णुभक्तिविवेकौ। **उपसर्पामीति** यावद्वदति तावत्। **ततः प्रविशतीत्यादि**। विवेकं प्रशंसति—**दिष्ट्येति**। अशेषा विकृतयः महदादयः।

[1] गुणशालिनीं—क.

जरामरणादिचक्रयन्त्रमारोप्य क्रीडन्त्या निपीड्यमानो निवृत्तिधर्म-प्रभृतिनिश्रेणिकाक्रमेण निःश्रेयसप्रासादसमारोहणाय नियोजितः। अहो नु खलु भवन्तमनवधिक[1]वैभवमवधारयामि।

**महासत्त्वोदारस्थिरमधुरगम्भीरहृदयः**
**कृपोत्साहोत्तुङ्गः कृतविदभिगम्यः प्रणयिनाम्।**
**श्रुतप्रज्ञामेधास्मृतिजलधिरक्षुद्रचरित-**
**स्त्वमेकः सर्वासामनघभणितीनामभिमतः॥ ७०॥**

अपिच,

**धीरोदात्तानुकूलोत्तमगुणमहिमा नायकेष्वग्रणीस्त्वं**
**स्वाधीनत्वत्सनाथा सुमतिरभिमता धर्मपत्नी तवासौ।**
**स्वायत्ता चाद्य सिद्धिः समजनि भवतः[2] स्वामिनिःश्रेयसार्था**
**रामस्त्वं च त्रिलोक्यां [3]रणविहृतिमुखैरप्रधृष्यानुभावौ॥७१॥**

**प्रभाविलासः**

**महासत्त्वेति। श्रुतम्;** श्रवणम्। **अनघभणितीनाम्;** श्रुतीनाम्॥ ७०॥

**धीरेति। धीरत्वम्;** व्यसनेष्वनुद्विग्नत्वम्। **उदात्तत्वम्;** विभूत्या-

**प्रभावली**

अनिदंप्रथमम्; अनादिकालमारभ्य। निश्रेणिकान्यायेन मोक्षसौधसमारोहणाय प्रेरितः। अनवधिकवैभवमेव दर्शयति— **महासत्त्वेति**। महत् सत्त्वं सत्त्वगुणः यस्य तत्। **उदारम्;** विपुलम्। **स्थिरम्;** अचञ्चलम्। **मधुरम्;** मनोहरम्। **गम्भीरं हृदयं** यस्य। **कृपया उत्साहेन** च उन्नतः। **कृतवित्;** कृतज्ञः। **प्रणयिनां** स्निग्धानां **सुप्रापः। श्रुतम्; शास्त्रश्रवणम्। प्रज्ञा;** तज्जनितं ज्ञानम्। **मेधा;** धारणा। **स्मृतिः;** स्मरणम्। एतासां **जलधिः। अक्षुद्रचरितः;** उज्जीवकसमाचार इति। **अनघभणितीनाम्;** श्रुतिस्मृतिवचसाम्। **अभिमतः;** प्रतिपाद्य इत्यर्थः॥ ७०॥

पुनः स्तौति— **धीरेति। धीरः;** अनुद्विग्नः। **उदात्तः;** गम्भीरः।

[1] अनवधिकातिशय—क ग. [2] भवता—ग. [3] रणविहृतिमुखेषु इति प्रभाविलासपाठः.

## प्रभाविलासः

शयमहत्त्वम्, "आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम्। उदात्तं नाम तं प्राहुः" इत्युक्तत्वात्। **नायकाः**; धीरोदात्तधीरोद्धतधीरललितधीरशान्तादयः। तल्लक्षणं विद्यानाथेनोक्तम्—

"महासत्त्वोऽतिगम्भीरः कृपावानविकत्थनः।
धीरो निगूढाहंकारो धीरोदात्तः स उच्यते॥
दर्पसामर्थ्यभूयिष्ठश्चण्डवृत्तिर्विकत्थनः।
मायावी सुलभक्रोधः स धीरोद्धत उच्यते।
निश्चिन्तो धीरललितः कलासक्तः सुखैकभूः।
धीरशान्तः प्रसन्नात्मा धीरः शान्तो द्विजोत्तमः।
एकायत्तोऽनुकूलः स्यात्तुल्योऽनेकत्र दक्षिणः।
दृष्टापचारो धृष्टः स्याद् गूढविप्रियकृच्छठः॥"

इत्यादिना। **तेष्वग्रणीरिति**; धीरोदात्तः। तस्याग्रणीत्वं प्रबन्धव्यापिफलभागित्वात्। तदुक्तं रत्नापणे—"नयति प्राप्नोतीति नायक इति व्युत्पत्त्या प्रबन्धव्यापिफलवानिति विशेषो द्रष्टव्यः" इति। अत एव "धीरोदात्तनायकमुद्धताद्युपनायकं नाटकम्" इति चन्द्रिकायामुक्तम्। **स्वामिनः** पुरुषस्य **निःश्रेयसम् अर्थः** प्रयोजनं यस्याः सा॥ ७१॥

## प्रभावली

**अनकूलः**; हितकारी। **उत्तमः गुणमहिमा** यस्य सः। धीरोदात्तादिनायके**ष्वग्रणीः त्वम्**। धीरोदात्तः धीरोद्धतः धीरशान्तः धीरललितश्चेति चत्वारो नायकाः। **तवाभिमता धर्मपत्न्यसौ सुमतिः स्वाधीनेन त्वया सनाथा**। **स्वामिनिःश्रेयसार्था**; स्वामी पुरुषः, तन्मोक्षप्रयोजना। समाधिसिद्धिः **अद्य भवतः** स्वाधीना। स्वशब्देन पुरुषो गृह्यते। **समजनि**; जाता। अतो दशरथरामस्त्वं च रणविहाराग्रभागेषु परैः अधृष्यपराक्रमौ। रामोऽपि धीरोदात्ततया प्रसिद्धः चतुर्विधेषु नायकेष्वग्रणीश्च। धर्मपत्नी सीता च स्वाधीना तदेकसनाथा। स्वामी पिता। तस्य निःश्रेयसार्था सिद्धिः। तेन स्वाधीना कृता च॥ ७१॥

राजा—महाप्रभावे, सर्वमिदं त्वत्प्रसादप्रसूतमेव। "भक्त्या त्वनन्यया" इति भगवतैव गीयते। (विचिन्त्य) अद्यापि न प्रकृत्या पुरुषः परित्यक्तः। नापि चासौ,

ज्वलनदिवसज्योत्स्नापक्षोत्तरायणवत्सरान्
पवनतपनप्रालेयांशून्क्रमादचिरद्युतिम्।
[1]जलचरपतिं देवाधीशं प्रजापतिमागत-
स्तरति विरजां दूरे वाचस्ततः परमद्भुतम्॥ ७२॥

प्रभाविलासः

ज्वलनेति। ज्वलनः; अर्चिः। दिवसः; अहः। ज्योत्स्नापक्षः; शुक्लपक्षः। अत्रेयं श्रुतिः—"यदु चैवास्मिञ्छव्यं कुर्वन्ति यदु च नार्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति। नन्वत्र श्रुतावनुपात्तस्य वायोः श्लोके कथमुपादानमिति चेत्; उच्यते—"यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति" इति बृहदारण्यकोक्तस्य वायोरुपसंहारस्य न्यायप्राप्तत्वादुपादानमिति। नन्वथापि वत्सरानन्तरमुपादाने किं निमित्तमिति चेत्, उच्यते—"स वायुमागच्छति तस्मै स विजिहीर्षते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इत्यादित्यात्पूर्वं निवेशितत्वात्। ननु तर्हि 'संवत्सरादादित्यम्' इत्यादित्यात्पूर्वं संवत्सरनिवेशो युक्त इति चेत्; सत्यम्—उभयोः

प्रभावली

अद्यापि प्रकृत्या न परित्यक्तः। नाप्यर्चिरादिना प्राप्तश्चेत्याह—जलचर-

[1] जलधरपतिं—क.

**प्रभाविलासः**

प्राप्तावपि पूर्वत्र शुक्लपक्षप्रभृतीनां न्यूनकालेभ्य उत्तरोत्तरत्वेन निवेशदर्शनात् संवत्सरस्यैव मासानन्तरं बुद्ध्यारोहेण संवत्सरनिवेशे आदित्यस्याव्यवधानेन वायोर्निवेश इति। "अथ य एतं देवयानं पन्थानमापद्याग्नेर्लोकमागच्छति स वायुलोकम्" इत्यग्निलोकशब्दनिर्दिष्टश्रौतक्रमेण पाठक्रमाद्बलीयस्त्वादादित्यात्पूर्वं प्रवेशो निश्चीयत इति शारीरकभाष्य एव व्यक्तम्। ननु "मासेभ्यो देवलोकं देवलोकादादित्यम्" इति बृहदारण्यकोक्तस्य देवलोकस्यापि श्लोके किमिति नोपादानमिति चेत; न—देवानां लोक इति व्युत्पत्त्या देवलोकशब्देन सामान्येन वायुरेवाभिधीयते। यथा वायुलोक इत्यत्र वायुश्चासौ लोक इति वायुलोकशब्देन वायुरेवाभिधीयत इति। यथाह सूत्रकार:—"वायुमब्दादविशेषविशेषाभ्याम्" इति। अथ "तटितोऽधिवरुणः" इति सूत्रोक्तमभिप्रेत्याह—**अचिरद्युतिमित्यादिना**। **अचिरद्युतिः**; विद्युत्पुरुषः। **जलचरपतिम्**; वरुणम्। **देवाधीशम्**; इन्द्रम्। **प्रजापतिम्**; चतुर्मुखम्। अत्रेयं श्रुतिः—"स तं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स प्रजापतिलोकम्" इति। तत्रादित्यपर्यन्तं क्रमनियमः पूर्वमेवोक्तः। पूर्वोपात्तवाक्ये श्रुतानां वरुणेन्द्रप्रजापतिपर्यन्तानां श्रुताद्विद्युत्पुरुषादनन्तरं निवेशो युक्तः। विद्युत्पुरुषादनन्तरं वरुणनिवेशः। तदनन्तरमिन्द्रप्रजापत्योः। अवशिष्टयोरन्ते प्रवेश इत्यलम्। **आगतः**; एतमातिवाहिकगणं प्राप्तः। "स एनान् ब्रह्म गमयति" इत्यमानवपर्यायविद्युत्पुरुषस्य गमयितृत्वश्रुतेः। स इति तच्छब्देन विद्युत्पुरुषामानवपरामर्शेन सर्वेषामविशेषश्रुतानां तेनैवान्वयार्हत्वात्। उक्तं हि सूत्रकारैः—"आतिवाहिकस्तल्लिङ्गात्" इति। अत्र

**प्रभावली**

**पतिम्**; वरुणम्। **देवाधीशम्**; इन्द्रम्। **विरजां न तरति**। **ततः वाचां दूरे**

अयं हि,

मलिनिमदशामातन्वानैर्मलीमसवस्तुभि-
र्मणिरिव [1]महानन्तर्ज्योतिर्निरुद्धनिजप्रभः ।
शुभतररुचिप्रत्यासेधस्वकर्मफलच्छला-
ज्जडपरिषदि न्यस्तो दैव्या[2] न दीव्यति मायया ॥ ७३ ॥

**प्रभाविलासः**

विद्युत्पुरुषामानवयोरैक्यमेव, न भेदः, "तत्पुरुषोऽमानवः" इत्युक्तत्वात् । "विद्युतोऽमानवो नेता परमात्मानमेव हि" इति पुरुषोत्तमतन्त्रोपबृंहणाच्च । **विरजां तरतीति** अण्डावृतिभेदादेरपि प्रदर्शनम् । तदुक्तं ब्रह्माण्डे—

"अण्डमावृतिभेदांश्च समतीत्य मुमुक्षवः ।
वैकुण्ठसीम्नि विरजां स्यन्दमानां नदीमपि ।
प्राप्यावगाह्य तीर्त्वैतां त्यक्त्वा स्वीयां जरामपि ॥"

इति । **अद्भुतम्;** आश्चर्यभूतं परमपदमित्यर्थः । अत्रोपगूहनं नाम निर्वहणसंधेरङ्गमुक्तम्, "अद्भुतार्थस्य संप्राप्तिरुपगूहनमुच्यते" इति लक्षणात् ॥ ७२ ॥

**मलिनिमेति** । **मलिनिमदशाम्;** मालिन्यदशाम् । **आतन्वानैः;** कुर्वद्भिः । **मलीमसवस्तुभिः;** मलिनद्रव्यैः । **निरुद्धनिजप्रभः;** तिरोहितज्ञानादिधर्मकः । अत एव **अन्तर्ज्योतिः;** अन्तःप्रकाशमानज्ञानादिस्वरूपः । अनेन ज्ञानादीनां स्वरूपनित्यत्वं तद्गतप्रसराख्यधर्मस्य तिरोधान-

**प्रभावली**

स्थितं परमपदमपि न प्राप्नोति । नापीत्यत्यनञ इह संबन्धः ॥ ७२ ॥

अयं पुरुषो दैव्या मायया जडपरिषदि न्यस्तो न शोभत इत्याह—**अयमिति** । मलिनिमेति । मलिनां दशाम् आपादयद्भिः मलिनवस्तुभिः

[1] महानन्द—ख. [2] देव्या—क. छ.

**सुमतिः**—अय्यउत्त, अविच्छिण्णप्पवुत्तकेवल[1]परसंतवण-केलिसालिणीए माआए किं फलं लद्धं[2] लहिज्जइ[3]वा ?

(आर्यपुत्र, अविच्छिन्नप्रवृत्तकेवलपरसंतपनकेलिशालिन्या मायया किं फलं लब्धं लभ्यते वा ?)

**राजा**—न किंचिदपि । (सनिश्वासम्)

**विषतरुफलपाकदर्शनीयैर्विषयरसैः पुरुषं निरुद्धदृष्टिम् ।**
**अलभत किमसौ फलं विचेता विषमगुणा गुणिनं विलोभ्य माया॥७४॥**

**प्रभाविलासः**

विषयत्वं चोक्तम् । **मणिरिव । शुभतररुचेः**; विशुद्धज्ञानादिप्रसराख्यधर्मस्य । **प्रत्यासेधस्य**; तिरोधायकस्य । **स्वकर्मफलस्य छलात्**; व्याजात् । उपाधेरिति यावत् । **जडपरिषदि**; ज्ञानशून्यसभायाम् । **न्यस्तः न दीव्यति**; न प्रकाशते ॥ ७३ ॥

**विषेति । विचेताः**; अचेतना । **असमगुणा**; त्रिगुणा ॥ ७४ ॥

**प्रभावली**

**निरुद्धनिजप्रभः महान् मणिरिव अन्तर्ज्योतिः अयमपि प्राकृतैः** देहेन्द्रियादिभिः निरुद्धनिजप्रभः **शुभतराया रुचेः** आत्मप्रकाशस्य **प्रत्यासेधः** प्रतिबन्धकं यत् स्वकर्मफलम्; कर्मफलानुभव इत्यर्थः । तद्व्याजात् । अज्ञपरिषदि दैव्या मायया न्यस्तः न प्रकाशते ॥ ७३ ॥

**अविच्छिण्णप्पवुत्त**-अविच्छिन्नप्रवृत्त । **केवलपरसंतवण**-केवलपरसंतपन । केलिसालिणीए-केलिशालिन्या । **माआए**-मायया । **किं फलं लद्धं**-किं फलं लब्धम् । **लहिज्जइ वा**-लभ्यते वा । स्वयमपि परितुष्टिनिरुद्धब्रह्मज्ञानं कृत्वा । **विचेताः**; दुर्बुद्धिः । **गुणिनम्**; ज्ञानानन्दादिगुणवन्तम् एनं **विलोभ्य किं फलम् अलभत** । न किमपीति भावः ॥ ७४ ॥

[1] केवल omitted—ग. [2] किं लद्धं—ग. [3] लंभिज्जइ—क.

विष्णुभक्तिः—नासौ महाराजस्य निर्वेदावसरः। अद्य हि परसंकल्पकल्पान्तपावकेन प्रारब्धकर्मलेशपरिशेष[1] उपशोषितः पुरुषस्य दुरितार्णवः। प्रकृतिरपि निर्मोककल्पा शेषपरिशुद्धस्वभावं पुरुषमायुषः पारे तमसः पारे निर्मोक्ष्यति।

राजा—(परिक्रम्य सहर्षम्) भगवति,[2] तर्हि सफलप्रयासोऽस्मि।

सुमतिः—अय्यउत्त, किं एदं भअवईए भासणं अम्हाणं उवच्चंदणं, अहवा अणलीअं ति [3]डोलाअंतमाणसम्हि।

(आर्यपुत्र, किमेतत् भगवत्या भाषणमस्माकमुपच्छन्दनम्, अथवा अनलीकमिति दोलायमानमानसास्मि।)

राजा—प्रिये, मैवं मन्वीथाः[4]। सत्यवादिनी खल्वेषा सनकसनन्दनादिभिर्महनीया [5]महातपस्विनी। श्रद्धत्स्व चैतत्—

निर्जरीभिरपि नित्यदुर्लभे जातु काचिदिह जातकौतुका।
लप्स्यसे ललितकाङ्क्षिणी स्वयं मत्प्रिया त्वमनघं मनोरथम्॥७५॥

प्रभाविलासः

निर्जरीभिरिति। निर्जरीभिः; शचीप्रभृतिभिः। नित्यदुर्लभे;

प्रभावली

निर्वेदानवसरत्वे हेतुं दर्शयति—अद्य हीति। परसंकल्प एव कल्पान्तपावकः, तेन। प्रारब्धो यः कर्मलेशः, स एव परिशेषो यस्य सः। परिशेषिततया उपशोषितः दुरितार्णवः। शरीररूपा प्रकृतिरपि सर्पनिर्मोकसदृशी शेषवत् परितः शुद्धस्वभावं पुरुषम् आयुषः पारे देहावसाने सूक्ष्मशरीरावसाने निर्मोक्ष्यति; गलिता भवति। किं एदं-किमेतत्। भअवईए भासणं-भगवत्या भाषणम्। अम्हाणं-अस्माकम्। उवच्चंदणं-उपच्छन्दनम्। अहवा-

[1] कर्मपरिशेषः—ख. [2] सिद्धप्रायः समीहितः added after—ग.
[3] डोलायमाण—ख. [4] वादीः—क. [5] महा omitted—ग.

सुमतिः—महंतो खु एसो पसाओ सहधंमआरिणीविसए महाराअस्स ।

(महान् खल्वेष प्रसादः सहधर्मचारिणीविषये महाराजस्य ।)

राजा—(परिक्रम्य) इदमहमिदानीं मदेकार्थेभ्यश्चिरपरिचर्यापरिश्रान्तेभ्यः प्रहर्षकारणं प्रख्यापयामि—

**विद्याभिः स्वविपक्षभङ्गपटुषु स्थानेष्ववस्थीयतां**
**सिद्धार्थैरनुमन्यतां शमदमस्वाध्यायतोषादिभिः ।**
**मत्सूतस्य मनोरथस्य रथिना दृष्टाध्वना संप्रति**
**प्रत्यावृत्तिकथोज्झितेन परमं ब्रह्म प्रतिष्ठास्यते ॥ ७६ ॥**

**प्रभाविलासः**

पुरुषमोचने । **काचित् त्वं जातु** कदाचित् **अनघं मनोरथं प्राप्स्यसि** ॥७५॥

**विद्याभिरिति** । विद्यास्थानान्युक्तानि । **अनुमन्यताम्** ; ब्रह्मप्रतिष्ठानं संमन्यताम् ॥ ७६ ॥

**प्रभावली**

अथवा । अणलीअं ति-अनलीकमिति । डोलायंतमाणसम्हि—डोलायमानमानसास्मि । एषा ; विष्णुभक्तिः **महातपस्विनी** । **श्रद्धत्स्व** ; निश्चिनु । भो सुमते । **निर्जरीभिः** ; अमरीभिरपि । **नित्यदुर्लभे इह** ; पुरुषस्य प्रकृतिविमोक्षणे । **जातकौतुका** त्वम् इमम् **अनघं मनोरथं** मङ्गलकाङ्क्षित्वात् मत्प्रियत्वाच्च **स्वयमेव लप्स्यसे** ॥ ७५ ॥

**महंतो खु**-महान् खलु । **एसो पसाओ**-एष प्रसादः । **सहधंमआरिणीविसए**-सहधर्मचारिणीविषये । महाराअस्स-महाराजस्य । इदानीं मत्पक्षीयेभ्यः संतोषकारणं किमपि प्रख्यापयामीत्याह—**इदमहमिति** । **मदेकार्थेभ्यः** ; मदेकप्रयोजनेभ्यः चिरशुश्रूषापरिश्रान्तेभ्यः । **विद्याभिरिति** । पुरुषगतचतुर्दशविद्याभिः । ये **स्वविपक्षभङ्गपटवः** शत्रुमतभङ्गे समर्थाः पुमांसः, तेषां **स्थानेषु अवस्थीयताम्** । **सिद्धार्थैः** ; सिद्धप्रयोजनैः । शमदमादिभिः पुरुषस्य प्रस्थानमनु-

अपिच,

**प्राचीमेकपदीं त्यक्त्वा प्रतीचीमास्थितः प्रभुः ।**
**उदीचीमेव गन्तासौ न त्ववाचीं कथंचन ॥ ७७ ॥**

(आकाशे डिण्डिमध्वनिः)

(सर्वे समाकर्ण्याद्भुतकौतुकं नाटयन्ति)

**विष्णुभक्तिः**—श्रूयतामिदं महाराजेन—

**प्रभाविलासः**

**प्राचीमिति । प्राचीम्**; पूर्वां स्वर्गादिपद्धतिं त्यक्त्वा । **प्रतीचीम्**; पश्चिमाम् । **एकपदीम्**; अर्चिषम । **प्रभुः**; पुरुषः । **उदीचीम्**; उत्तरां दिशम् । गन्ता; गमिष्यति । **अवाचीम्**; अधोगतिं तु । **कथंचन न गन्ता** ॥ ७७ ॥

**प्रभावली**

मन्यताम् । **मत्सूतस्य**; अहमेव सूतो यस्य तस्य, **मनोरथस्य** । **रथिना**; पुरुषेण । **दुष्टाध्वना**; प्रतिदिनमनुचिन्तितेनार्चिरादिमार्गेण करणेन । **प्रत्यावृत्तिकथा**; पुनरावृत्तिप्रसङ्गः, तद्रहितेन । **संप्रति परमं ब्रह्म**; परमपदनिलयं प्रति । **प्रतिष्ठास्यते**; प्रस्थास्यते, गम्यत इत्यर्थः । प्रतिपूर्वोऽपि ष्ठाधातुरत्र प्रस्थानवाची, प्रस्थानप्रकरणात् ॥ ७६ ॥

उत्तरत्र प्रस्थानं विशेष्यते—**प्राचीमिति । प्राचीम्**; प्राक्तनीम्; प्राक्कालानुगताम् । **एकपदीम्**; वर्तनीम्, स्वर्गादिगमनपद्धतिम् । **त्यक्त्वा । प्रतीचीम्**; प्रत्यक् ब्रह्म, तद्विषयाम् । **आस्थितः प्रभुः**; गन्तुं समर्थः । **उदीचीम्**; उदीचीशब्देन ऊर्ध्वा दिगुच्यते । **असौ**; प्रस्थितः । **उदीचीम्** ऊर्ध्वां दिशमेव गन्ता । **अवाचीम्**; अधोदिशम् । **कथंचन**; केनापि प्रकारेण । **न त्वेव गन्ता** ॥ ७७ ॥

अथ त्रुटितकर्मबन्धोऽयं विद्वान् पुरुषः विमुक्तिपथं शीघ्रमुपैष्यतीति वदन् देवदुन्दुभिताडनं प्रस्तौति—**आकाश इति । डिण्डिमध्वनिः**; जात इति शेषः । सर्वे अद्भुतोत्सवमनुकुर्वन्ति । एवं दुन्दुभिस्ताड्यत इत्याह—

निवृत्तमतिकश्मलो निभृतबुद्ध्यबुद्धीन्द्रियः
परप्रणिधिवैभवत्रुटितकर्मबन्धः कृती ।
विमुक्तिपथमद्भुतं द्रुतमुपैति विद्वानिति
[1]त्रिवर्गरसघस्मरस्त्रिदशडिण्डिमस्ताड्यते ॥ ७८ ॥

पुरुषः—(सहर्षम्) अस्मन्महोदयसंतुष्टोऽयं वत्सो विवेकः सुमतिविष्णुभक्तिभ्यां सहेत एवाभिवर्तते । तदहमेतान् प्रत्युद्गच्छामि ।

राजा—(पुरस्तान्निर्दिश्य) प्रिये, एष कुलपतिरस्माकमतर्कितोपस्थितपरसंकल्पनिवृत्तपूर्वापरपुण्यपापराशिरस्मद्दिदृक्षया समायाति । तदयमस्माभिः समाहितैरभिगम्योपसत्तव्यः ।[2]

प्रभाविलासः

**निवृत्तेति** । अबुद्धिपदेन कर्मेन्द्रियाण्युच्यन्ते । **त्रिवर्गाणाम्**; धर्मादीनाम् । **रवस्य**; शब्दस्य । **घस्मरः**; भक्षकः ॥ ७८ ॥

प्रभावली

**निवृत्तेति** । **मतिकश्मलं** मोहादि निवृत्तं यस्य सः । **बुद्धीन्द्रियाणि**; ज्ञानेन्द्रियाणि । **अबुद्धीन्द्रियाणि**; कर्मेन्द्रियाणि । निभृतानि बुद्ध्यबुद्धीन्द्रियाणि येन सः । परब्रह्मसमाधिवैभवेन छिन्नकर्मबन्धः **कृती** अयं विद्वान् सर्वज्ञः **द्रुतम्** अचिरादेव **अद्भुतं** विमुक्तिपथम् आश्चर्यरूपम् अर्चिरादिमार्गम् **उपैति** उपैष्यति । वर्तमानसामीप्ये वर्तमानवत्प्रयोगः । **इति**; एवं प्रकारेण । **त्रिवर्गरसघस्मरः** । **त्रिवर्गाः**; अमुमुक्षवो देवाः । यद्वा वसुरुद्रादित्यस्वरूपेण त्रिवर्गाः । तेषां पुरुषविषये रुचितिरोधायक इत्यर्थः । **देवदुन्दुभिस्ताड्यते**; त्रिदशैरिति शेषः ॥ ७८ ॥

विवेकादिदर्शनात् हर्षः । **महोदयः**; महोत्सवः । **इत एव**; अस्मत्समीपं प्रति आगच्छति । **निर्दिश्य**; अङ्गुल्येति शेषः । **अस्माकं कुलपति-**

[1] त्रिवर्गरवेति प्रभाविलासपाठः [2] अभिसृत्योपसर्तव्यः—क; उपगम्योपसर्तव्यः—ग.

(सर्वे सप्रश्रयं त्वरितमुपसृत्य प्रयतबुद्धयः प्रणिपतन्ति)

**पुरुषः**—सर्वे दीर्घायुषो भूयास्त । भद्रे विष्णुभक्ते, अनन्यसाधारणावगतप्रभावनिर्धूतनिखिलपरपक्षेण जितकाशिना वत्सेन विवेकेन दिष्ट्या समागतोऽस्मि । (विवेकमुपगुह्य सस्नेहबहुमानम्) वत्स विवेक महावीर, अनादिनिजकर्मसंततिप्रवृत्तया निद्रया निर्भरप्रसुप्तोऽहं त्वयैव खल्वस्मत्प्रतिकूलसकुल्यघातिना प्रतिबुद्धदशां प्रापितः । अनया च परित्यक्तफलान्तरया विष्णुभक्त्या पुनरस्मद्धितैकनिरतया दुःसहानन्तदुःखसंतत्यनुवृत्तिनिदानभूतदुरितराशिरुपसंहृतः ।

**राजा**—(स्वगतम्) हन्त कुलक्षयहेतुरयमिति [1]कुलपतिरक्षकं मां कुटिलमतयः [2]केचिदपवदितुमिच्छन्ति ।

**गतद्रविणदोहदं गलितमाननागौरवं**
**यशस्यनभिसंधिकं यमिनमप्यनुद्गृह्णति ।**
**तिरस्करणकौतुकग्रहगृहीतचित्ते जने**
**गुणग्रहणलालसो न खलु कश्चिदालक्ष्यते ॥ ७९ ॥**

प्रभाविलासः

**गतेति** । उक्तलक्षणं यमिनमपि **अनुद्गृह्णाति**; अनङ्गीकुर्वति जने ।

**प्रभावली**

**रेषः अतर्कितं** यथा तथा **प्राप्तपरमपुरुषसंकल्पेन** । **समाहितैः**; सावधानैः । **उपसत्तव्यः**; उपसदनं कर्तव्यः । **प्रयता**; परिशुद्धा । **अनन्यसाधारणत्वेन अवगतो** यः **प्रभावः**, तेन **निर्धूतः निखिलपरपक्षः** येन । **जितकाशी**; जयशीलः । जितेन जयेन काशितुं शीलमस्यास्तीति जितकाशी । **दिष्ट्या**; दैवेन । **अनादिनिजकर्मसंतत्या प्रवृत्तया निद्रया**; अनादिनिद्रया । **निर्भरं** यथा तथा **प्रकर्षेण सुप्तः** स्वपरज्ञानरहितः **अहम्** । **अस्माकं प्रतिकूलाः तत्सकुल्याः** मोहादयः,

[1] कुलरक्षकं—ग.   [2] केचिदपवदेरन्—ख.

अलमलमनेन । (प्रकाशम्) तात,

(इत्यर्धोक्ते सवैलक्ष्यमवनतमुखस्तिष्ठति)

**विष्णुभक्तिः**—भगवन्, महाराजस्य विवेकस्य विवक्षितं विज्ञापयामि—

**कुल्यत्वेन परिग्रहेऽपि कुटिलप्रस्थानभागिष्वसौ**
**कूटस्थप्रतिकूलवृत्तिषु कृपादाक्षिण्यलेशोज्झितः ।**
**कामादेः स्वयमौर्ध्वदैहिकविधिं कृत्वा यथार्हं कृती**
**द्रष्टुं त्वां त्रुटितस्वकर्मनिगलं प्राप्तो विवेकः प्रभुः ॥ ८० ॥**

प्रभाविलासः

**गुणग्रहणलालसः**; अमानित्वादिगुणग्रहणलोलुपः । **कश्चित् नालक्ष्यते खलु**; न दृश्यते खलु ॥ ७९ ॥

**सवैलक्ष्यम्**; सवैमुख्यम् । **कुल्यत्वेनेति** । **कुल्यत्वेन**; एक-

प्रभावली

तद्घातिना । **प्रतिबुद्धाः**; ज्ञानिनः । विष्णुभक्त्या मम पापराशिरुपसंहृत इत्याह—**अनया चेति** । **अनया च परित्यक्तप्रयोजनान्तरया**; विष्णुभक्तौ सत्यां प्रयोजनान्तरं त्यक्तं भवतीति सूच्यते । स्वार्थे स्वप्रयोजनं च परित्यक्तमिति च गम्यते । प्रतिकूलसकुल्यघातिनेत्युक्त्या केचिन्मामेवमपवदितुमिच्छन्तीत्याह—**हन्तेति** । कुलपतिरक्षकं मां कुटिलमतयः केचित् कुलक्षयहेतुरयमित्यपवदितुमिच्छन्ति । लोके सर्वे दोषग्राहिणः, गुणग्राहिणो न भवन्तीत्याह—**गतेति** । **द्रविणे दोहदम्** अभिलाषः; स गतो यस्य तम् । माननायां पूजायां **गौरवं** गौरवबुद्धिः; सा **गलिता** यस्य तम् । **यशसि अभिसंधिः** अभिलाषः यस्य नास्ति तम्; कीर्तिपराङ्मुखमित्यर्थः । एवंभूतं **यमिनं** विरक्तसंन्यासिनमपि **अनुद्गृह्णति** अनङ्गीकुर्वाणे **परतिरस्करणे** यत् **कौतुकं** तदेव **ग्रहः** पिशाचः, तेन **गृहीतचित्ते** जने लौकिके **परेषां गुणग्रहणे लालसः** अत्यभिलाषवान् **कश्चिदपि न खल्वालक्ष्यते** ॥ ७९ ॥

तात इत्यर्धोक्तवचने सति सवैलक्ष्यं सलज्जमवनतमुखस्तिष्ठति । विवेकस्य विवक्षितमर्थमहं विज्ञापयामि । विवक्षितमर्थं दर्शयति—**कुल्यत्वेनेति** । **स्वकुल्य-**

पुरुषः—(सहर्षबहुमानम्) भद्रे, परमयोगिबहुमतप्रभावे विष्णुभक्ते, परित्यक्तस्वप्रयोजनमसंभवत्प्रत्युपकारमेवमुपकृतवद्भ्यो भवद्भ्यः परितोषानुगुणं कमपि वरं प्रयच्छामि—

**विवेकोऽयं तत्त्वेष्ववितथविशेषग्रहतनु-**
**र्भवोदन्वद्दोषप्रतिगमनिकात्मा च सुमतिः ।**
**परप्रेमाकारा त्वमिति समवेतास्त्रय इमे**
**तमःपारे[1] त्यक्तत्रिगुणमपि च त्यक्ष्यथ न माम् ॥ ८१ ॥**

**प्रभाविलासः**

कुलोद्भवत्वेन । **परिग्रहेऽपि कुटिलप्रस्थानभागिषु**; कुटिलमार्गवर्तिषु । **कूटस्थस्य** प्रतिकूलवर्तिषु मोहादिषु कृपया दाक्षिण्यलेशेन चोज्झितः । त्वां द्रष्टुं प्राप्त इति इष्टकार्यदर्शनप्रतीतेः पूर्वभावो नाम निर्वहणसंधेरङ्गमुक्तम्, "इष्टकार्यदर्शनं पूर्वभावः" इति लक्षणात् ॥ ८० ॥

**विवेक इति । तत्त्वेषु**; चिदचिदीश्वरेषु । **अवितथः**; अबाधितः ।

**प्रभावली**

त्वेन मोहादीनां परिग्रहो यद्यप्यस्ति, तथापि **कुटिलप्रस्थानभागिषु**; अस्मन्मार्गप्रतिकूलमार्गगामिषु । तदेव दर्शयति—**कूटस्थप्रतिकूलवृत्तिष्विति । कूटस्थः**; स्वेषां तेषां च कूटस्थः साधारणपुरुषः । तस्मिन् पुरुषे **प्रतिकूला** परमात्मभोगप्रतिकूला संसारापादिका **वृत्तिः** येषां तेषु । एवमपथप्रवृत्तत्वात् **कृपादाक्षिण्यलेशोज्झितः**; कृपा स्वत उत्थिता साध्वी मतिः । दाक्षिण्यं स्वतोऽभावेऽपि लोकोऽन्यथा क्रोशतीति जनिता साध्वी बुद्धिः । तयोः **लेशेन** लवेनाप्युज्झितः । तेष्वत्यन्तनिष्ठुरबुद्धिरित्यर्थः । अनेन तत्संहर्तृत्वमुक्तं भवति । अथ **कामादेः स्वकुलवर्गस्य स्वयमेव** यथार्हं स्वनियममनतिक्रम्यार्थानुसारेण **और्ध्वदैहिकविधिं** देहादूर्ध्वं कर्तव्यं कर्म प्रेतकार्यादि **कृत्वा कृती** कृतकृत्यः **त्रुटितस्वकर्मनिगलं** विच्छिन्नस्वकर्मशृङ्खलं **त्वां द्रष्टुं विवेकः प्रभुः प्राप्तः** ॥ ८० ॥

स्वकार्यं विहायैव मह्यमुपकृतवद्भ्यो हर्षानुगुणं कमपि वरं प्रयच्छामी-

[1] तमःपारं—ग. छ.

**राजा विष्णुभक्तिश्च**—(साञ्जलिबन्धम्) अनन्यलभ्यः प्रसादोऽयमस्मास्वत्रभवतः ।

**सुमतिः**—(सहर्षम्) [1]महंतो हि एसो वरो महणिज्जो, जं अय्यउत्तस्स सहधंमआरिणी होम्मि ।

(महान्ह्येष वरो महनीयः, यदार्यपुत्रस्य सहधर्मचारिणी भवामि ।)

**विष्णुभक्तिः**—भगवन्, अद्य खल्वासन्नसिद्धिरेव स भवानिति देशिकप्रसादलब्धदिव्यचक्षुषो[2] मे हृदयमेव कथयति । तथाच सिद्धपूर्वैः मुनिमित्रैरपि सूच्यते । इह हि—

**प्रभाविलासः**

विशेषग्रह एव तनुः स्वरूपं यस्य सः । **प्रतिगमनिकात्मा**; विरोधिस्वरूपा ॥ ८१ ॥

**प्रभावली**

त्याह—**भद्र इत्यादिना । भद्रे**; मङ्गलरूपे । **परम योगिभिरपि बहुमतप्रभावे** भो **विष्णुभक्ते** । स्वप्रयोजनं परित्यज्य प्रत्युपकाररहितमेवमुपकृतवद्भ्यः । वरप्रकारं दर्शयति—**विवेक इति** । विवेकः सुमतिः विष्णुभक्तिरिति त्रयोऽपि **यूयं** त्रिगुणमतीत्य परमपदगतमपि मां न त्यक्ष्यथ; तत्रापि मामाश्रयध्वमित्याह—**विवेक इति । तत्त्वेषु** तत्त्वत्रये । **अवितथविशेषग्रहतनुः**; अवितथः यथार्थो यो विशेषग्रहः असाधारणधर्मग्रहणं, सः तनुः स्वरूपं यस्य । तत्स्वरूपोऽयं विवेकश्च । **भवोदन्वतः** संसारसमुद्रस्य ये **दोषाः**, तेषां **प्रतिगमनिका** परिहारः; तत्स्वरूपा च **सुमतिः** । संसारे दोषदृष्टिः सुमतिः । संसारदोषः परिहर्तव्य इति मतिरित्यर्थः । परविषयपरमप्रीतिरूपा त्वमित्येवं समवेतास्त्रयोऽपि यूयम् । **तमःपारम्**; तमोगुणेनास्पृष्टम् । **त्यक्तत्रिगुणम्**; अतिक्रान्तत्रिगुणम् । आभ्यां पदाभ्यां परमपदगतमपीति लक्ष्यते । त्यक्तद्विविधशरीरं मामिति वा । **मां न त्यक्ष्यथ**; परमपदेऽपि भवद्भिः सहैव वर्तेयेति भावः ॥ ८१ ॥

**अत्रभवतः**; पूज्यस्य । **महंतो**-महान् । **एसो**-एषः । **वरो**-वरः । **महणिज्जो**-महनीयः । **जं**-यत् । **अय्यउत्तस्स**-आर्यपुत्रस्य । **सहधंमआरिणी**-

[1] महं वि एसो—ग.

[2] दिव्यश्रुतिचक्षुषः—क. ख.

दिव्यः संप्रति दुन्दुभिर्दिशि दिशि ध्वानैर्मुहुः श्रूयते
देवानामपि हावुहावुलहरी [1]विक्षोभयत्यम्बरम् ।
आरब्धप्रतिसंस्कृतैः[2] कृतमुखैरर्चिर्मुखैः श्रीपते-
राज्ञाधारिभिरातिवाहिकगणैरादिश्यते[3] पद्धतिः ॥ ८२ ॥

पुरुषः—(सहर्षोल्लासम्) अतस्तर्हि कृतकृत्यान् भवतः कृतार्थोऽहमामन्त्रये[4] ।

अलं कालप्रहाणेन प्रतीक्षे पश्चिमं दिनम् ।
अस्मदेकहितैषिभ्यः स्वस्ति वः साधयाम्यहम् ॥ ८३ ॥

### प्रभाविलासः

**दिव्य इति । देवानाम्**; मुक्तानाम् । "एतत्साम गायन्नास्ते" इत्यादिश्रुत्यर्थमाह—**देवानामिति। प्रतिसंस्कृतिः**; मार्जनसेचनपुष्पोपक्षेप-ध्वजपताकादिकरणम् ॥ ८२ ॥

**अलमिति । प्रहाणम्**; क्षेपः ॥ ८३ ॥

### प्रभावली

सहधर्मचारिणी । **होम्मि**-भवामि । **स भवान् अद्य** आसन्नसिद्धिरेवेति लब्धं दिव्यं चक्षुर्यस्याः, तस्याः । पूर्वं सिद्धैः सिद्धफलैः शोभनैर्निमित्तैरपि **सूच्यते** । तानि निमित्तानि दर्शयति—**दिव्य इति । संप्रति दिव्यो दुन्दुभिः दिशि दिशि मुहुर्मुहुः श्रूयते** । देवानां **हावुहावुलहरी**; हा वु हा वु इति सामध्वनिवीचिः । **अम्बरं विक्षोभयन्ती** सती मुहुः श्रूयते । **आरब्धा प्रतिसंस्कृतिः** प्रसाधनम् अलंकरणं यस्याः सा । **पद्धतिः**; वैकुण्ठमार्गः । **श्रीपतेः आज्ञाधरैः कृतमुखैः** सत्कारादिषु चतुरैः **अर्चिर्मुखैः** आतिवाहिकगणैः **आदिश्यते**; स्वामिन् इत इत एहीत्युपदिश्यते । एतानि सुनिमित्तानि ॥ ८२ ॥

**उल्लासः**; विजृम्भणम् । **तर्हीति । तर्हि कृतकृत्यान्** कृतोपकारान् युष्मान् कृतप्रयोजनोऽहम् **आमन्त्रये** गमनाय आपृच्छे । अयं पुरुषः परमपदगमनाय देहावसानदिनमाकाङ्क्षन् यावच्छरीरपातं पुण्यक्षेत्रपुण्यतीर्था-चरणाय जिगमिषुस्तदभ्यनुज्ञां प्रार्थयते—**अलमिति** । कालक्षेपणेन **अलम्** ।

[1] विक्षोभयन्त्यम्बरम्—ग. [2] संस्कृतिः—ख.
[3] आदर्श्यते—ग. [4] आमन्त्रयामि—क.

अपिच,

**ग्रहस्वप्ननिमित्तादिमोघ[1]चिन्तापराङ्मुखः ।**
**प्राप्तं प्राप्तमुपासीनः प्रवेक्ष्यामि परं पदम् ॥ ८४ ॥**

अहह, रसरुधिरपिशितमेदःकीकसमज्जाशुक्लमयकलेबरकारागारा[2]न्निष्क्रान्तः [3]शबरकुटीरकोटरात्सार्वभौमपितृसदनसौधाधिरोहणाय संत्वरमाण इव राजकुमारस्तत्तद्देशाधिकारिभिरातिवाहिकैरनितरसुलभेन देवयानेन त्रिगुणमरुकान्तारमतिवाहितस्तमःपारभूतं परमपदमधिरोक्ष्यामि । यत्र च,

प्रभाविलासः

**ग्रहेति** । अनेन योगिनो निमित्तस्वप्नादिदर्शनपरिपालनमप्यनिष्पन्नदशायामेवेति व्यञ्जितम् ॥ ८४ ॥

**प्रभावली**

शीघ्रमेव पुण्यक्षेत्रनिवासाय गमिष्यामि । कुत इत्यत आह—**पश्चिमं दिनम्**; शरीरावसानदिनम् । **प्रतीक्षे**; प्रतिपालयामि । तावत्कालं पुण्यक्षेत्रनिवासाय गच्छामीत्यर्थः । तदर्थम् **अस्मदेकहितैषिभ्यः** वः **स्वस्ति** । **अहं साधयामि**; पुण्यक्षेत्रसंचाराय गच्छामि ॥ ८३ ॥

यावद्देहपातं स्वं कृत्यं दर्शयति—**अपिचेत्यादि** । **ग्रहचिन्ता**; ग्रहस्थितिचिन्ता । **स्वप्नचिन्ता**; सुस्वप्नेन भवितव्यमिति चिन्ता । **निमित्तचिन्ता**; शोभनैर्निमित्तैर्भवितव्यमिति चिन्ता । आदिशब्देन सभ्यानुमतिर्गृह्यते । एवमादिषु **मोघचिन्तासु** व्यर्थचिन्तासु **पराङ्मुखोऽहं प्राप्तं** सुखं दुःखं वा प्रीतिपूर्वमनुभवन् अन्ते परमपदं **प्रवेक्ष्यामि** ॥ ८४ ॥

अथ भाविपरमपदाधिरोहणं विचिन्त्य संतुष्यति—**अहहेत्यादिना** । रसादिशब्दैः सप्त धातव उच्यन्ते । **रसः**; जलरूपः । **पिशितम्**; मांसम् । **मेदः**; वपा । **कीकसम्**; अस्थि । **मज्जा**; अस्थिगतरसविशेषः । **शुक्लम्**; रेतः । सप्तधातुमयं **कलेबरम्**; तस्मात् कारागृहात् निष्क्रान्तोऽहम् । निषादगृहकोणात् । **आतिवाहिकैः**; अतिवहनाधिकारिभिः । **अनितरः**; मुमुक्षुः । तत्सुलभेन

[1] मोह—ग. [2] कारागृहात्—ख. [3] शबरकुटी—छ.

सव्यं पादं [1]प्रसार्य श्रितदुरितहरं दक्षिणं कुञ्चयित्वा
जानुन्याधाय सव्येतरभुजमितरं[2] नागभोगे निधाय ।
पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन् शङ्खचक्रे
देवीभूषादिजुष्टो जनयति जगतां शर्म वैकुण्ठनाथः ॥ ८५ ॥

(परिक्रम्य सविनयमञ्जलिं बद्ध्वा)

दिवि भुवि च निविष्टान् देशिकान्दिव्यभूम्नः
प्रणतिनियतिवृत्तिः प्रार्थये कंचिदर्थम् ।
अधिजिगमिषुराद्यं धाम युष्मत्प्रभावात्
प्रियगतिरनुगृह्य प्रेक्ष्यतां भृत्य एषः ॥ ८६ ॥

**प्रभाविलासः**

**सव्यमिति । श्रितदुरितहरम्** ; आश्रितपापहरम् । सव्येतरभुजम् ; दक्षिणभुजम् । **नागभोगे** ; शेषशरीरे । **देव्यः** ; लक्ष्मीनीलाद्याः । **भूषा** ; कौस्तुभादिका । आदिपदेन वैजयन्त्यादि ॥ ८५ ॥

**दिवीति । दिवि** ; परमपदे । **प्रियगतिः** ; प्रियार्चिरादिगतिः॥८६॥

**प्रभावली**

**अमुमुक्षुदुर्लभेनेत्यर्थः । देवयानेन** ; अर्चिरादिमार्गेण । **प्रकृतिमरुकान्तारम् । तमसः पारभूतम्** । **यत्र** ; परमपदे । दक्षिणं पादं कुञ्चयित्वा संकोच्य । **दक्षिणभुजं** जानुनि दक्षिणे **निधाय । इतरं** वामं भुजं **नागस्य** शेषस्य **भोगे** शरीरे आधारभूते । अस्य **पश्चात्स्थितेन बाहुद्वयेन** आश्रित**प्रतिभटदमने शङ्खचक्रे धारयन्** । **देवीभिः** लक्ष्म्यादिभिः भूषणादिभिश्च । आदिशब्देनास्त्रपरिजनादि गृह्यते । तैः सेवितः प्रीतश्च । **श्रीवैकुण्ठलोकनाथः जगतां शर्म जनयति** । तत्रैव स्थितः सन् तत्तदनुरूपं जगतामुभयविभूतिगतानां **शर्म** सुखं महत् क्षुद्रं च **जनयति** ॥ ८९ ॥

**अथ** परमं पदं जिगमिषुरुभयविधानाचार्यान् प्रणम्य प्रार्थयते—**दिवीति** ।

[1] प्रसार्याश्रित—क. [2] सव्येतरमितरभुजं—क. ख ; यद्यप्ययमेव पाठः प्रायो लोके दृश्यते, तथापि सव्येतरभुजमितरमिति पाठे औचित्यं वर्तत इति ज्ञेयम् .

अपिच,

**एते मह्यमपोढमन्मथशरोन्माथाय नाथादय-**
**स्त्रय्यन्तप्रतिनन्दनीयविविधोदन्ताः स्वदन्तामिह ।**
**श्रद्धातव्यशरण्यदंपतिदयादिव्यापगाव्यापकाः**
**स्पर्धाविप्लवविप्रलम्भपदवीवैदेशिका देशिकाः ॥ ८७ ॥**

**प्रभाविलासः**

**एत इति । त्रय्यन्तैः** वेदान्तैः **प्रतिनन्दनीयाः** संतोष्टव्याः विविधोदन्ताः नानाविधवृत्तान्ता येषां ते । **श्रद्धातव्ययोः** रक्षकतया विश्वसनीययोः शरण्ययोः दंपत्योः श्रीश्रीशयोर्दयैव दिव्यापगा वियद्गङ्गा, तस्याः व्यापकाः व्यापयितारः । **स्पर्धायाः** कलहस्य **विप्लवस्य** उपद्रवस्य **विप्रलम्भस्य** वञ्चनायाश्च **वैदेशिकाः । नाथादयः** नाथमुनिप्रभृतयः आरोहेणावरोहेण च तदवधिकाः **देशिकाः । अपोढः** अपास्तः **मन्मथशरैः** अनङ्गबाणैः **उन्माथः** मथनं येन तस्मै **मह्यं** दासभूताय **स्वदन्तां** रोचयन्तु ॥ ८७ ॥

**प्रभावली**

**दिवि;** परमपदे ब्रह्मलोकादिषु च । **भुवि;** भूलोके च । निवसतो देशिकान् । **दिव्यो भूमा** महिमा येषां तान् । **प्रणतो** प्रणामे नियतवृत्तिः अहं **कंचिदर्थं** वक्ष्यमाणं **प्रार्थये । युष्मत्प्रभावात्** आद्यं **धाम** श्रीवैकुण्ठम् **अधिजिगमिषुः** अधिगन्तुमिच्छुः । **प्रिया** इष्टा **गतिः** वैकुण्ठगमनं यस्य सः । एष **भृत्यः;** एष दासजानः, अहमित्यर्थः । **अनुग्रहेण प्रेक्ष्यताम् ।** यद्वा अनुग्राह्यः कटाक्षविषयीक्रियताम् ॥ ८६ ॥

देशिकेषु विशिष्यासाधारणोपकारिषु श्रीनाथयामुनयतिवरादिषु मे प्रीतिर्वर्धतामित्याह—**एते इति । एते नाथादयः ।** कीदृशाः ? **त्रय्यन्तेन** वेदान्तेन श्लाघनीया **विविधाः** उदन्ताः येषां ते । पुनस्तान् विशिनष्टि—**श्रद्धातव्येति । श्रद्धातव्या** विश्वसनीया **शरण्यदिव्यदंपत्योः** दया, सैव **दिव्यापगा** तद्व्यापारः, तां लोके व्यापयन्तीति **व्यापकाः । स्पर्धेत्यादि । स्पर्धा;**

(इति विवेकसुमतिविष्णुभक्तिभिः[1] सप्रसादबहुमानं समीक्ष्यमाणः[2] सिषाधयिषितोत्तरकृत्यो निष्क्रान्तः)

**सुमतिः**—अय्यउत्त, अह किं पडिवालिअमोक्खदिअसस्स अम्हकुलवइणो अहिलसिअलाहो विलंबेज्ज[3] ?

(आर्यपुत्र, अथ किं प्रतिपालितमोक्षदिवसस्यास्मत्कुलपतेरभिलषितलाभो विलम्बेत ?)

**राजा**—देवि, अस्माभिरनया च महाप्रभावया विष्णुभक्त्या नित्यप्रत्यूढनिखिलान्तरायस्य तातस्य किं नाम संप्रति काङ्क्षितविलम्बकारणम् ? पश्य पश्य ;

**नन्वहं सुमतिजानिरेकधीस्त्वं विवेकसहधर्मचारिणी ।**
**आवयोर्मतमनन्यभावयोरर्थ्यमेतदचिरेण सेत्स्यति ॥ ८८ ॥**

**प्रभाविलासः**

**नन्विति । एकधीः** ; एकबुद्धिः ॥ ८८ ॥

**प्रभावली**

ईर्ष्या । **विप्लवः** ; परपीडा धर्मविप्लवो वा । **विप्रलम्भः** ; वञ्चनम् । एता एव **पदव्यः**, ताभ्यः **वैदेशिकाः** विदेशस्थाः । नाथादयो **देशिकाः** आचार्याः । **अपोढमन्मथशरोन्माथाय मह्यम्** ; **अपोढः** अपवाहितः, त्याजित इत्यर्थः । **मन्मथशराणाम् उन्माथः** यस्य । परित्याजितमन्मथशरबाधाय ; मन्मथशरबाधामपि मत्तोऽपोह्येति भावः । मह्यम् **इह** ; अस्मिन् देह एव ; **स्वदन्ताम्** । अतिप्रीतिविषया भवन्तु ॥ ८७ ॥

**सिषाधयिषितम्** ; साधयितुमिष्टम् **उत्तरकृत्यम्** पुण्यक्षेत्राभिगमनादि यस्य सः । **अय्यउत्त**-आर्यपुत्र । **अह किं**-अथ किम् । **पडिवालिअमोक्खदिअसस्स**-प्रतिपालितमोक्षदिवसस्य । **अम्हकुलवइणो**-अस्मत्कुलपतेः, पुरुषस्येत्यर्थः । **अहिलसिअलाहो**-अभिलषितलाभः । **विलंबेज्ज**-विलम्बेत । नित्यनिरस्त-

[1] भक्तीः—छ. [2] समीक्षमाणः—छ. [3] विलंबिज्जइ—ग.

सुमतिः—अय्यउत्त, [1]एण्हिं कहिं गओ एसो कअकज्जो महापुरिसो ?

(आर्यपुत्र, इदानीं कुत्र गत एष कृतकृत्यो महापुरुषः ?)

राजा—प्रिये, प्रतिवक्तव्यमेतत् भूतभाविसमस्तवस्तुवेदिन्या भगवत्या विष्णुभक्त्या ।

विष्णुभक्तिः—(निमीलितदृष्टिः प्रणिधानमभिनीय) नूनमनिकेतो [2]यत्रसायंगृहत्वमास्थितो यथालब्धवृत्तिर्योगी । अथवा ;

श्रीरङ्गं वृषभाचलं करिगिरिं श्रीमद्यदुक्ष्माधरं
साकेतं मधुरामुपैष्यति हरिक्षेत्रं बदर्याश्रमम् ।
अन्तः संभृतसप्ततन्त्ववभृथादा देहपातोदया-
द्यद्वा संप्रति यत्र कुत्रचिदसौ यत्रैकतानं मनः ॥ ८९ ॥

**प्रभाविलासः**

अनिकेत इति । यत्रसायंगृहः ; मुनिः । अनेन "अनिकेतः स्थिरमतिः" इति विवृतम् । श्रीरङ्गमिति । सप्ततन्तुरिति ; "तस्यैवं

**प्रभावली**

निखिलविघ्नस्य पुरुषस्य । किं नाम ; न किमपीत्यर्थः । विलम्बाभावादस्मासु तदर्थं नित्यं मङ्गलप्रार्थनाकारिषु सत्सु फलसिद्धिः शीघ्रभाविनीति सादरमाह—पश्य पश्येत्यादिना । नन्विति । सुमत्याः तव पतिरहं सिद्धौ एकधीर्ननु । विवेकस्य मम सहधर्मचारिणी त्वं च तत्रैकताना । इत्थमनन्यभावयोर्मतमस्य प्रार्थनीयम् । इदम् अचिरेण शीघ्रं सेत्स्यति । न संदेह इति शेषः ॥ ८८ ॥

दाणिं—इदानीम् । कुत्थ गओ-कुत्र गतः । एसो-एषः । किअकज्जो-कृतकृत्यः । महापुरिसो-महापुरुषः । अस्य प्रश्नस्योत्तरं सर्वज्ञया विष्णुभक्त्या वक्तव्यमित्याह—प्रिय इत्यादिना । प्रत्युत्तरं दातव्यम् । चक्षुषी निमील्य ; समाधि-

[1] दाणिं कुत्थ गओ इति प्रभावलीपाठः. [2] यत्रसायंगृहमास्थितः—क.

## प्रभाविलासः

विदुषो यज्ञस्यात्मा यजमानः" इत्यादिश्रुतिर्विवृता। **अवभृथादिति**; "यन्मरणं तदवभृथः" इति श्रुतिर्विवक्षिता। अवभृथो नाम यागपरिसमाप्तौ क्रियमाणः पुण्यो महोत्सवः। उक्तं हि ब्रह्मविन्मरणस्य पवित्रतमत्वम्—

"यत्तु ब्रह्मविदा त्यक्तमपि तन्मङ्गलं वपुः।
दृष्ट्वा स्पृष्ट्वा विमुच्येत ब्रह्महा ब्रह्महत्यया॥"

इति,

"ये वहन्ति महात्मानं दृष्ट्वा स्पृष्ट्वा द्विजातयः।
हयमेधफलं तेषामस्तीत्येवं विदुर्बुधाः॥"

इति च। उत्सवरूपत्वं चोक्तम्—

"तनुत्यजं न शोचेत्तु स्वजनं वैष्णवो जनः।
कः शोचति प्रियं बन्धुं कारागाराद्विनिर्गतम्॥"

इति॥ ८९॥

## प्रभावली

मभिनीयेत्यर्थः। अयं पुरुषः मुक्तवेश्मा। गृहं परित्यज्य यत्र सायं भवति तत्र गृहं यस्य तस्य भावमङ्गीकृतवान्। यथालब्धेन वृत्तिर्जीवनं यस्य सः। **योगी** जातः, नूनम्। पक्षान्तरमाह—**अथवेति**। यावद्देहपातं श्रीरङ्गादिदिव्यक्षेत्रमुपैष्यति। यद्वा यत्र मनस ऐकाग्र्यं तत्र कुत्रचिद्वर्तत इत्याह—**श्रीरङ्गमिति**। **वृषभाचलम्**; सुन्दरराजगिरिं, वेंकटगिरिं वा। **करिगिरिम्**; हस्तिगिरिम्। **यदुक्ष्माधरम्**; यादवाचलम्। **साकेतम्**; अयोध्याम्। **मधुराम्**; कृष्णावतारभूमिम्। **हरेः** श्रीमन्नारायणस्याश्रमं, बदरिकाश्रमम्। एतेष्वेकं वा सर्वं वोपैष्यति। कियत्पर्यन्तमित्यत्रादेहपातमित्याह—**अन्तरिति**। **अन्तःसंभृतः** मनस्यनुष्ठितः यः **सप्ततन्तुः** मखः न्यासाख्यः, तस्यावभृथस्थानीयो वर्तमानदेहपातो यावत् तावदवधि उपैष्यति। पुनरपि पक्षान्तरमाह—**यद्वेति**। **यत्रास्य मन एकतानम्** एकाग्रम् तत्र **यत्र कुत्रचित् देशे ग्रामे वा, संप्रति असौ पुरुषो वर्तेत**॥ ८९॥

अपिच,

स्वयं व्यक्तक्षेत्रे विपिनविषये वा विधिवशात्
प्रशस्ते दुष्टे वा क्वचन समये[1] त्यक्तवपुषः ।
मुकुन्दस्त्रय्यन्तप्रथितमहिमा [2]सोऽयमनघान्
प्रपन्नानुद्धृत्य स्वपदमनपायं शमयति ॥ ९० ॥

प्रभाविलासः

**स्वयमिति । दुष्टे क्वचन समय** इति निशादक्षिणायनादिकं न प्रतिबन्धकमित्युक्तम् । यथाह सूत्रकारः—"निशि नेति चेन्न, संबन्धस्य यावद्देहभावित्वात् । अतश्चायनेऽपि दक्षिणे" इति । यच्चोक्तम्—

"दिवा च शुक्लपक्षश्च उत्तरायणमेव च ।
मुमूर्षतां प्रशस्तानि विपरीतं विगर्हितम् ॥"

इति, तदविद्वद्विषयमित्यभाषि । "अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति" इति ब्रह्मविदश्चन्द्रप्राप्तिस्तु चन्द्रस्य विश्रमस्थानतयातिवाहिकत्वेन चोक्ता, वाक्यशेषे "तस्माद् ब्रह्मणो महिमानमाप्नोति" इति चन्द्रं प्राप्तस्यापि विदुषो ब्रह्मप्राप्तिश्रवणात् । यच्च गीतायाम्—"अग्निर्ज्योतिरहः शुक्लः" "धूमो रात्रिस्तथा कृष्णः" इत्यादिनोक्तं, तस्य न कालविशेषोपपादने तात्पर्यम्, किं तु योगिनां

प्रभावली

ननु यत्र कुत्रचिदिति कथमुच्यते ? पुण्यक्षेत्रे देहत्यजामेव खलु पुण्यलोकप्राप्तिरित्याशङ्क्य मुमुक्षोस्तथा देशनियमो नास्तीत्याह—**स्वयमिति** । **स्वयं व्यक्तक्षेत्रे**; श्रीरङ्गादौ वा भवतु । **विपिनविषये**; क्वचित् मरुभूमौ वा । प्रारब्धकर्मशेषात् **प्रशस्ते क्वचन समये वा** पुण्यकाले वा **दुष्टे** समये वा दक्षिणायनरात्र्यादिषु वा । त्यक्तशरीरान् अनघान् अघरहितान्, अघे कृतेऽपि कृतप्रायश्चित्तान्वा ।

[1] विषये—क.   [2] योऽयं—क.

अद्य चासौ निखिलजगदेकदेहिना नित्यनिरवद्येन देवेन निजनगरपर्यन्तमनघमपुनरावृत्तिमध्वानं निनीषितः । तेन च,

**देवर्षिभूतपितृमर्त्यऋणातिलङ्घी**
**दत्ताभयस्य कृपया [1]दृढभक्तिशाली ।**
**पत्युः समस्तजगतां परमं पदं तत्**
**प्राप्स्यत्यसौ गुरुजनैः प्रथमाधिरूढम् ॥ ९१ ॥**

**प्रभाविलासः**

योगाङ्गतया स्मर्तव्यत्वे । उपसंहारे "नैते सृती पार्थ जानन् योगी मुह्यति कश्चन" इत्युक्तत्वादिति ज्ञेयम् ॥ ९० ॥

**देवर्षीति ।** "जायमानो वै ब्राह्मणस्त्रिभिर् ऋणवा जायते । ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति ऋणत्रयं प्रसिद्धम् । "यद्भूतेभ्यो बलिं हरति यद् ब्राह्मणेभ्योऽन्नं ददाति" इति ब्रह्मयज्ञोक्तेन मर्त्यभूतऋणद्वयम् । आत्मऋणमेकम्, "देवर्षिपितृविप्राणामनृणोऽस्मि तथात्मनः" इति चक्रवर्तिवचनात्, "अनुभूतानि चेष्टानि मया चिरसुखानि च" इत्यात्मऋणापाकरणोक्तेश्च । अनेन

**प्रभावली**

**मुकुन्दो** मुक्तिभूमिप्रदः । **प्रपन्नान्** त्र्यन्तप्रथितमहिमा **सोऽयं मुकुन्दः** तीर्थे श्वपचगृहे वा **उद्धृत्य,** संसारादिति शेषः ; **अनपायं** पुनरावृत्त्यपायरहितं **स्वं** वैकुण्ठं **पदं** गमयति ॥ ९० ॥

अद्य च भगवता स पुरुषोऽर्चिरादिमार्गेण स्वपदं प्रापयितुमिष्यत इत्याह— **अद्य चेति ।** **निखिलजगताम् एकशरीरिणा ;** अन्तर्यामिणा । अन्तरात्मत्वेऽपि **नित्यनिरवद्येन ;** तद्गतदोषैः असंस्पृष्टेन । **देवेन ;** कल्याणैकतानतया प्रकाशमानेन । **निजनगरम् ;** वैकुण्ठपुरम् । **अनघम् ;** इतरमार्गदोषरहितम् । **निनीषितः ;** नेतुमिष्टः पुरुषः । सर्वेश्वरस्य भगवतः परमपदं प्राप्स्यतीत्याह—**देवर्षीति ।** पञ्चमहा-

[1] भुवि—क.

इदमपि किंचिदचिन्त्यमहिमशालिन्यमुष्मिन् महात्मन्यद्भुतमवलोकयामि । अद्य हि—

**कृतमिह दुरितं प्रमादवृत्त्या**
**किमपि मुकुन्दकृपानिमग्नमेनम् ।**
**पवनतनयवालवह्निनीत्या**
**न दहति धक्ष्यति योजितं परेषु ॥ ९२ ॥**

**राजा**—(सहर्षबहुमानम्) भगवति विष्णुभक्ते, [1]विष्णु-

**प्रभाविलासः**

"देवर्षिभूतात्मनृणां पितॄणां न किंकरो नायमृणी च राजन् ।
सर्वात्मना यः शरणं शरण्यं नारायणं लोकगुरुं प्रपन्नः ॥"

इति स्मारितम् ॥ ९१ ॥

**कृतमिति । वालवह्निः**; पुच्छपावकः ॥ ९२ ॥

**प्रभावली**

यज्ञोद्देश्यानां देवपितृभूतमर्त्यऋषीणाम् ऋणमतिलङ्घ्य वर्तमानः **दृढभक्तिशाली** परमभक्तिशाली असौ "सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" इति **दत्ताभयस्य समस्तजगतां पत्युः गुरुजनैः** विष्वक्सेनशठकोपमुनिप्रभृतिभिः **पूर्वमेवारूढं परमं पदं** शीघ्रं **प्राप्स्यति**; न विलम्बते ॥ ९१ ॥

पुरुषेऽद्भुतं दर्शयति—**कृतमिति । इह**; वर्तमानदेहे । **प्रमादवृत्त्या कृतम्**; प्रामादिकं दुरितं किमपि । **मुकुन्दकृपा**समुद्रे **निमग्नम् एनम्** हनुमद्वाले लङ्कायां राक्षससंधुक्षितवह्निन्यायेन पुरुषं **न दहति । परेषु** शत्रुषु भगवता **योजितं** परं **दहत्येव** । यथा लङ्कायां हनुमद्वालवह्निः सीतायाः कृपया स्वाश्रयं हनुमन्तमदहन्नेव राक्षसानदहत, तद्वदिति ॥ ९२ ॥

विष्णुसाक्षात्कारे विचक्षणायास्ते परिमितातिशयदर्शनमाश्चर्यं किम्? नाश्चर्यम् । अपरिमितातिशयं भगवन्तं साक्षात्कर्तुं समर्थायास्ते पुरुषमात्र-

[1] विष्ण—क. ख.

साक्षात्कारविचक्षणायास्ते किमेतावत्प[1]रिमितातिशयदर्शनमाश्चर्यम्।
(विचिन्त्य स्वगतम्) महाप्रभावैषा मम वन्दनीया। (प्रकाशम्)

विधिवशनियतेन विष्णुभक्ते
प्रणिपतनेन वयःक्रमाधिकोऽपि।
उचितमुपचरामि विश्वमान्यां
हरिपदपद्मरतिं [2]परामहं त्वाम्॥ ९३॥

(सुमतिमवलोक्य) प्रिये, त्वमप्येनामस्मत्प्रयुक्तप्रतिष्ठामप्यादिपूरुषमूर्तिमिव प्रणन्तुमर्हसि।

विष्णुभक्तिः—(सप्रश्रयम्) महाराज, अनादिसंसारसागरनिमग्नमस्मत्कुलपतिं पुरुषमुद्धृतवते पूर्वजाय भवते प्रतिप्रणाममभिरोचयामि।

प्रभाविलासः

विधीति। **विधिवशनियतेन;** शास्त्रविहितेन। **प्रणिपतनेन;** दण्डवत्प्रणामेन। **वयःक्रमाधिकः;** वर्षीयान्॥ ९३॥

प्रभावली

साक्षात्कारः किमाश्चर्यमिति भावः। एषापि; विष्णुभक्तिरपि। मयेति शेषः। पुरुषस्य विवेके जाते अनन्तरं विष्णुभक्तिरुत्पद्यते। अतो विवेकस्य कनीयसी विष्णुभक्तिः। तथापि वयःक्रममनपेक्ष्य भगवद्वल्लभां त्वां नमस्यामीत्याह—**विधिवशेति।** भो **विष्णुभक्ते वयःक्रमेण अधिकोऽपि** ज्येष्ठोऽपि **अहं हरिपदपद्मे पतिंवरां** विष्णुपदपद्ममेव स्वयं वृतवतीम्, तद्वल्लभामित्यर्थः। अत एव **विश्वेषां** ब्रह्मादीनामपि **मान्यां** भगवतोऽपि मान्यां त्वां **विधिवशः** शास्त्रवशः शास्त्रबलात् नियतिं प्राप्तेन अकरणे प्रत्यवायावहेन **प्रणिपतनेन** साष्टाङ्गनमस्कारेण **उचितं** यथा तथा उपचरामि॥ ९३॥

अस्माभिः क्रियमाणप्रतिष्ठां नारायणमूर्तिमिव। स्वेन प्रतिष्ठापितां विष्णुमूर्तिं स्वयमेव यथा नमस्यन्ति वृद्धाः। **उद्धृतवते;** संसारादिति शेषः। **पूर्वजाय;**

[1] परिमितातीन्द्रिय—छ. [2] वरामहं—ग.

[1]राजा—महायोगेश्वरि भगवति, मा मैवम् ,

किं विज्ञानैः किं तपोदानयज्ञैः
किं वान्यैश्च त्वत्परित्यागदीनैः ।
ज्ञातुं द्रष्टुं तत्त्वतश्च प्रवेष्टुं
शक्यं ब्रह्मानन्यभाजा त्वयैव ॥ ९४ ॥

**प्रभाविलासः**

**किमिति** । "तमेतं वेदानुवचनेन" इत्यादिश्रुतिविरोधपरिहाराय भक्त्यङ्गभावेन वेदानुवचनादीनामुपयोगमाह—**त्वत्परित्यागेति** । **ज्ञातुमिति** शास्त्रजन्यज्ञानं विवक्षितम् । **द्रष्टुमिति** साक्षात्कारः । **प्रवेष्टुमिति** परिपूर्णप्राप्तिः ; यथाविवक्षितसर्वाकारेणानुभव इति यावत् । तेन व्यूहविभवादिमात्रप्राप्तिव्यवच्छेदः । स्मर्यन्ते च साक्षात्कारान्मुक्तेरर्वाञ्चः प्राप्तिपर्वभेदाः—

"लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये ।
अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः ॥"

इति । **अनन्यभाजा** ; अनन्यप्रयोजनया अनन्यदेवताकया वा । **तत्त्वत** इति ज्ञानादिपदेषु त्रिष्वप्यन्वेति । **त्वयैव शक्यमिति** ; ज्ञानदर्शनप्राप्तिषु भक्तिपर्वभेदेन नान्योन्याश्रयादिदोषः । पूर्वजन्मसुकृतमूलसात्त्विकजनसंवादा-

**प्रभावली**

अग्रजाय । त्वया कृतप्रणामा प्रतिप्रणामं कर्तुमिच्छामि, अग्रजत्वात् कृतोपकारत्वाच्च । अप्रतिमप्रभावया त्वया नैवं वक्तव्यमित्याह—**महायोगेश्वरीत्यादिना** । **महायोगाः** ; ऋषयः । तेषामीश्वरो भगवान् । तस्य स्त्री महायोगेश्वरी । भो महायोगेश्वरि । किमिति । **त्वत्परित्यागदीनैर्विज्ञानैः** ; विष्णुभक्तिरहितविज्ञानैः । **किम्** ; केवलं विशेषज्ञानेन किं लभ्यते । केवलतपोदानयज्ञैश्च किं लभ्यते । तपः स्वधर्मानुष्ठानम् । **अन्यैः** ; स्वाध्यायाध्ययनतीर्थयात्राव्रताचरणादिभिः किं लभ्यते , न किमपीत्यर्थः । **ब्रह्म** ; परंब्रह्म । **तत्त्वतो ज्ञातुं द्रष्टुं** प्रवेष्टुं च **अनन्यभाजा** एकान्तवृत्त्या त्वयैव विष्णुभक्त्या शक्यम् ।

[1] विवेकः—क. छ.

**विष्णुभक्तिः**—(विचिन्त्य) भवत्वेतदेवमन्यथा वा। प्रत्येमि तव मत्समक्षमेव मनीषितं साधयतः स्वयमकर्तृत्वाभिमानाभिप्रायम्। सर्वथा निस्तरति तावदयमसौ निष्प्रत्यूहभगवदनुकम्पावलम्बितः पुरुषः सर्वदोषाकरं संसारसागरम्। प्रविशति च परमं पदम्। किं ते भूयः प्रियमुपहरामि ?

**राजा**—भगवति महानुभावे,

**प्रभाविलासः**

दिजनितं यथावच्छ्रवणानुगुणं किंचिदानुकूल्यरूपं भक्तिमात्रं शास्त्रजन्यज्ञानोत्पत्तौ सहकारि भवति। उत्कटदिदृक्षावहा परभक्तिः साक्षात्कारहेतुः। साक्षात्कृते तु परिपूर्णानुभवाभिनिवेशलक्षणा परमभक्तिः प्रवेशहेतुरिति। अत्र "नाहं वेदैर्न तपसा न दानेन न चेज्यया" "न देवयज्ञाध्ययनैर्न दानैः" "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप" इत्यादि स्मारितम्। अत्र फलसंपत्तेः प्रतिपादनात् फलप्राप्तिर्नाम प्रधानाङ्गमुक्तम् ॥ ९४ ॥

**प्रभावली**

"नाहं वेदैर्न तपसा न दानेन न चेज्यया।
शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥"

इति भगवद्वचनमत्रानुसंधेयम् ॥ ९४ ॥

**भवत्वेवमेतत्**; यद्विवेकेनोक्तं तपोदानादीनामप्रयोजकत्वं, तदेवं भवतु। **अन्यथा वा** भवत्वित्यर्थः। नन्वन्यथा वेत्यनुपपन्नम्, "न वेदयज्ञाध्ययनैः" इत्यादिविरोधादित्यत आह—**प्रत्येमीति**। **मनीषितम्**; समाधिम्। **साधयतः** पुरुषस्य **अकर्तृकत्वाभिमानाभिप्रायम्**; वेदाध्ययनाद्यङ्गोपकृतमनीषितसाधने योऽयमकर्तृत्वाभिमानलक्षणाभिप्रायः, तम्। **स्वयं प्रत्येमि**; जानामि। कर्तृत्वाभिमानविधुरकर्मानुष्ठानस्य विद्याङ्गत्वान्न विरोध इति भावः। **निस्तरति संसारसमुद्रम्**; **अयमसौ** पुरुषः निर्विघ्नभगवत्कृपया **अवलम्बितः** संसारसागरं निस्तरति। **सर्वथा** सर्वप्रकारेण। **परमं पदं प्रविशति च**। इदमेव किं तव

किं तत्प्रियं परमतः प्रतिपादनीयं
पद्मासहायपदपद्मजुषा भवत्या ।
पश्यामि यत्पुरुषमेवमपास्तपङ्कं
राकाशशाङ्कमिव राहुमुखाद्विमुक्तम् ॥ ९५ ॥

अपिच,

अपुनरुदयो मायामोहः स्थलीमधिशायितः
स्फुरति मुरभिद्भक्तिर्भव्या भवत्यनुपप्लवा ।
सरणिमपुनःप्रत्यावृत्तिं भजत्यनघः पुमान्
किमिह बहुभिः क्रीडत्यग्रे समीहितमद्य नः ॥ ९६ ॥

प्रभाविलासः

**किं तदिति । राकाशशाङ्कमिवेति;** "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्यते" इति श्रुत्यर्थ उक्तः ॥ ९५ ॥

**अपुनरिति । भव्या;** मङ्गलरूपा । **इह बहुभिः किं** प्रयोजनम्? **समीहितमग्रे क्रीडतीति** कार्यस्योपसंहारात् उपसंहारो नाम निर्वहणसंधेरङ्गमुक्तम्, "कार्यार्थोपसंहृतिरुपसंहारः" इति लक्षणात् ।

एवं साङ्गं नाटकमुदाहृतम् । इदमिह ज्ञातव्यम्—ज्ञातेतिवृत्तं धीरोदात्तनायकम् उद्धतोपनायकम् अनुल्लङ्घितौचित्यं लङ्घितानौचित्यं शृङ्गारशान्तवीररसाद्यन्यतमप्रधानम् उपसर्जनीभूतकरुणरसादिकं संधिपञ्चकान्वितं चतुःषष्ट्यङ्गसमेतम् उपसंध्युपेम् अलंकारैरलंकृतं पताकास्थानका-

प्रभावली

प्रियजातम्? भूयः किं ते प्रियमुपहरामि? इतः परं मे भवत्या प्रतिपादनीयं किं तत् प्रियम्? अतः परमित्यत्रातःशब्दार्थं दर्शयति—**पश्यामीति । अपास्तपङ्कं राहुमुखाद्विमुक्तं राकाशशाङ्कमिव** स्थितं **पुरुषमेवं पश्यामीति** यावत् ॥ ९५ ॥

अतः परं किं तत्प्रियं ममाभिलषितम्? सिद्धिरग्रे मम नृत्यतीवेत्याह—**अपिचेत्यादिना** । मायामोहः **अपुनरुदयः** अपुनरुत्पत्तिर्यथा भवति तथा **स्थलीं**

प्रभाविलासः

न्वितं विष्कम्भादिपञ्चकप्रपञ्चितं भारत्यादिवृत्तिपरिष्कृतं परिभाषाद्यशेषविशेष-विशेषितम् अवस्थानुकृतिविलसितं नाटकमिति। यथोक्तमभिनवगुप्तपादैः—

"अर्थप्रकृत्यवस्थात्मसंधिसंध्यङ्गवृत्तिमत्।
अर्थोपक्षेपकैर्युक्तं पताकास्थानकादिभिः।
अलंकारैः समायुक्तं संधिभिश्चोपसंधिभिः।
रसौचित्यविलासैश्च तदनौचित्यवर्जितम्।
धीरोदात्ताद्यवस्थानुकृतिर्नाटकमुच्यते॥"

इति। अत्र शान्तरसः पञ्चसंधिव्यापितया पुनः पुनरनुसंधीयमानः प्राधान्यं भजते। रसान्तरैरन्तरालवर्तिभिर्यः समावेशः, स तस्य प्राधान्यं नोपहन्ति। यथोक्तं ध्वनिकृता—

"प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने।
एको रसोऽङ्गी कर्तव्यस्तेषामुत्कर्षमिच्छता॥
कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते।
तदा रसस्यापि विधौ विरोधो नैव विद्यते॥"

इति। ननु विरुद्धरससमावेशेऽनौचित्यम्; तत्कथं रौद्रादिविरोधिरसैः शान्तरससमावेश इति चेत्, उच्यते—विरोधेऽपि रसानां विरोधिनोर्द्वयोः प्राधान्येन वर्णन एवानौचित्यम्। अङ्गाङ्गिभावेन वर्णने तु न दोषः। यथोक्तं ध्वनिकृता—

"अविरोधे विरोधे वा रसोऽङ्गिनि रसान्तरे।
परिपोषं न नेतव्यो यथा स्यादविरोधिता॥"

प्रभावली

रणभूमिम् अधिशायितः, निर्जित इत्यर्थः। भव्या मुरभिद्भक्तिः भवती अनुपद्रवा स्फुरति। विष्णुभक्तिस्त्वं निरुपद्रवा शोभस इत्यर्थः। पुमान् अयं पुरुषश्च अनघः पुण्यपापविनिर्मुक्तः पुनः प्रत्यावृत्तिरहितां सरणिम् अर्चिरादिं भजति।

किमन्यदहमिह भवत्याः सकाशादाशासे । तदापीदमस्तु—

(भरतवाक्यम्)

अङ्गीकुर्वन्त्वकलुषधियो नित्यमध्यात्मविद्या-
माद्यो धर्मः स्पृशतु वसुधामाशिषः पारवर्ती ।
देवः श्रीमान्निरवधिदयासिन्धुरस्मिन्प्रबन्धे[1]
वक्ता श्रोता वचनविषयः प्रीयतां वासुदेवः ॥ ९७ ॥

(इति निष्क्रान्ताः सर्वे)

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदये [2] निःश्रेयसलाभो नाम दशमोऽङ्कः ।

---

प्रभाविलासः

इति । अत्र परिपोषो नामान्तरालिकानां रसानां प्रधानेन सह तुल्यतया वर्णनम् । अत्राञ्जनकारस्तु विरोधाविरोधविचार एव न कर्तव्य इत्याह । अन्ये—शान्तरसः पुरुषाश्रयतया वर्णितः । रौद्रादयो विवेकमोहाद्याश्रयतया वर्णिता इति भिन्नाश्रयतया विरोधाभावमामनन्तीत्येषा दिक् ॥ ९६ ॥

**भरतवाक्यम्**; भरतस्य वाक्यम् । आशिषमाशास्ते—**अङ्गीकुर्वन्त्विति** । **अद्यो धर्मः**; कृतयुगधर्मः । **अस्मिन्**; नाटके । **निबन्धे**;

प्रभावली

परमपदं प्राप्नोति । एवं मोहनाशविष्णुभक्तिप्रकाशनपुरुषमोक्षणरूपप्रयोजनत्रयसिद्ध्या ममेष्टसिद्धिरग्रे नृत्यतीवेति । **भवत्याः** विष्णुभक्त्याः सकाशात्प्रार्थयामि॥९६॥

सर्वे अध्यात्मविद्यां परिपालयन्तु । निवृत्तिधर्मः भुवि वर्धताम् । एतत्प्रबन्धस्य प्रतिपाद्यो वक्ता श्रोता च वासुदेवो मम प्रीयतामित्याह—**अङ्गीकुर्वन्त्विति** । **अकलुषधियः**; शुद्धबुद्धयः । सर्वे **नित्यम् अध्यात्मविद्याम्**

[1] निबन्धे—छ. [2] विष्णुभक्तिप्रवेशो नाम—ग.

स्तोतुं निन्दितुमस्म[1]दुक्तमथवा सोढुं [2]समूढं जगत्
किं नश्छिन्नमनन्तचिन्तनरसे सुस्थे सुखं तस्थुषाम् ।
शिष्याः शिक्षितबुद्धयः श्रुतिपथे येषां वयं ये च न-
स्तत्संतोषसमर्पणक्षममिदं साडम्बरैः किं परैः ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेंकटेशाय वेदान्तगुरवे नमः ॥

---

### प्रभाविलासः

कृतौ । **श्रीमान्**; अनपायिलक्ष्मीसमेतः । **प्रीयताम्**; प्रीतो भवतु । अनेन प्रशस्तिर्नाम निर्वहणसंधेरङ्गमुक्तम्, "प्रशस्तिः शुभशंसनम्" इति लक्षणात् ॥ ९७ ॥

**इत्यात्रेयगोत्रसंभूतेन श्रीमदहोबिलनाम्ना विदुषा विरचिते संकल्पसूर्योदय-व्याख्याने प्रभाविलासाख्याने निःश्रेयसलाभो नाम दशमोऽङ्कः ।**

---

### प्रभावली

वेदान्तशास्त्रादिरूपां **परिपालयन्तु** । **आद्यो** धर्मः; कृतयुगधर्मः; मोक्षधर्म इत्यर्थः । कीदृशः? आशिषः अदृष्टवस्तूनां **पारवर्ती** पराकाष्ठाभूतः । **वसुधां स्पृशतु**; भूमौ वर्तताम् । **अस्मिन् प्रबन्धे**; संकल्पसूर्योदयाख्ये नाटके । **वक्ता**; प्रधानवक्ता; स्वस्य वीणास्थानीयत्वात् । **श्रोता च** सर्वान्तर्यामी स एव । यः श्रुत्वा फलं प्रयच्छति, स एव श्रोता नान्यः । **वचनस्य** प्रबन्धस्य **विषयः** प्रधानप्रतिपाद्यो यः सः श्रीवासुदेवः,

"सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
अतः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥"

इत्युक्तः । **प्रीयताम**; प्रसन्नो भवतु । न इत्यनुक्त्या सर्वेषामिति गम्यते । श्रीपराशरब्रह्मर्षिवत् जगतां भगवत्प्रसादरूपं मङ्गलं भद्रमाशास्ते । स यथा स्वप्रबन्धान्ते अपजन्मजरादिकां समृद्धिं जगतां भद्रमाशासितवान्, तथा अयमपि श्रीवेदान्ताचार्यः स्वप्रबन्धान्ते जगतां भगवत्प्रसादरूपं मङ्गलमाशास्ते ॥ ९७ ॥

[1] दुर्कि—क.   [2] सुमूढमिति प्रभावलीपाठः

## प्रभावली

स्वग्रन्थे मत्सरग्रस्तान् प्रत्याह—**स्तोतुमिति** । **अस्मदुक्तं** यत्किंचिद्गुणे सति **स्तोतुं**, दोषे सति **निन्दितुम्** , अथवा दोषे सत्यपि **सोढुं** जगत्सर्वं सुतरां मूढं मुग्धम । तेन **किं नश्छिन्नम्**; अस्माकं का हानिः ? कुतः ? **सुस्थे**; अपायरहिते । **अनन्तस्य** भगवतः **चिन्तनरसे** ध्यानास्वादे आनन्दे सुखं यथा तथा **तस्थुषां नः** । तर्हि त्वद्ग्रन्थेन किमित्यत्राह—**शिष्या इति** । **श्रुतिपथे**; वेदमार्गे । **शिक्षितबुद्धयः वयं येषां** शिष्यास्ते । ये चास्मच्छिष्याः सन्ति । **इदम्**; नाटकप्रबन्धरूपं वस्तु । **तत्संतोषसमर्पणक्षमम्**; तन्मुदं परिपालयतीत्यर्थः । **साडम्बरैः**; अन्तर्निःसारत्वेऽपि बहिः **ससंभ्रमैः** । **परैः**; इतरैः **किं प्रयोजनम्** ॥

[1]श्रीमान्रामानुजेत्याद्यमलसुरनदीपाविताशेषलोको
विद्यासंपन्निषद्या कविकथकघटामस्तकन्यस्तपादः ।
अव्याद्दिव्यप्रबन्धैः श्रुतिगहनगुहादीपमालासगन्धै-
र्वेदान्ताचार्यवर्यो गुणनिधिरिह मां सर्वतन्त्रस्वतन्त्रः ॥
ब्रह्मतन्त्रयतीन्द्रोक्तरहस्यार्थविचक्षणम् ।
श्रीशैलताततनयमनन्तार्यगुरुं भजे ॥

**इति श्रीनृसिंहराजाचार्यविरचितायां संकल्पसूर्योदयव्याख्यायां प्रभावल्यां निःश्रेयसलाभो नाम दशमोऽङ्कः ।**

समाप्तश्चायं ग्रन्थः

---

[1] अत्र—

श्रीमान् वेंकटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥
रामानुजदयापात्रं ज्ञानवैराग्यभूषणम् ।
श्रीमद्वेंकटनाथार्यं वन्दे वेदान्तदेशिकम् ॥
कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेंकटेशाय वेदान्तगुरवे नमः ॥

इति ध्यानश्लोका विवक्षिताः ।

अनुबन्धः १

# संकल्पसूर्योदयपद्यानामनुक्रमणिका

ऋ



ए



क

च



छ



ज



त

प

फ



ब

व

श

अनुबन्धः २

# उदाहृतवाक्यानामनुक्रमः ।

आ

इ

ई



उ



ऊ

त

द

ध



न

प

भ

य

र

ह



## ADDITIONS

# ABBREVIATIONS

अत्रि—अत्रिसंहिता
अधि—अधिकरणसारावलिः
अन—अनर्घराघवनाटकम्
अब्र—अष्टाक्षरब्रह्मविद्या
अभिनव—अभिनवगुप्ताचार्यः
अमृ—अमृतबिन्दूपनिषत्
अर्थ—अर्थशास्त्रम्
अशिखा—अथर्वशिखोपनिषत्
अष्टा—अष्टाध्यायी
अष्टादवि—अष्टादशविवादार्थसंग्रहः
असं—अलंकारसंग्रहः
अहि—अहिर्बुध्न्यसंहिता
आदि—आदिपर्व (महाभारते)
आदित्य—आदित्यपुराणम्
आध—आपस्तम्बधर्मसूत्रम्
आनु—आनुशासनिकपर्व (महाभारते)
आश्रौ—आपस्तम्बश्रौतसूत्रम्
आश्व—आश्वमेधिकपर्व (महाभारते)
इस—इतिहाससमुच्चयः
उत्त—उत्तरगीता
उत्पल—उत्पलनिघण्टुः
उद्यो—उद्योगपर्व (महाभारते)
ऋ—ऋग्वेदसंहिता
ऋखि—ऋग्वेदखिलऋचः
क—कठोपनिषत्
काञ्ची—काञ्चीमाहात्म्यम्
काद—काव्यादर्शः
काम—कामसूत्रम्
काव्य—काव्यप्रकाशः
काशि—काशिकावृत्तिः
कुरुका—कुरुकापुरीमाहात्म्यम्
कुव—कुवलयानन्दः
कौ—कौषीतकोपनिषत्
गपु—गरुडपुराणम्
गी or भगी—भगवद्गीता
गसू—अष्टाध्यायीगणसूत्रम्
चम—चमत्कारचन्द्रिका
छा—छान्दोग्योपनिषत्
जय—जयाख्यसंहिता
जयवि—जयतीर्थविजयः
तत्त्व—तत्त्वसारः
तत्त्वचि—तत्त्वचिन्तामणिः
तमु—तत्त्वमुक्ताकलापः
तै—तैत्तिरीयोपनिषत्

तैआ—तैत्तिरीयारण्यकम्
तैब्रा—तैत्तिरीयब्राह्मणम्
तैसं—तैत्तिरीयसंहिता
द or दश—दशरूपकम्
दया—दयाशतकम्
दशकु—दशकुमारचरितम्
दशा—दशावतारस्तोत्रम्
द्रमिड—द्रमिडभाष्यम्
धातु or धापा—धातुपाठः
ध्वन्या—ध्वन्यालोकः
नर—नरसिंहपुराणम्
नाट—नाटकपरिभाषा
नाट्य—नाट्यशास्त्रम्
नापु—नारदीयपुराणम्
नाम—नामलिङ्गानुशासनम्
नासं—नारदीयसंहिता
न्याति—न्यासतिलकम्
न्याद—न्यासदशकम्
न्यावि—न्यासविंशतिः
पञ्चवि—पञ्चपादिकाविवरणम्
परम—परमसंहिता
परा—पराशरसंहिता
पाता—पाद्मे पातालखण्डः
पाद्मो—पाद्मोत्तरखण्डः
प्ररु—प्रतापरुद्रीयम्
बाष्क—ऋग्वेदबाष्कलसंहिता
बृ—बृहदारण्यकोपनिषत्
बृसं—बृहत्संहिता
ब्रसू—ब्रह्मसूत्रम्
ब्रह्मा—ब्रह्माण्डपुराणम्
भरद्वा—भरद्वाजसंहिता
भा or भाग—भागवतम्
भाव—भावप्रकाशः (शारदातनयस्य)
मना or महा—महानारायणोपनिषत्
मनु—मनुस्मृतिः
महाप्र—महाभाष्यप्रदीपः
महो—महोपनिषत्
माण्डू—माण्डूक्योपनिषत्
माल—मालविकाग्निमित्रम्
मीसू—पूर्वमीमांसासूत्रम्
मु or मुण्ड—मुण्डकोपनिषत्
मै—मैत्र्युपनिषत्
याज्ञ—याज्ञवल्क्यस्मृतिः
यादव—यादवप्रकाशः
योया—योगयाज्ञवल्क्यम्
योवा—योगवासिष्ठम्
रघु—रघुवंशः
रति—रतिरहस्यम्
रत्ना—प्रतापरुद्रीयव्याख्या रत्नापणः
रस—रसमञ्जरी
रसा or रसु—रसार्णवसुधाकरः
रह—रहस्यत्रयसारः
रा—वाल्मीकिरामायणम्
रामो—रामोत्तरतापिन्युपनिषत्

रुद्र—रुद्रकोशः
लत—लक्ष्मीतन्त्रम्
लिपु—लिङ्गपुराणम्
वन—वनपर्व (महाभारते)
वपु—वराहपुराणम्
वस—वसन्तराजीयम्
वसि—वसिष्ठस्मृतिः
वाक्य—वाक्यपदीयम्
वार्त्ति—अष्टाध्यायीवार्तिकम्
विध—विष्णुधर्मः
विपु—विष्णुपुराणम्
विश्व—विश्वकोशः
विष्व—विष्वक्सेनसंहिता
वृक्ष—वृक्षरक्षामणिः
वेसं—वेदार्थसंग्रहः
वैज—वैजयन्तीकोशः
वैरा—वैराग्यपञ्चकम्
शाकु—अभिज्ञानशाकुन्तलम्
शाण्डि—शाण्डिल्यस्मृतिः
शान्ति—शान्तिपर्व (महाभारते)
शाब—शाबरभाष्यम्
शृति—शृङ्गारतिलकम्
शेध—शेषधर्मः
शेसं—शेषसंहिता
श्रीभा—श्रीभाष्यम्
श्रीसू—श्रीसूक्तम्
श्वे—श्वेताश्वतरोपनिषत्
षडसं—षडर्थसंक्षेपः
संक—संकल्पसूर्योदयः
संचू—संगीतचूडामणिः
संर—संगीतरत्नाकरः
संसम—संगीतसमयसारः
संसु—संगीतसुधाकरः
सक—सरस्वतीकण्ठाभरणम्
सभा—सभामर्व (महाभारते)
सर—सरस्वतीविलासः
साचि—साहित्यचिन्तामणिः
सात्त्व—सात्त्वतसंहिता
साद—साहित्यदर्पणम्
सुत्रि—सुभाषितत्रिशती
सुन्द—सुन्दरबाहुस्तवः
सुबा—सुबालोपनिषत्
स्तोर—स्तोत्ररत्नम्
हारीसं—हारीतसंहिता

# PUBLICATIONS OF THE ADYAR LIBRARY

## (The Theosophical Society, Adyar, Madras, 20, India)

| Year—No. | Title | Rs. | A. |
|---|---|---|---|
| 1910—1. | A PRELIMINARY LIST OF THE SAṂSKṚT AND PRĀKṚT MSS. in the Adyar Library. (Saṃskṛt-Devanāgarī) Boards ... 1-8 Cloth ... | 2 | 0 |
| 1912—2. | A DESCRIPTIVE CATALOGUE OF THE SAṂSKṚT MSS. in the Adyar Library. *By* F. O. Schrader, Vol. I, Upaniṣads Cloth ... | 5 | 0 |
| 3. | THE MINOR UPANIṢADS (Saṃskṛt) critically edited for the Adyar Library. *By* F. O. Schrader, Vol. I.—Saṃnyāsa Cloth ... | 10 | 0 |
| 1916—4. | AHIRBUDHNYA-SAṀHITĀ OF THE PĀÑCARĀTRA ĀGAMA (Saṃskṛt), 2 Vols. Cloth ... | 10 | 0 |
| 5. | INTRODUCTION (English) TO THE PĀÑCARĀTRA AND THE AHIRBUDHNYA SAṀHITĀ. *By* F. O. Schrader. Cloth ... | 3 | 0 |
| 1920—6. | YOGA UPANIṢADS—20—with the Commentary of S'ri Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1921—7. | SĀMĀNYA VEDĀNTA UPANIṢADS—24—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1923—8. | VAIṢṆAVA UPANIṢADS—14—with the Commentary of S'ri Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 4 | 0 |
| 1925—9. | S'AIVA UPANIṢADS—15—with the Commentary of S'ri Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 3 | 0 |
| 10. | S'ĀKTA UPANIṢADS—8—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 2 | 8 |
| 1926—11. | CATALOGUE OF SAṀSKṚT MSS. in the Adyar Library (Revised). 2 Vols. Each ... | 3 | 12 |
| 1929—12. | SAṀNYĀSA UPANIṢADS—17—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* T. R. Chintamani, and the Paṇḍits of the Adyar Library ... | 4 | 0 |

| | | Rs. | A. |
|---|---|---|---|
| 13. | RUKMIṆĪKALYĀṆA MAHĀKĀVYA by Rājacūḍāmaṇi Dīkṣita. Edited *by* the Paṇḍits of the Adyar Library and T. R. Chintamani ... | 2 | 0 |
| 1933—14. | UNPUBLISHED MINOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library ... | 5 | 0 |
| 1936—15. | TEN MAJOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library | | |
| | Īs'a to Aitareya, Vol. I ... | 4 | 8 |
| | Chāndogya and Bṛhadāraṇyaka, Vol. II ... | 6 | 0 |
| | Vols. 1 and 2, Boards ... | 9 | 8 |
| 1937—16. | MELARĀGAMĀLIKĀ of Mahāvaidyanātha S'ivan. Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 2 | 0 |
| 1938—17. | SAṀGRAHACŪḌĀMAṆI—Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 18. | PRATYABHIJÑĀHṚDAYAM (The Secret of Recognition) with English Translation and Notes *by* K. F. Leidecker ... | 3 | 0 |
| 19. | BHAVASAṄKRĀNTI-SŪTRA AND NĀGĀRJUNA'S BHAVASAṀKRĀNTI S'ĀSTRA—with the Commentary of Maitreyinātha—with English Translation *by* Paṇḍit N. Aiyaswami Sastri ... | 2 | 4 |
| 20. | YOGA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar, and Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 21. | * WHERE THEOSOPHY AND SCIENCE MEET (in four Parts) by a body of experts—Edited *by* Professor D. D. Kanga : | | |
| | Part 1. Nature—From Macrocosm to Microcosm ... | 2 | 8 |
| | Part 2. Man—From Atom to Man ... | 2 | 8 |
| | Part 3. God—From Humanity to Divinity ... | 2 | 8 |
| | Part 4. Some Practical Applications ... | 2 | 8 |
| 1939—22. | ṚGVEDAVYĀKHYĀ, MĀDHAVAKṚTĀ—Edited *by* Prof. C. Kunhan Raja. Vol. I ... | 6 | 0 |
| 1940—23. | THE NUMBER OF RASAS *by* V. Raghavan, Department of Saṁskṛt, University of Madras ... | 3 | 0 |
| 1941—24. | SĀMĀNYA VEDĀNTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 25. | BHAGAVADGĪTĀRTHAPRAKĀS'IKĀ of Upaniṣad Brahmayogin (Saṁskṛt). Edited *by* the Paṇḍits of the Adyar Library ... | 4 | 0 |

** Published under the auspices of the Adyar Library Association.*

| | | Rs. | A. |
|---|---|---|---|
| 26. | SĀMAVEDA-SAṀHITĀ—With the Commentaries of Mādhava and Bharatasvāmin. Edited *by* Prof. C. Kunhan Raja ... | 6 | 0 |
| 27. | RĀJA DHARMA (Dewan Bahadur K. Krishnaswami Rao Lectures, 1938, University of Madras) *by* Rao Bahadur K. V. Rangaswami Aiyangar ... | 3 | 8 |
| 28. | VARIVASYĀRAHASYA of Bhāsurānandanātha (2nd Edition) *by* Paṇḍit S. Subrahmanya Sastri (with English Translation) ... | 2 | 8 |
| 29. | VYAVAHĀRANIRṆAYA OF VARADARĀJA—Edited *by* Rao Bahadur K. V. Rangaswami Aiyangar and A. N. Krishna Aiyangar ... | 15 | 0 |
| 30. | SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. I. (Adhyāya 1) ... | 9 | 0 |
| **1942**—31. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 1 ... | 5 | 0 |
| 32. | ĀLAMBANAPARĪKṢĀ AND VṚTTI *by* Diṅnāga with English translation, Tibetan text etc. *by* Paṇḍit N. Aiyaswami Sastri ... | 3 | 8 |
| 33. | SOME CONCEPTS OF ALAṄKĀRA S'ĀSTRA *by* V. Raghavan, University of Madras ... | 4 | 0 |
| 34. | VEDĀNTAPARIBHĀṢĀ—with English translation and Notes *by* Prof. S. S. Suryanarayana Sastri ... | 2 | 12 |
| 35. | A DESCRIPTIVE CATALOGUE of the Sanskrit Manuscripts in the Adyar Library *by* K. Madhava Krishna Sarma. Vol. I—Vedic ... | 15 | 0 |
| 36. | S'RĪ PĀÑCARĀTRA RAKṢĀ of S'rī Vedānta Des'ika—Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar and Vedānta S'iromaṇi T. Venugopalacharya ... | 4 | 8 |
| 37. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 2 ... | 6 | 0 |
| 38. | CATURDAS'ALAKṢAṆĪ OF GADĀDHARA with three commentaries—Edited *by* Paṇḍit N. Santanam Aiyar. Vol. I ... | 4 | 8 |
| **1943**—39. | PHILOSOPHY OF VIS'IṢṬĀDVAITA *by* Prof. P. N. Srinivasachari ... | 10 | 0 |
| 40. | VĀDĀVALĪ OF JAYATĪRTHA with English translation and Notes *by* P. Nagaraja Rao ... | 4 | 0 |
| 41. | SPINOZIAN WISDOM OR NATURAL RELIGION *by* James Arther ... | 2 | 12 |

| | | Rs. | A. |
|---|---|---|---|
| 42. | UṢĀṆIRUDDHA of Rāmapāṇivāda. Edited *by* Paṇḍit S. Subrahmanya Sastri and Prof. C. Kunhan Raja ... | 3 | 8 |
| 1944—43. | SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. II. (Adhyāyas 2—4) ... | 9 | 0 |
| 44. | ĀS'VALĀYANAGṚHYASŪTRA—With the Commentaries of Devasvāmin and Nārāyaṇa. Edited *by* Svami Ravi Tirtha. Vol. I (Adhyāya 1) ... | 6 | 4 |
| 45. | ALPHABETICAL INDEX OF SANSKRIT MANUSCRIPTS in the Adyar Library ... | 10 | 0 |
| 46. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, Part 3 ... | 7 | 0 |
| 47. | ĀTMAN IN PRE-UPANIṢADIC VEDIC LITERATURE *by* H. G. Narahari ... | 8 | 0 |
| 1945—48. | RĀGAVIBODHA OF SOMANĀTHA with his own commentary Viveka. Edited by Paṇḍit S. Subrahmanya Sastri ... | 6 | 0 |
| 49. | ACYUTARĀYĀBHYUDAYA OF RĀJANĀTHA ḌIṆḌIMA—Sargas 7 to 12. Edited *by* A. N. Krishna Aiyangar ... | 3 | 8 |
| 50. | ANCIENT WISDOM OF WALES *by* D. Jeffrey Williams ... | 1 | 4 |
| 51. | SAṀGĪTARATNĀKARA OF S'ĀRṄGADEVA—Vol. I. Chapter I. English Translation *by* Prof. C. Kunhan Raja. Cloth Rs. 4-8. Boards ... | 4 | 0 |
| 52. | VAIṢṆAVA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti ... | 10 | 0 |
| 1946—53. | NYĀYAKUSUMĀÑJALI of Udayanācārya—Translated into English *by* Svami Ravi Tirtha. (Vol. I – Books i and ii)... | 4 | 0 |
| 54. | PRĀKṚTAPRAKĀS'A OF VARARUCI with the Commentary of Rāmapāṇivāda. Edited *by* Prof. C. Kunhan Raja and Paṇḍit K. Ramachandra Sarma ... | 4 | 4 |
| 55. | SPHOṬAVĀDA OF NĀGES'A—Edited *by* Paṇḍit V. Krishnamacharya with his own Commentary ... | 3 | 12 |
| 1947—56. | THE CRADLE OF INDIAN HISTORY *by* C. R. Krishnamacharlu ... | 3 | 8 |
| 57. | UNMATTARĀGHAVA OF VIRŪPĀKṢA—Edited *by* Paṇḍit V. Krishnamacharya ... | 1 | 12 |
| 58. | ORIGIN AND SPREAD OF THE TAMILS (Sankara-Parvati Lectures, 1940, University of Madras) *by* V. R. Ramachandra Dikshitar ... | 3 | 8 |
| 59. | JĪVĀNANDANAM OF ĀNANDARĀYAMAKHIN. Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar with his own Commentary. ... | 20 | 0 |

